प्राधान्याद् विभक्तेः प्रागेव छन्दोनियताक्षरे यतिमासादयेदित्यर्थमपेक्षमाणस्य श्रोतुरमनोरञ्जनं स्यात् ॥ १ ॥

अथार्थबुबोधयिषयैव प्रवर्तमानस्तु नूनमर्थानुरोधेनैव छन्दोवृत्तं प्रयोजयन्नार्थिक-यतिप्राधान्याद् विभक्त्यन्ते यतिमासादयेदिति छन्दोयाथात्म्यमपेक्षमाणस्य श्रोतुरमनो-रञ्जनं स्यात् ॥ २ ॥ सेयमनवक्लृप्तिः । अतः स्थाने कृतं विभक्तिकृतपदे यतिप्रतिषेध-शास्त्रमिति दिक् ॥

इति यतिदोषवादः ।

---

## अथ पञ्चाङ्गतावादः—

ननु यदि सर्वस्यैवार्थजातस्यैकान्ततश्छन्दोबद्धत्वं स्वीक्रियते, तत्तर्हि नूनमिदं छन्दो-ऽपि छन्दोबद्धं स्यात्; स तर्हि पद्यच्छन्दोवेदः किमिति पञ्चाङ्ग एवोच्यते? न च्छन्दसा षडङ्गः प्रतिविधीयते?। अथ–यदि नेदं छन्दश्छन्दोबद्धमिति मन्यसे, तत्तर्हि छन्दसः सर्वानुगतत्वप्रतिज्ञाहानिरिति चेत्,–सत्यम् । यथेदं ब्रह्मणो व्यापकत्वं मन्यन्ते तथेदं द्रष्ट-व्यम् । यदि नामास्य ब्रह्मणो ब्रह्मवृत्तित्वमाख्यायते तत्तर्हि द्वैतं भवति । अद्वितीयं तु ब्रह्मेत्याचक्षते ब्रह्मविदः । यदि तु ब्रह्मवृत्तित्वं नास्तीत्यभिमन्यते, तत्तर्हि तस्य व्यापकत्वप्रतिज्ञाहानिः प्रसज्यते । अथ यद्यनवस्थादोषात् तेजःशब्दप्रमाणादि-वदस्य ब्रह्मणः स्वरूपेणावभासमानस्य नेतरापेक्षेत्युच्यते, तत्तर्हि तुल्यं छन्दोवेदे-ऽपि । स्वरूपेणैव छन्दसां छन्दोबद्धत्वादितरच्छन्दोऽनपेक्षणात् । परे त्वाहुः—भवति नूनं गत्यध्वपरिच्छित्तिर्नाम छन्दसां छन्दो लिप्यध्वपरिच्छित्तेश्छन्दोलिपिच्छन्दस्त्व-वत् । सा चाध्वपरिच्छित्तिः प्रत्ययो भवति । यया परिच्छिन्नानामनेकेषामायतन-साम्येन प्रवर्तनं दृश्यते । आयतनमेव तज्जातीयेतरायतनसाम्यापेक्षया अध्वपरिच्छि-त्तिरित्युच्यते । अवश्यं हि सर्वस्याप्येतस्य वस्तुजातस्य स्वरूपसंपादनाद्यन्योद्देशेन प्रवर्तमानस्य कश्चिदध्वा भवति । तेनाध्वना प्रक्रममाणस्य सौकर्यं सौन्दर्यं चानुभूयते । स्वमार्गात् प्रच्यवमानस्य च तस्य क्लिष्टत्वं कुरूपत्वं च जायते । तस्मादयमध्वयो-गश्छन्दसां छन्दः । नन्वेवं तर्हि पद्यच्छन्दोवेदस्य षड्भिरङ्गैर्भवितव्यमिति चेत्,–सत्यम् । अस्ति षडङ्गो वेदत्वात् । वेदस्य षडङ्गत्वनियमात् । स्वल्पविषयत्वात्तु नायमध्वयोगः पार्थक्येनेह निरूपित इति द्रष्टव्यम् ॥

इति छन्दोवेदपञ्चाङ्गतावादः ।

---

## अथ छन्दोविज्ञानसार्थकतावादः ।

इदं तावच्छन्दोविज्ञानशास्त्रमनारम्भणीयमनर्थकत्वात् । चतुरर्थं हि शास्त्रमा-रभ्यते—अविज्ञातार्थज्ञापनार्थं, ह्येयार्थनिरसनार्थं सामर्थ्यम्–अशेषोद्रेकार्थम्, इतरवेदोप-कारार्थं चेति । तत्रेदं छन्दोविज्ञानशास्त्रं नैषामन्यतमं कमप्यर्थं संसाधयितुमीष्टे—

(१) कस्तावच्छन्दसामविज्ञातोऽर्थः शास्त्रेण विज्ञाप्यः ?। स्वरूपं वा ? नामधेयं वा ? प्रयोगनियमो वा ? छन्दोविज्ञानमात्रेणाभ्युदययोगो वा ? । नाद्यः, ऋङ्मन्त्रादिपाठाद् वैदिकानां, काव्यादिपाठाद् लौकिकानां यावत्प्रयुक्तच्छन्दसां स्वरूपस्य प्रतिपत्तिसौलभ्यात्। प्रयुक्तातिरिक्तच्छन्दसां तु वैदिकानामनभिधानमेव । लौकिकानां पुनः साकल्येन विज्ञानस्येहाप्यसंभवः, अनन्तत्वात् "शेषः प्रचितः ।" (७।३५।८।१) "अत्रानुक्तं गाथा" इति सूत्राभ्यां पिङ्गलेन विशेषतः सर्वच्छन्दःस्वरूपनिर्वचनाशक्यत्वप्रतिबोधनात्,

"कश्छन्दसां योगमावेद धीरः को धिष्ण्यां प्रति वाचं पपाद ।

कमृत्विजामष्टमं शूरमाहुर्हरी इन्द्रस्य निचिकाय कःस्वित् ॥" (ऋ.सं.८।६।१७।४)

इति मन्त्रयता भगवता वेदपुरुषेणापि सर्वात्मना छन्दोयोगविज्ञानस्याशक्यत्वप्रतिबोधनात् ॥ १ ॥ न द्वितीयः—नामविशेषेण छन्दःस्वरूपे विशेषानाधानादिच्छानुरोधितया तादृशतुच्छफलार्थमेतावतो महतः शास्त्रौघस्यारम्भानावश्यकत्वात् ॥ २ ॥ न तृतीयः—अमुष्मिन्नवकाशे स्रग्धरैव प्रयोक्तव्या, न शार्दूलविक्रीडितं मन्दाक्रान्ता वेत्येवं विध्यभावात्, तत्तच्छन्दःप्रयुक्तावद्यापि लोके कामचाराच्च ॥ ३ ॥ न तुरीयः—छन्दोविज्ञानमात्रेणादृष्टाभ्युदयकल्पनाया निर्बीजत्वात् । तस्मान्नाविज्ञातार्थज्ञापनार्थं छन्दोविज्ञानशास्त्रमारम्भणीयं भवति ।—

(२) अथ न हेयार्थनिरसनायापीदं शास्त्रमुपयुज्यते । गौः शब्दः प्रयोक्तव्यः साधुत्वात् न गावी गोणी गोता गोपोतलिकेत्येवमादयः, असाधुत्वादिति हि यथा व्याकरणशास्त्रेण साधुशब्दान्वाख्यानेनासाधुशब्दानां हेयत्वं विधीयते; न तथानेन छन्दःशास्त्रेण छन्दसां साधुत्वासाधुत्वाभ्यामुपादेयहेयव्यवस्था क्रियते, प्रस्तारसिद्धस्वरूपातिरिक्तस्य हेयस्याप्रसिद्धेः । ट ण ठं डु ढे न यत्र च्छन्दःसिद्धिस्तत्र प्रमादतोऽप्येकडकाराधिक्ये टणठंडु डढेनापि छन्दोऽन्तरसिद्धिः संभवत्येव, न च तत्र शास्त्रविरोधं पश्यामः । तस्माच्छन्दःसिद्धौ हेयोपादेयव्यवस्थाराहित्यादनर्थकमिदं छन्दःशास्त्रम् ॥

(३) अथ न छन्दःशास्त्रमध्येतुस्तदध्ययनेन कश्चन सामर्थ्यसमुद्रेको दृष्टः । हेयनिरसनपुरःसरमुपादेयमुपाददानो हि व्यवहारकुशलः साधीयसाभ्युदयेन युज्येत, वियुज्येत चानिष्टकरेणेति तत्रास्य सामर्थ्यमुद्भूतमिव विज्ञातं स्यात्। न चेह तथा छन्दःशास्त्रे हेयोपादेयव्यवस्थां पश्यामः, ततो नैतदध्ययनेन कथंचित्कुत्रचिदर्थे सामर्थ्यातिरेकमनुभावयामः ॥—

(४) अथ नेतरवेदोपकारकत्वमप्यस्य शास्त्रस्य संभवति । यथा हि—नाट्यवेदोपकारको नृत्यवेदः, नृत्यवेदोपकारको वाद्यवेदः, वाद्यवेदोपकारकश्च गेयवेदः; यथा वा वाग्वेदाङ्कवेदक्रियावेदाः सर्ववेदोपकारका इष्यन्ते ।—न च तथेह कंचिद्वेदं पश्यामो योऽन्तरेण छन्दोविज्ञानमपर्याप्तः स्यात् ॥

ननु चास्ति यज्ञवेदो योऽन्तरेण छन्दोविज्ञानमपर्याप्तः स्यात्, तथाहि—गवामयने पूर्वस्मिन् पक्षसि एकचत्वारिंशदधिकशतसंख्याकेषु चतुर्विंशाभिद्भविकस्वरसामाभिधा

नेष्वहःसु ब्रह्मसाम्नोभिवर्तस्यैकत्वेऽपि प्रगाथाः प्रत्यहं भेदेन प्रयुज्यन्ते। तत्र के ते स्तोत्रीयाः प्रगाथा? इत्याकाङ्क्षायाम् "पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्ते। तेष्वान्तेषु छन्दसी संयुज्यैतव्यम्। चतुरुत्तरैरेव छन्दोभिरेतव्यम्। तदाहुरनवक्लृप्तानि वा एतानि छन्दांसि माध्यन्दिने, बृहत्या चैव त्रिष्टुभा चैतव्यम्"—इत्येवं ताण्डिश्रुतौ दाशतयीसमाम्नातेनाष्टाविंशतिशतप्रमितप्रगाथतृचसमुदायेन तावदहःसु प्रगाथलाभे तदतिरिक्तेषु त्रयोदशस्वहःसु प्रगाथलाभार्थं त्रयः पक्षा विधीयन्ते। ते चैते प्रगाथा न चान्तरेण शास्त्रमध्यवसितुं शक्याः, नापि वा तमन्तरेण प्रगाथप्रयोगं ज्योतिष्टोमः पर्याप्नोति; एवमितरत्राऽप्येकान्ततश्छन्दोविज्ञानमपेक्ष्यते प्रतियज्ञम्। अत एव च "यो ह वा अविदितार्षेयछन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पद्यते वा म्रियते पापीयान् भवति। तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" (छं.ब्रा. ३।७।५) इति श्रूयते।

'मन्त्राणां दैवतं छन्दो निरुक्तं ब्राह्मणान् ऋषीन्।
कृत्तद्धितादींश्चाज्ञात्वा यजन्तो यागकण्टकाः॥ १॥
अविदित्वा ऋषिच्छन्दोदैवतं योगमेव च।
योध्यापयेज्जपेद्वापि पापीयान् जायते तु सः॥ २॥
ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते॥ ३॥'

इति स्मर्यते च। भगवान् कात्यायनोऽप्याह—"छन्दांसि गायत्र्यादीनि एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजति याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवति। अथान्तरा श्वगर्तं वापद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवति। अथ विज्ञायैतानि योऽधीते तस्य वीर्यवत्—अथ योऽर्थवित्तस्य वीर्यवत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते" इति॥ तस्मात् सन्त्येव भूयांसि छन्दःशास्त्रस्य प्रयोजनानि तद्विज्ञानमन्तरेण चायं यज्ञवेदो निर्वीर्यो यातयामो भवति, तस्मादस्ति यज्ञवेदोपकारकत्वं छन्दःशास्त्रस्य—

यद्यपि दृष्टान्तमुद्रया नाट्यनृत्यवाद्यगेयवेदानामुत्तरोत्तरस्य पूर्वपूर्ववेदोपकारकत्वमाख्यायते, तावतापि छन्दोवेदस्यैव सर्वोपकारकत्वमाख्यातं भवति; गेयवेदस्य छन्दोवेदानतिरिक्तत्वात्। तस्मादस्ति वाद्यादिवेदोपकारकत्वं छन्दःशास्त्रस्य॥—

अथ किं बहुना? येयं शिल्पविद्या लोके नितान्तफलोपधायकतया प्रतिपद्यते, सैषा नूनमर्थच्छन्दोविद्योपजीव्या भवति—अर्थच्छन्दोविद्यानतिरिक्तैव वा। 'शिल्पं छन्द' इति श्रुतेः। सर्वं चेदं सचराचरं जगन्मण्डलं दृश्यते विश्वकर्मणः शिल्पम्। तथा प्राणिजातैरपि क्रियमाणं तत्तत्कर्म दृश्यते शिल्पमेवानुलम्बितम्। सर्वे च विद्यानिबन्धा रचनावैचित्र्यात्मकेन केनापि शिल्पेनैवानुगता भवन्ति। तस्माच्छिल्पविद्यात्मनाप्यस्त्येव सर्ववेदोपकारकत्वं छन्दःशास्त्रस्य॥ १॥

यदप्युक्तं—नास्य छन्दःशास्त्रस्य विज्ञातृषु सामर्थ्यविशेषोद्रेकादिफलोपधायकत्वमस्तीति, तदप्यस्त एव प्रत्याख्यातं भवति "अविदित्वा योऽधीते तस्य ब्रह्म निर्वीर्यं, स पापीयान् भवति, अथ विज्ञायैतानि योऽधीते तस्य ब्रह्म वीर्यवत्, स जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यते"—इत्येवमाचक्षाणेन भगवता कात्यायनेनान्वयव्यतिरेकाभ्यां छन्दोविज्ञाने एव यज्ञवेदसाध्ययावत्फलोपधायकत्वप्रतिपादनात्) श्रूयते चाभ्युदयसमर्पकत्वं छन्दोविज्ञानस्य। तथाहि—"तस्योष्णिग् लोमानि, त्वग् गायत्री, त्रिष्टुब्मांसम्, अनुष्टुप् स्नावानि, अस्थि जगती, पङ्क्तिर्मज्जा, प्राणो बृहती, स छन्दोभिश्छन्नः। यच्छन्दोभिश्छन्नस्तस्माच्छन्दांसीत्याचक्षते।" इत्याख्याय "छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणो यस्यां कस्यांचिद्दिशि कामयते" ((ऐ.आ. २।१।६) इत्यारण्यके समाम्नायते, तस्मात् पुरुषस्य पापसंबन्धं वारयितुमाच्छादकत्वाच्छन्द इत्युच्यत इत्यस्ति प्रयोजनं छन्दःशास्त्रस्य ॥

तथा तैत्तिरीया अप्यामनन्ति—"प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वा तिष्ठन् तं देवा बिभ्यतो नोपायन् ते छन्दोभिरात्मानं छादयित्वोपायन् तच्छन्दसां छन्दस्त्वम्" (तै.सं. ५।६।६) इति। तस्माच्चीयमानाग्निसन्तानस्य छादकत्वाच्छन्दस्त्वमित्यस्ति प्रयोजनं छन्दःशास्त्रस्य ॥ तथा छान्दोग्योपनिषदि श्रूयते—"देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशन् ते छन्दोभिरच्छादयन् यदेभिरच्छादयंस्तच्छन्दसां छन्दस्त्वम्" (१।४।२) इति तस्मादपमृत्युं वारयतीति छन्द इत्युच्यते) ततोऽस्ति प्रयोजनं छन्दःशास्त्रस्य ॥ अथान्यो मन्त्रवर्णः श्रूयते "गायत्रेण च्छन्दसा त्वा छादयामि त्रैष्टुभेन च्छन्दसा त्वा छादयामि जागतेन च्छन्दसा त्वा छादयामि" इति ततश्छन्दसामेषां रक्षानुकूलसंवरणसाधनत्वादस्ति प्रयोजनं छन्दःशास्त्रस्य ॥ २ ॥

अथ 'पुरा असुरैः पराभूताः सुरा यदेभिर्गायत्र्यादिभिः स्वमात्मानं प्रच्छाद्य पुनस्तान् जिग्युस्तच्छन्दसां छन्दस्त्वमि'ति) वृद्धपराशराद्युक्तेश्छन्दःसंवृतशरीरस्य शत्रुपरिभावकत्वं विजयशालित्वं च संसिद्धं भवतीत्यस्ति प्रयोजनं छन्दःशास्त्रस्य। स्मर्यते चायमर्थो भगवता कात्यायनेनापि सर्वानुक्रमणीसूत्रे—"अर्थेप्सव ऋषयो देवताश्छन्दोभिरभ्यधावन्"(से.खं. २) इति। "अन्नपुत्रादिमोक्षान्तं फलमात्माधीनं कर्तुमिच्छन्तो मधुच्छन्दःप्रभृतयः संवननान्ता ऋषयः देवताः सूक्तहविर्भागिनीः, छन्दोभिर्गायत्र्यादिभिरुपायभूतैस्तद्युक्तमन्त्रैर्वा 'अर्थस्य प्राप्तावयमेवोपाय इति' दृढसंकल्पाः श्रद्धयागच्छन्नि"ति हि तदर्थमाह—षड्गुरुशिष्योऽपि। अन्यच्चायमाह—( स. भा. उपसं. )

'ऋषिनामार्षगोत्रज्ञ ऋषेः संस्थानतामियात्।
एकैकस्य ऋषेर्ज्ञानात् सहस्राब्दा स्थितिर्भवेत् ॥ १ ॥
छन्दसां चैव सालोक्यं छन्दोज्ञानादवाप्नुयात् ॥ २ ॥
तस्यास्तस्या देवतायास्तद्भावं प्रतिपद्यते।
यां यां विजानाति नरो देवतामिति निर्णयः ॥ ३ ॥
ऋष्यादिविज्ञानफलमनुभूय सुपूजितः।
स्वाध्यायस्य फलं पश्चाच्छ्रुत्या दत्तं प्रपद्यते ॥ ४ ॥' इति।

तस्मादन्नपुत्रादिमोक्षान्तफलसाधनत्वादस्ति प्रयोजनं छन्दःशास्त्रस्य।

अथ यदुक्तं **छन्दःसिद्धौ**, हेयोपादेयव्यवस्थाराहित्यादनर्थकमिदं छन्दःशास्त्रमिति; तदप्यत एव नावकल्पते। सर्वं हि विधिवाक्यं सावधारणं भवति, न चावधारणमितर-निवृत्तिमन्तरा दृष्टम्। यतश्चेदं छन्दोविधायकं शास्त्रमतो नूनमितरवारकेणानेन भवितव्यमिति सिद्धं हेयोपादेयव्यवस्थाप्रयोजकत्वं छन्दःशास्त्रस्य। सा च हेयोपादेयव्यवस्था त्रेधा।—विज्ञातव्यान्येव छन्दांसि न तु न विज्ञातव्यान्यपीति, विज्ञायैव च जपहोमयज्ञादिषु प्रवर्तेत न त्वविज्ञायापीति, भावाभावातिरेकप्रधाना सैका ॥ १ ॥ अथ "अनुष्टुभा यजति, बृहत्या गायति, गायत्र्या स्तौतीति" श्रूयते। तत्रानुष्टुभैव यजेत न बृहत्या न गायत्र्या, तथा बृहत्यैव गायेत नान्यथा, एवं गायत्र्यैव स्तुवीत नान्यथेत्येवं विजातीयभावद्वयातिरेकप्रधाना द्वितीया ॥ २ ॥ अथ—"पादस्यानुष्टुब् वक्त्रम्" "न प्रथमात् स्नौ०" "द्वितीयचतुर्थयोरश्चेति" सूत्रेभ्यो वक्त्रेषु, तथा "स्वरा अर्द्धं चार्य्या-र्द्धम्" "अत्रायुङ् न ज्" "षष्ठो जिति" सूत्रेभ्य आर्यासु विधिनिषेधप्रधाना तृतीया ॥ ३ ॥ यदि चेदं शास्त्रं न स्यादवश्यं तर्हि तेष्वेतेषु कामचारः स्यादनर्थश्च प्रपद्येत। ततो नु खलु हेयान् हापयितुमुपादेयान् संचारयितुमुपदिशन्ति स्म ते कारुणिका भगवन्त आचार्याः ॥—॥ ३ ॥

(१) अथ यदप्युक्तं—नाविज्ञातार्थज्ञापनार्थमिदं शास्त्रमारब्धव्यमिति, एतदप्यत एव प्रत्याख्यातं वेदितव्यम्। अन्तरेण शास्त्रारम्भमसम्भवाच्छन्दःस्वरूपावगमस्यैका-न्तमुपयुक्तस्य ॥ "अनुष्टुभा यजति, बृहत्या गायति, गायत्र्या स्तौतीति" श्रूयते। तत्र न ज्ञायते कानुष्टुप्? का बृहती? का गायत्रीति। अज्ञात्वा प्रवर्तमानश्च पापीयान् स्यात्। यत्रापि सतोबृहती महाबृहती महासतोबृहतीत्याख्यायन्ते, तत्रैतांस्तावदच्छान्दसिको बृहतीविकारान् प्रतिपद्येत। छान्दसिकस्तु पादविशेषव्यवस्थया पङ्क्तिविकारः सतो बृहती, त्रिष्टुब्विकारो महाबृहती, जगतीविकारो महासतोबृहती, इत्येवमध्यवस्यति। तथा च साधु यज्ञे प्रवर्तते। अन्यथा प्रवर्तमानस्यैतानि छन्दांसि यातयामानि स्युरित्य-वश्यमेषां स्वरूपज्ञानायोपयुज्यते छन्दःशास्त्रारम्भः ॥ १ ॥

यदपि तैत्तिरीयका आमनन्ति—"तद्यथा ह वै सूतग्रामण्यः—एवं छन्दांसि। तेष्वसा-वादित्यो बृहतीरभ्यूढः। सतोबृहतीषु स्तुवते सतोबृहत् प्रजया पशुभिरसानीत्येव"—इति तत्र प्रजया पशुभिश्चाहं सन्मार्गवर्तिनः पुरुषादधिको भवानीत्याशयेन सतोबृहत्या स्तौतीत्यर्थप्रतिपत्तेरवश्यमर्थापेक्षित्वमुपदिश्यते नामधेयस्येति नामधेयावगमार्थमुपयुज्यते छन्दःशास्त्रारम्भः ॥ २ ॥

अथामनन्ति—"व्यतिषक्ताभिः स्तुवते"—इति। न चान्तरेण छन्दोवेदमृचः शक्या व्यतिषक्ताः कर्तुमित्युपयुज्यते छन्दःशास्त्रारम्भः ॥ ३ ॥

भूयांसश्चार्थवादा श्रूयन्ते छन्दोवेदस्येति तत्तदभ्युदयसिद्धावुपयुज्यते शास्त्रारम्भः ॥४॥

इमानि च भूयश्छन्दोऽनुशासनस्य प्रयोजनानि यान्यत ऊर्ध्वमनुक्रमिष्यामः। बह्वृचानां श्रुतौ तावदाम्नायते—"प्रजापतिर्वै यज्ञं छन्दांसि देवेभ्यो भागधेयानि व्यभजत्। स गायत्रीमेवाग्नये वसुभ्यः प्रातःसवनेऽभजत्, त्रिष्टुभमिन्द्राय रुद्रेभ्यो मध्यन्दिने, जगतीं विश्वेभ्यो देवेभ्य आदित्येभ्यस्तृतीयसवने)। अथास्य यत् स्वं छन्द आसीदनुष्टुप्—त्वं न्वेव देवानां पापिष्ठोऽसि, यस्य तेऽहं स्वं छन्दोऽस्मि यां मोदन्तमभ्युदौहीरच्छावाकीयामभीति। तदजानात् स स्वं सोममाहरत् स स्वे सोमेऽग्रं मुखमभि पर्याहरदनुष्टुभम्। तस्मादनुष्टुबग्रिया मुख्या युज्यते" (ऐ. ब्रा. १२।२) इति। तदेतच्छन्दोवेदं विद्वांसमन्तरेण कोऽन्यः शक्नोत्येतदर्थं विज्ञातुम्? अतो दिव्यवेदार्थप्रतिपत्त्यर्थमारम्भणीयश्छन्दोवेदः ॥ १ ॥

अथो पञ्चवीर्यं वा एतच्छन्दो यद्विराट् यत्त्रिपदा तेनोष्णिहागायत्र्यौ यदस्या एकादशाक्षराणि पदानि तेन त्रिष्टुभ्। यत् त्रयस्त्रिंशदक्षरा तेनानुष्टुप्। न वा एकेनाक्षरेण च्छन्दांसि वियन्ति न द्वाभ्यां यद्विराट् तत्पञ्चमम्। सर्वेषां छन्दसां वीर्यमवरुन्धे सर्वेषां छन्दसां वीर्यमश्नुते सर्वेषां छन्दसां सायुज्यं सरूपतां सलोकतामश्नुते। अन्नादोऽन्नपतिर्भवति अश्नुते प्रजयान्नाद्यं य एवं विद्वान् विराजौ कुरुते (ऐ. ब्रा. १।६) इत्येवं विराजोऽर्थवादः श्रूयते; स न पञ्चवीर्यत्वमवगन्तुं शक्नोत्यन्तरेण च्छन्दोवेदमित्यारम्भणीयश्छन्दोवेदः ॥ २ ॥

"सर्वैश्छन्दोभिर्यजेदित्याहुः सर्वैर्वै छन्दोभिरिष्ट्वा देवाः स्वर्गं लोकमजयंस्तथैवैतद्यजमानः सर्वैश्छन्दोभिरिष्ट्वा स्वर्गं लोकं जयति।...एतानि वाव सर्वाणि छन्दांसि गायत्रं त्रैष्टुभं जागतमन्वन्यानि। एतानि हि यज्ञप्रतमामिव क्रियन्ते। एतैर्ह वा अस्य छन्दोभिर्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद" (ऐ. ब्रा. २।३) इति हि श्रूयते। तत्र किं तावत्सर्वेषां छन्दसां स्वरूपं? कानि वान्यानीति न तत्त्वतः शक्नोत्यवधारयितुमच्छान्दसिको न था यष्टुमित्यारम्भणीयश्छन्दोवेदः ॥ ३ ॥

"स एवं विद्वांश्छन्दोमयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति य एवं वेद। यो वै तद्वेद यथा छन्दोमयो देवतामयो ब्रह्ममयोऽमृतमयः संभूय देवता अप्येति तत् सुविदितमि"ति (ऐ. ब्रा. १०।८) श्रूयते। तदेतस्य छन्दोमयस्य देवताप्ययो यथा भवति तथा ज्ञानं हि सुज्ञानमित्यस्माकं सुज्ञानं यथा स्यादित्यारम्भणीयश्छन्दोवेदः ॥ ४ ॥

"तद्यदाग्नेन्द्र्या यजति विजित्या एव सा विराट् त्रयस्त्रिंशदक्षरा भवति" "त्रयस्त्रिंशद्वै देवाः—अष्टौ वसवः एकादश रुद्राः द्वादशादित्याः प्रजापतिश्च वषट्कारश्च। तत् प्रथमं उक्थमुखे देवता अक्षरभाजः करोति अक्षरमक्षरमेव तद्देवता अनुप्रपिबंति देवपात्रेणैव तद्देवतास्तृप्यन्ति इति श्रूयते" (ऐ. ब्रा. १२।११)। तदेवं देवता यद्यक्षरभाजः कल्प्यन्ते, तत्तर्हि नान्तरेणाक्षरच्छन्दोविज्ञानमेता विज्ञातुं शक्यन्ते। तदेताश्छन्दोभिर्यथा विजानीयामित्यारम्भणीयश्छन्दोवेदः ॥ ५ ॥

"भ्रन्तो वा एताभिर्देवाः पुरो भिन्दन्त आयन्, यदुपसदः सच्छन्दसः कर्तव्या न विच्छन्दसः। यद्विच्छन्दसः कुर्याद् ग्रीवासु तद्गण्डं दध्याद्गीश्वरो ग्लावो जनितोः।

तस्मात् सच्छन्दस एव कर्तव्या न विछन्दसः' (ऐ.ब्रा.७।८) इत्युपसदां सच्छन्दस्त्वकरणमनुज्ञायते। तदन्तरेण छन्दोवेदमशक्यं सच्छन्दस्त्वकरणमित्यारम्भणीयश्छन्दोवेदः॥६॥

"गायत्रीं ब्राह्मणस्यानुब्रूयात्। गायत्रो वै ब्राह्मणः। तेजो वै ब्रह्मवर्चसं गायत्री। तेजसैवैनं तद्ब्रह्मवर्चसेन समर्द्धयति।...त्रिष्टुभं राजन्यस्यानुब्रूयात् त्रैष्टुभो वै राजन्यः। ओजो वा इन्द्रियं वीर्यं त्रिष्टुप्। ओजसैवैनं तदिन्द्रियेण वीर्येण समर्द्धयति।...जगतीं वैश्यस्यानुब्रूयात्। जागतो वै वैश्यः। जागताः पशवः पशुभिरेवैनं तत्समर्द्धयति" (ऐ. ब्रा.५।२) इति श्रूयते। तत्र गायत्र्या ब्रह्मवर्चसं तेजः, त्रिष्टुभा त्विन्द्रियं वीर्यमोजः, जगत्या च पश्वादयः पदार्था लक्ष्यन्ते। तदन्तरेण गायत्र्यादिविज्ञानमशक्यमेषां विज्ञानमित्यारम्भणीयश्छन्दोवेदः ॥ ७ ॥

"चतुरुत्तरैर्वै देवाश्छन्दोभिः सयुग्भूत्वा एतां श्रियमारोहन् यस्यामेत एतर्हि प्रतिष्ठिताः। अग्निर्गायत्र्या सवितोष्णिहा सोमोऽनुष्टुभा बृहस्पतिर्बृहत्या मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा विश्वेदेवा जगत्या। ते एते अभ्यनूच्येते—अग्नेर्गायत्र्यभवत् सयुग्वेति। कल्पते ह वा अस्मै योगक्षेमः। उत्तरोत्तरिणीं ह श्रियमश्नुते अश्नुते प्रजानामैश्वर्यमाधिपत्यं य एवमेता अनुदेवता एतामासन्दीमारोहति क्षत्रियः सन्नि"ति (ऐ.ब्रा. ३७।२) हि श्रूयते। तत्र देवताछन्दसोः सयुक्त्वाख्यानादुत्तरोत्तरिणीं श्रियं प्रजामैश्वर्यमाधिपत्यं चापेक्षमाणानामवश्यमेषां छन्दसां चतुरुत्तरत्वविज्ञानमपेक्षितं भवतीत्यारम्भणीयश्छन्दोवेदः ॥ ८ ॥

"यद् गायत्रे अधिगायत्रमाहितं त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत। यद्वा जगज्जगत्याहितं पदं य इत्तद्विदुस्ते अमृतत्वमानशुः॥ इत्येतद्वै तच्छन्दश्छन्दसि प्रतिष्ठापयति कल्पयति देवविशो य एवं वेदे"ति (ऐ.ब्रा.१२।१) श्रूयते। तदतश्छन्दःप्रतिष्ठापदं विदित्वामृतत्वमश्नुवीयेत्यारम्भणीयश्छन्दोवेदः ॥ ९ ॥

"तं सप्तभिश्छन्दोभिः प्रातरह्वयन्। तस्मात् सप्तचतुरुत्तराणि छन्दांसि प्रातरनुवाकेऽनूच्यन्ते।" इति हि तैत्तिरीयका आमनन्ति। मैत्रायणीनामध्वरादिविधावप्याम्नायते। "देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति छन्दांसि वै देवाः प्रातर्यावाणः। छन्दोभ्यो वा एतदनुवाच आह"-इति। तथाचैतरेयकेऽपि—

"देवेभ्यः प्रातर्यावभ्योहोतरनुब्रूहीत्याहाध्वर्युः। एते वाव देवाः प्रातर्यावाणो यदग्निरुषा अश्विनौ। त एते सप्तभिः सप्तभिश्छन्दोभिरागच्छन्ति। आस्य देवाः प्रातर्यावाणो हवं गच्छन्ति य एवं वेद" (ऐ. ब्रा. ७।५) सप्ताग्नेयानि छन्दांस्यन्वाह,...सप्तोषस्यानि छन्दांस्यन्वाह...सप्ताश्विनानि छन्दांस्यन्वाह-सप्तधा वै वागवदत्। तावद्वै वागवदत् सर्वस्यै वाचः सर्वस्य ब्रह्मणः परिगृहीत्यै। तिस्रो देवता अन्वाह। त्रयो वा इमे त्रिवृतो लोकाः। एषामेव लोकानामभिजित्यै (ऐ.ब्रा.८।७)। तदाहुः—कथमनूच्यः प्रातरनुवाक इति। यथाच्छन्दसमनूच्यःप्रातरनुवाकः। प्रजापतेर्वा एतान्यङ्गानि यच्छन्दांसि। एष उ एव प्रजापतिर्यो यजते।" (ऐ. ब्रा.७।८) इति श्रूयते। न चैतच्छन्दोविज्ञानमन्तरेणानुवचनं साधीयः संभवतीत्यारम्भणीयश्छन्दोवेदः ॥ १० ॥

'तदाहुः स वै होता स्याद्य एतस्यामृचि सर्वाणि छन्दांसि प्रजनयेदिति । एषा वाव त्रिरनूक्ता सर्वाणि च्छन्दांसि भवति । एषा छन्दसां प्रजातिः ।" (ऐ. ब्रा. ७।६) इति श्रूयते । तदतश्छन्दःप्रजननविद्याया होतृत्वमासादयेयमित्यारम्भणीयश्छन्दोवेदः ॥११॥

"अग्निर्वै देवानामवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः । आग्नावैष्णवं पुरोळाशं निर्वपन्ति दीक्षणीयमेकादशकपालं सर्वाभ्य एवैनं तद्देवताभ्योऽनन्तरायं निर्वपन्ति । अग्निर्वै सर्वा देवता विष्णुः सर्वा देवता एते वै यज्ञस्यान्त्ये तन्वौ यदग्निश्च विष्णुश्च । तद्यदाग्नावैष्णवं पुरोडाशं निर्वपन्ति । अन्तत एव तद्देवानृध्नुवन्ति । तदाहुर्यदेकादशकपालः पुरोळाशो द्वावग्नाविष्णू । कैनयोस्तत्र क्लृप्तिः, का विभक्ति-रिति । अष्टाकपाल आग्नेयोऽष्टाक्षरा वै गायत्री गायत्रमग्नेश्छन्दः त्रिकपालो वैष्णव-स्त्रिर्हीदं विष्णुर्व्यक्रमत । सैनयोस्तत्र क्लृप्तिः सा विभक्तिरि" (ऐ. ब्रा. १।१) त्याम्नायते । तत्रैवमेकादशकपाले देवतयोः क्लृप्तिविभक्ती कर्तुं पारयेमेत्यारम्भणीयश्छन्दोवेदः ॥ १२ ॥

"तेजो वै ब्रह्मवर्चसं गायत्री । आयुर्वा उष्णिग् । वाग्वा अनुष्टुप् । श्रीर्वै यशश्छन्दसां बृहती । पाङ्क्तो वै यज्ञः । ओजो वा इन्द्रियं वीर्यं त्रिष्टुप् । जागता वै पशवः ।" (ऐ. ब्रा. १।६) इति श्रूयते । तदतस्तत्तच्छन्दोयाज्यामनुरुन्धाना यथा तत्तत्कामेषु कृतकृत्याः स्युरित्यारम्भणीयश्छन्दोवेदः ॥ १३ ॥

"ते देवा अब्रुवन्—विराड्याज्यास्तु निष्केवल्यस्य या त्रयस्त्रिंशदक्षरा । त्रयस्त्रिंशद्वै देवाः । अष्टौ वसव एकादश रुद्राः द्वादशादित्याः प्रजापतिश्च वषट्कारश्च । देवता अक्ष-रभाजः करोति । अक्षरमक्षरमेव तद्देवता अनुप्रपिबन्ति देवपात्रेणैव तद्देवतास्तृप्यन्ति । यं कामयेत—अनायतनवान् स्यादिति अविराजास्य यजेद् गायत्र्या वा त्रिष्टुभा वान्येन वा छन्दसा वषट् कुर्यादनायतनवन्तमेवैनं तत्करोति । यं कामयेत—आयतनवान् स्यादिति । विराजास्य यजेदायतनवन्तमेवैनं तत्करोति ।" (ऐ. ब्रा. १२।११) इति श्रूयते । तदन्तरेण छन्दोवेदमवाक्यं तु यथाकामं याज्या विशेषोपधानमित्यारम्भ-णीयश्छन्दोवेदः ॥ १४ ॥

"यो धाता स वषट्कारः···यानुमतिः सा गायत्री···या राका सा त्रिष्टुप्···या सि-नीवाली सा जगती···या कुहूः सानुष्टुप् । एतानि वा व सर्वाणि च्छन्दांसि गायत्रं त्रैष्टुभं जागतमानुष्टुभमन्वन्यानि । एतानि हि यज्ञे प्रतमामिव क्रियन्ते । एतैर्ह वा अस्य छन्दोभि-र्यजतः सर्वैश्छन्दोभिरिष्टं भवति य एवं वेद । (ऐ. ब्रा. १३।३) यः सूर्यः स धाता स उ एव वषट्कारः···या द्यौः सानुमतिः सो एव गायत्री···योषाः सा राका सो एव त्रिष्टुप् ···या गौः सा सिनीवाली सो एव जगती···या पृथिवी सा कुहूः सो एवानुष्टुप् । एतानि वाव सर्वाणि च्छन्दांसि । गायत्रं त्रैष्टुभं जागतमानुष्टुभमन्वन्यानि एतानि हि यज्ञे प्रतमामिव क्रियन्ते" (ऐ. ब्रा. १५।४) इत्याद्यैतरेयके श्रूयते ॥ मैत्रायणीयानां राजसूयब्राह्मणेऽप्या-म्नायते—"गायत्र्यनुमतिः । त्रिष्टुब् राका । जगती सिनीवाली । कुहूरनुष्टुप् । धाता वषट्-कारः ॥ या पूर्वा पौर्णमासी सानुमतिः योत्तरा सा राका । या पूर्वामावस्या सा सिनीवाली । योत्तरा सा कुहूः । चन्द्रमा एव धाता ।" इत्यादि । तदन्तरेण च्छन्दोवेदमशक्यमासामनुम-तिराकासिनीवालीकुहूनां सर्वच्छन्दोभिःसारूप्यमवगन्तुमित्यारम्भणीयश्छन्दोवेदः ॥१५॥

"अतिच्छन्दसः शंसति। छन्दसां वै यो रसोऽत्यक्षरत् सोऽतिच्छन्दसमभ्यत्यक्षत्। तदतिच्छन्दसोऽतिच्छन्दस्त्वम्। सर्वेभ्यो वा एष च्छन्दोभ्यः संनिर्मितो यत् षोळशी। तद्यदतिच्छन्दसः शंसति सर्वेभ्य एवैनं तच्छन्दोभ्यः संनिर्मिमीते सर्वेभ्यश्छन्दोभ्यः संनिर्मितेन षोळशिना राध्नोति य एवं वेद।" (ऐ. ब्रा. १६।३) इत्यैतरेयकाणां षोडशिब्राह्मणे श्रूयते। तदिदमतिच्छन्दसः शंसेयं षोडशिना च राध्नुयामित्यारम्भणीयश्छन्दोवेदः ॥१६॥

"सोमो वै राजाऽमुष्मिंल्लोके आसीत्। तं देवाश्च ऋषयश्चाभ्यध्यायन् कथमयमस्मान्त्सोमो राजागच्छेदिति। तेऽब्रुवंश्छन्दांसि। यूयं न इमं सोमं राजानमाहरतेति। तथेति ते सुपर्णा भूत्वोदपतन्।...छन्दांसि वै तत्सोमं राजानमच्छा चरन्। तानि ह तर्हि चतुरक्षराणि चतुरक्षराण्येव छन्दांस्यासन् सा जगती चतुरक्षरा प्रथमोदपतत्। सा पतित्वार्धमध्वनो गत्वाश्राम्यत्। सा परास्य त्रीण्यक्षराण्येकाक्षरा भूत्वा दीक्षां च तपश्च हरन्ती पुनरभ्यवापतत्। तस्मात्तस्य वित्ता दीक्षा वित्तं तपो यस्य पशवः सन्ति। जागता हि पशवः। जगती हि तानाहरत्॥ अथ त्रिष्टुबुदपतत्। सा पतित्वा भूयोऽर्द्धादध्वनो गत्वाश्राम्यत्। सा परास्यैकमक्षरं त्र्यक्षरा भूत्वा दक्षिणा हरन्ती पुनरभ्यवापतत्। तस्मान्मध्यन्दिने दक्षिणा नीयन्ते त्रिष्टुभो लोके। त्रिष्टुब्भिता अहरत् ॥ १ ॥ ते देवा अब्रुवन् गायत्रीम्। त्वं न इमं सोमं राजानमाहरेति सा तथेत्यब्रवीत्।...सा पतित्वा सोमपालान् भीषयित्वा पद्भ्यां च मुखेन च सोमं राजानं समगृभ्णात्। यानि चेतरे छन्दसी अक्षराण्यजिहतां तानि चोपसमगृभ्णात् ॥ २ ॥ सा यद्दक्षिणेन पदा समगृभ्णात्। तत् प्रातःसवनमभवत्। तद्गायत्री स्वमायतनमकुरुत। तस्मात् तत् समृद्धतमं मन्यन्ते सर्वेषां सवनानाम्।...अथ यत्सव्येन पदा समगृभ्णात् तन्माध्यन्दिनं सवनमभवत्। तद्विस्रंसत तद्विस्रस्तं नान्वाप्नोत् पूर्वं सवनम्। ते देवाः प्राजिज्ञासन्त। तस्मिंस्त्रिष्टुभं छन्दसामदधुरिन्द्रं देवतानाम्। तेन तत् समावद्वीर्यमभवत् पूर्वेण सवनेन।...अथ यन्मुखेन समगृभ्णात् तत् तृतीयसवनमभवत्। तस्य पतन्ती रसमधयत्। तद्धीतरसं नान्वाप्नोत् पूर्वे सवने। ते देवाः प्राजिज्ञासन्त। तत्पशुष्वपश्यन्। तद्यदाशिरमवनयन्ति आज्येन पशुना चरन्ति तेन तत् समावद्वीर्यमभवत् पूर्वाभ्यां सवनाभ्याम् ॥ ३ ॥ ते वा इमे इतरे छन्दसी गायत्रीमभ्यवदेताम्। वित्तं नावक्षराण्यनुपर्यागुरिति। नेत्यब्रवीद्गायत्री। यथावित्तमेव न इति। ते देवेषु प्रश्नमैताम्। ते देवा अब्रुवन्—यथा वित्तमेव व इति। तस्माद्धाप्येतर्हि वित्त्यां व्याहुः—यथावित्तमेव न इति। ततो वा अष्टाक्षरा गायत्र्यभवत्। त्र्यक्षरा त्रिष्टुप्। एकाक्षरा जगती। साष्टाक्षरा गायत्री प्रातःसवनमुदयच्छत् नाशक्नोत्त्रिष्टुप् त्र्यक्षरा माध्यन्दिनं सवनमुद्यन्तुम्। तां गायत्र्यब्रवीद्—अन्यापि मेऽत्रास्त्विति। सा तथेत्यब्रवीत् त्रिष्टुप्। तां वै मैतैरष्टाभिरक्षरैरुपसन्धेहीति। तथेति तामुपसमदधात्...सैकादशाक्षरा भूत्वा माध्यन्दिनं सवनमुदयच्छत्। नाशक्नोज्जगत्येकाक्षरा तृतीयसवनमुद्यन्तुम्। तां गायत्र्यब्रवीद्—आयान्यपि मेऽत्रास्त्विति। सा

तथेत्यब्रवीज्जगती । तां वै मैतैरेकादशभिरक्षरैरुपसन्धेहीति । तथेति तामुपसमदधात्… सा द्वादशाक्षरा भूत्वा तृतीयसवनमुदयच्छत् । ततो वा अष्टाक्षरा गायत्र्यभवत् । एकादशाक्षरा त्रिष्टुप् । द्वादशाक्षरा जगती ।…एकं वै सत्तत्रेधाभवत् । तस्मादाहुर्दातव्यमेवं विदुषे इति । एकं हि सत्तत्रेधाभवत् ।" (ऐ. ब्रा. १३।४) इति हि सौपर्णकमाख्यानमाख्यानविदामामनन्त्यैतरेयकाः । को ह्येतदर्थं विज्ञापयितुं शक्नोति यावता याथात्म्येन च्छन्दोवेदं न जानीयादित्यारम्भणीयश्छन्दोवेदः ॥ १७ ॥

| | | | | | |
|---|---|---|---|---|---|
| गायत्री | ।।।। | ।।।।८-७, | ।।।'।।।'।' | ।।।।'।।।।" | ८ |
| त्रिष्टुप् | ।।।। | ।।।-८।७, | ।।।……, | ।।।-।।।।'।।।।" | ११ |
| जगती | ।।।। | ।-८।।।७, | ।……, | ।-।।।-।।।।'।।।।" | १२ |

"आदित्याश्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्धन्त । वयं पूर्वे सुवर्गं लोकमियाम । वयं पूर्व इति । त आदित्या एतं पञ्चहोतारमपश्यन् तं पुरा प्रातरनुवाकादाग्नीध्रेऽजुहवुः । ततो वै ते पूर्वे सुवर्गं लोकमायन् । संवत्सरो वै पञ्चहोता । संवत्सरः सुवर्गो लोकः तेऽब्रुवन्नाङ्गिरस आदित्यान्—क्व स्थ ? क्व वः सद्भ्यो हव्यं वक्ष्याम ? इति । छन्दःसु इत्यब्रुवन् । गायत्र्यां त्रिष्टुभि जगत्यामिति । तस्माच्छन्दःसु सद्भ्य आदित्येभ्य आङ्गिरसीः प्रजा हव्यं वहन्ति ।" इति हि तैत्तिरीयका आमनन्ति । छन्दःसु सद्भ्य आदित्येभ्यो हव्यं वहन्तीति जानीयामेत्यारम्भणीयश्छन्दोवेदः ॥ १८ ॥

मैत्रायणीयानामाम्नाये "गायत्रीं च सम्पादयति जगतीं च । तद्वे छन्दसी एकं छन्दोऽभिसम्पादयति बृहतीम् । त्रिष्टुभं च ककुभं च । तद्वे च्छन्दसी एकं च्छन्दोऽभिसम्पादयति बृहतीम् । अनुष्टुभं च पङ्क्तिं च । तद्वे च्छन्दसी एकं छन्दोऽभिसम्पादयति बृहतीम् । तत् षड् छन्दांस्येकं च्छन्दोभिसम्पादयति बृहतीम् ।" इत्यादि ।

| | | |
|---|---|---|
| गा० ।।।।।०००<br>ज० ।।।।।।।-।।। | क० ।।।।।।००<br>त्रि० ।।।।।।।।-।। | अ०।।।।।।।०<br>प०।।।।।।।-। |
| ६<br>१२ | ७<br>११ | ८<br>१० |
| बृ ९ + बृ ९ | बृ ९ + बृ ९ | बृ ९ + बृ ९ |

ऐतरेयकेऽपि "तस्या वाचोऽवपादादबिभयुः—तमेतेषु सप्तसु छन्दःस्वश्रयन्। यदश्रयन्। तच्छ्रायन्तीयस्य श्रायन्तीयत्वम्—यदवारयन्—तद्वारयन्तीयस्य वारयन्तीयत्वम्। तस्या वाच एतावपादादबिभयुः। तस्मा एतानि सप्त चतुरुत्तराणि छन्दांस्यपादधुः। तेषामतित्रीण्यतिरिच्यन्ते। न त्रीण्युदसृजत् स बृहतीमेवास्पृशत्—द्वाभ्यामक्षराभ्यामहोरात्राभ्यामेव। तदाहुः—कतमा सा देवाक्षरा बृहती-यस्यां तत् प्रत्यतिष्ठत्। द्वादश पौर्णमास्यः—द्वादशाष्टकाः—द्वादशामावास्याः। एषा वाव सा देवाक्षरा बृहती यस्यां तत् प्रत्यतिष्ठदिति। यानि च च्छन्दांस्यत्यरिच्यन्त यानि च नोदभवन्—तानि निर्वीर्याणि हीनान्यमन्यन्त। साऽब्रवीद् बृहती। मामेव भूत्वा मामुपसंश्रयतेति। चतुर्भिरक्षरैरनुष्टुब् बृहतीं नोदभवत्। चतुर्भिरक्षरैः पङ्क्तिर्बृहतीमत्यरिच्यत। तस्यामेतानि चत्वार्यक्षराण्यपच्छिद्यादधात्। ते बृहती एव भूत्वा बृहतीमुपसमश्रयताम्। अष्टाभिरक्षरैरुष्णिग्। बृहतीं नोदभवत्। अष्टाभिरक्षरैस्त्रिष्टुप् बृहतीमत्यरिच्यत। तस्यामेतान्यष्टावक्षराण्यपच्छिद्यादधात्। ते बृहती एव भूत्वा बृहतीमुपसमश्रयताम्॥ द्वादशभिरक्षरैर्गायत्री बृहतीं नोदभवत्, द्वादशभिरक्षरैर्जगती बृहतीमत्यरिच्यत। तस्यामेतानि द्वादशाक्षराण्यपच्छिद्यादधात्। ते बृहती एव भूत्वा बृहतीमुपसमश्रयताम्॥" इत्याम्नायते। तत्रान्तरेण च्छन्दोवेदमशक्यमासां गायत्र्युष्णिगनुष्टुभामनुद्भवनमन्यासां च पङ्क्तित्रिष्टुब्जगतीनामतिरेचनं यथायथावद्विज्ञातुमित्यारम्भणीयच्छन्दोवेदः॥ १९॥ इतीमान्यन्यानि चैवंविधानि भूयांसि प्रयोजनानि पश्याम इत्यारम्भणीयश्छन्दोवेदः॥२०॥

अथ कश्चिद् ब्रूयात्-यान्येतानि प्रयोजनान्युक्तानि ततो नु खलु वैदिकानामेव च्छन्दसां विधानशास्त्रस्यावश्यकत्वं प्राप्नोति; न पुनर्लौकिकानामपीति। तत्रोच्यते—त्रिविधानि हि वाचां छन्दांसि; कानिचिद्वैदिकान्येव, कानिचिद्वैदिकानि च लौकिकानि च, कानिचित् पुनर्लौकिकान्येव। तत्रावश्यमुभयेषां निदर्शनाय शास्त्रारम्भः प्रवर्तनीयस्तेन यदि—"घटायोन्मीलितं चक्षुः किमन्यन्न प्रकाशयेत्?"-इति न्यायेन लौकिकान्यपि दर्श्येरन्; तर्हि तावता छन्दोयाथात्म्यविजिज्ञासूनां छन्दोविज्ञानसौकर्यानुग्रहो भवति। अत एव तु वैदिकानि च्छन्दांसि साकल्येन प्रदर्श्य लौकिकानां दिग्दर्शनेनानुगृह्णाति भगवान् पिङ्गलाचार्यः। अनेन चाविशिष्टबुद्धिरपि तानि तानि छन्दोवृत्तानि यथावदवगम्य तद्रचनाभिनयादिना कृतकृत्यः कवितानन्दमासादयेत्॥—

"काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे॥" (का. प्र. १।२)

इति हि भूयांसि प्रयोजनानि काव्यस्य पठन्ति। छन्दोभिनेयं तु वाक्यं रसोद्बोधे काव्यमित्युच्यते। तदतश्छन्दोभङ्गो रसापकर्षितया काव्यत्वव्याघातको भवति।

तस्माच्च छन्दोभङ्गदोषेण काव्यप्रयोजनेभ्यो माव्यतिरेचिष्महीत्यपेक्षमाणानामारम्भणीयं लौकिकानामपि च्छन्दसां विज्ञानशास्त्रम्। उक्तं च प्राकृते पैङ्गले—

जेम ण सहई कणअतुला तिलतुलिअं अद्ध अद्धेण ।
तेम ण सहई सवणतुला अवच्छन्दं छन्दभङ्गेण ॥ १ ॥
अबुह बुहाणं मज्झे कव्वं जो पढइ लक्खणविहूणम् ।
भूअगालगाखग्गाहिं सीसं खुडिअं ण जाणेइ ॥ २ ॥ इति ।

यथा न सहते कनकतुला तिलतुलितमर्द्धार्द्धेन । तथा न सहते श्रवणतुला अपच्छन्दस्कं छन्दोभङ्गेन ॥ १ ॥ अबुधो बुधानां मध्ये काव्यं यः पठति लक्षणविहीनम् । भुजाग्रलग्नखड्गेन शीर्षं खण्डितं न जानाति ॥ २ ॥

इति हि तदर्थः । तदिदमपच्छन्दस्कं लक्षणविहीनं मा प्रयुक्ष्महीत्यारम्भणीयं छन्दोविज्ञानशास्त्रम् ॥ २१ ॥

इति छन्दोवेदसार्थकतावादः ।



श्रीः

# प्रस्तावना ।

किं तावच्छन्दसां तत्त्वम् ? का विभक्तिः ? किं लक्षणम् ? किं प्रयोजनम् ? इत्यादयश्छन्दःशास्त्रसम्बद्धा विषयास्तावत् श्रीमधुसूदनशर्ममहानुभावैश्छन्दःसमीक्षायां सम्यङ्ङ् न्यरूरुपिषतेति तेषामेवात्र सङ्ग्रहोऽकारि ।

अथ तदेतच्छन्दःशास्त्रं कदा प्रादुरासेति विमृश्यते ।

छन्दःशास्त्रस्य मूलम्

तत्र तावन्महनीयमहिम्नोऽपौरुषेयाद्वेदराशेर्गायत्र्यादिच्छन्दसां यज्ञकर्मणि विनियुक्तत्वात्तज्ज्ञानार्थमादौ ब्राह्मणग्रन्थेषु तेषां पादसङ्ख्या तत्र प्रविभक्ताक्षरसङ्ख्या च निर्दिश्यते । पादसङ्ख्यामात्रेणाक्षरसङ्ख्यामात्रेण च वैदिकच्छन्दसां गायत्र्यादिव्यवहारः । तत्र किञ्चिन्न्यूनाधिकतायामपि न च्छन्दोहानिर्भवति । तदुक्तम्—'न वा एकेनाक्षरेण च्छन्दांसि वियन्ति, न द्वाभ्याम्' ( ऐ. ब्रा. १. ६ ) 'न ह्येकेनाक्षरेणान्यच्छन्दो भवति, न द्वाभ्याम्' ( सां. ब्रा. २७. १ ) इति । ततो ब्राह्मणग्रन्थेष्वितस्ततः पर्यस्तान् विध्यर्थवादादीन् समाहृत्य सारल्येन यज्ञकर्माणि सूत्रयितुं प्रवृत्तेषु भगवदाश्वलायनसाङ्ख्यायनापस्तम्बादिषु तदुपयोगिनां छन्दसां लक्षणान्यपि ब्राह्मणारण्यकादिभ्यो निष्कृष्य पृथक्कथनीयान्यभवन् । तानि चैवं सूत्रयांचकार तत्र भवान् साङ्ख्यायनः—

'त्रिपदा गायत्री ( १ ) उष्णिक् ( २ ) पुर उष्णिक् ( ३ ) ककुप् ( ४ ) विराट् च पूर्वा ( ५ ) चतुष्पदोत्तरपदा विराट् ( ६ ) बृहती ( ७ ) सतो बृहती ( ८ ) जगती ( ९ ) अनुष्टुप् ( १० ) त्रिष्टुप् च ( ११ ) पञ्च पङ्क्तेः ( १२ ) षट्सप्तेत्यतिच्छन्दसाम् ( १३ ) 'स हि शर्धो न मारुत'मित्यष्टौ ( १४ ) द्वौ द्विपदायाः ( १५ ) तेऽष्टाक्षराः प्रायेण ( १६ ) द्वादशाक्षरा जगत्याः ( १७ ) तृतीयौ चोष्णिग्बृहत्योः ( १८ ) सतोबृहत्याश्च प्रथमतृतीयौ ( १९ ) मध्यमः ककुभः ( २० ) प्रथमः पुर उष्णिहः ( २१ ) एकादशाक्षरा त्रिष्टुब्विराजोः ( २२ ) उत्तरस्या दशाक्षरः ( २३ ) तामक्षरपङ्क्तिरित्यप्याचक्षते (२४) पञ्चभिः पञ्चाक्षरैः पदपङ्क्तिः (२५) षळप्यष्टाक्षरा जगत्याः ( २६ ) एकेन द्वाभ्यामित्यूनके निचृत् ( २७ ) अतिरिक्ते भुरिक् ( २८ ) सम्पाद्य पादभागेनाहार्यस्यर्चः सम्मितास्तस्य पादभागेन सम्पन्नाः ( २९ ) गायत्र्युष्णिगनुष्टुप्बृहत्यो पङ्क्तिश्च त्रिष्टुप्जगत्यावित्यानुपूर्व्यं छन्दसां चतुर्विंशत्यक्षरादीनां चतुरुत्तराणाम् ( ३० ) ( सां. श्रौ. सू. ७. २७ )

इति । इदमेव मूलं छन्दःशास्त्रमहातरोरिति मन्यामहे । अत्रैकेन द्वाभ्यां वाऽक्षराभ्यां न्यूनाधिक्ये निचृद्भुरिगिति संज्ञाविशेष उच्यते; पिङ्गलाचार्येण पुनः 'ऊनाधिकेनैकेन निचृद्भुरिजौ । द्वाभ्यां विराट्स्वराजौ ।' ( ३. ५९-६० ) इत्युक्तमिति शास्त्रस्योत्तरोत्तरं परिणततावसीयते ।

निदानसूत्राणामिदमेव स्थानम् । प्रातिशाख्यसर्वानुक्रमण्यौ वैदिकच्छन्दसां लक्षणानि दर्शयन्त्यावपि पिङ्गलादूर्ध्वमेवाविर्भूते इत्यनुपदमेव दर्शयिष्यते ।

लौकिकच्छन्दसामुत्पत्तिः

अथाधीयमानेष्वेवाम्नायेषु केषाञ्चनर्चामर्धर्चां पादानां च श्रुतिमनोहरतामनुसन्दधानाः परमर्षयस्तत्राक्षरपरिच्छेदं लघुगुरुनियमं च निदानमवधीरन् । तानेव चाम्रेड्याम्रेड्य स्वयं वृत्तानि विरचयामासुः । क्वचिच्चाक्षरसङ्ख्यानिरपेक्षमेवोच्चारणकालसाम्यमात्रं विशिष्टवृत्तसाधकं पश्यन्तो मात्रावृत्तानि कल्पयाम्बभूवुः । दृश्यन्ते हि नानाविधवृत्तानां मातृकायमाणा मन्त्रभागा वेदे । यथा—

'हृदिस्पृगस्तु शन्तमः' ( ऋ. सं. १. १. ३१ ) इति प्रमाण्याः ।
'पूषण्वते ते चकृमा करम्भं' (ऋ. सं. ३. ३. १८) इतीन्द्रवज्रायाः ।
'स्तुहि श्रुतं गर्तसदं युवानं' ( ऋ. सं. २. ७. १८ ) इत्युपेन्द्रवज्रायाः ।
'अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः ।' ( ऋ. सं. १. २. १४ ) इत्युपजातेः ।
'इन्द्रासोमा दुष्कृते मा सुगं भूत्' ( ऋ. सं. ५. ७. ६ ) इति शालिन्याः ।
'आ देवानामभवः केतुरग्ने' ( ऋ.सं २. ८. १६ ) इति वातोर्म्याः ।
'रथं न दुर्गाद्वसवः सुदानवः' ( ऋ. सं. १. ७. २४ ) इति वंशस्थस्य ।
'यूना ह सन्ता प्रथमं वि जज्ञतुः' ( ऋ. सं. ७. २. १९ ) इतीन्द्रवंशायाः ।
'अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ।' ( ऋ. सं. १. १. १९ ) इति नराचस्य ।

एवमेवान्येषामपि वृत्तानां मूलभूताः पादाश्चार्धर्चाश्च तत्र तत्र शतश उपलभ्यन्ते । ततश्च वेद एव मूलं लौकिकानामपि छन्दसामिति युक्तमुत्पश्यामः ।

छन्दःशास्त्रस्य वेदाङ्गता ।

तत्रैवं द्विविधानामपि च्छन्दसां लक्षणविधायकं शास्त्रमिदमाविरकार्षीत्तत्रभवान् पिङ्गलनागः । सर्वेष्वप्युपलभ्यमानेषु छन्दोग्रन्थेष्विदमेव पुराणतरमार्षं च । अत एवैतद्वेदाङ्गतयोपादीयते वैदिकैः । लौकिकानामपि च्छन्दसां लक्षणसङ्ग्रहपरस्यास्य वैदिकलौकिकशब्दलक्षणविधायकपाणिनीयव्याकरणस्येव वेदाङ्गता न विरुद्धा । दृश्यन्ते चोपनिषदादिषु वेदभागेषु क्वचिल्लौकिकान्यपि च्छन्दांसि । तेषां लौकिकसंज्ञा तु 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायेनैवेति न किञ्चिदत्याहितम् ।

प्राचीनाश्छन्दःशास्त्रकाराः ।

पिङ्गलाचार्यकृतच्छन्दःशास्त्रात्पूर्वमपि शास्त्रेऽस्मिन् [ कौष्टुकि–यास्क–ताण्डि–सैतव–काश्यप–रातमाण्डव्यप्रभृतीनां शास्त्राण्यासन्निति पिङ्गलकृतात्तन्मतनिर्देशादवगम्यते । तत्र कौष्टुकिः—बौधायनीये भारद्वाजगोत्रकाण्डे 'भृष्टयो भृष्टुभिन्दयः क्रोष्टुकयः' इति श्रुतानां क्रौष्टुकीनां कश्चित् स्यात् । अयमतीव प्राचीनः, यतो यास्केनापि स्मर्यते–'द्रविणोदा इन्द्र इति क्रौष्टुकिः' ( निरु. ८. २ ) इति ।

यास्कः–आपस्तम्बेन भृगुषु पठितः–'यास्कबाधूकमौनमौकाः' इति । अयं निरुक्ताख्यनिघण्टुभाष्यप्रणेता 'यास्को मामृषिरव्यग्रो नैकयज्ञेषु गीतवान् ।' ( शां. प. ३४३. ७२ ) इत्यादिना महाभारतेऽपि स्मर्यमाणः ।

ताण्डी–'ऋषिरासीत्कृते तात ! तण्डिरित्येव विश्रुतः ।' ( अनु. १६. १ ) इत्यादिना महाभारते गीयमानमाहात्म्यस्य ऋषेः पुत्रः । 'ऋषीणामभिगम्यश्च सूत्रकर्ता सुतस्तव । मत्प्रसादाद्द्विजश्रेष्ठ ! भविष्यति न संशयः ॥' ( अनु. १६. ७० ) इति तत्रैव भगवतो महेश्वरस्य वरदानोपवर्णनात् ।

सैतवविषयेऽधिकं किमपि न ज्ञायते । केवलं लौकिकच्छन्दोलक्षणविधायकशास्त्रकर्तायमासीदित्यनुमीयते ।

काश्यपस्तु—मन्दारमरन्दटीकायां कृष्णशर्मकृतायां माधुर्यरञ्जन्यां प्रमाणीक्रियते 'तत्र भगवता सूत्रकारेण काश्यपेन...' (पृ. ४ ) इति । कृष्णशर्मणो मध्वमतानुयायित्वात्, मध्वाचार्यस्य च १२३९ शकाब्दे पिङ्गलसंवत्सरे लोकान्तरप्रयाणस्यैतिह्यविद्भिरवधारितत्वात्, तदूर्ध्वभाविना कृष्णशर्मणा प्रमाणत्वेनोपात्तस्य काश्यपसूत्रस्यासादनमिदानीमपि नासम्भवनीयम् । धर्मसूत्रमपि काश्यपप्रणीतमुपलभ्यते । तत्कर्ता छन्दःसूत्रप्रणेता च काश्यप एक एवोत भिन्न इत्यवधारयितुं न पारयामः ।

रातमाण्डव्यौ तु सम्भूय ग्रन्थकर्तारावित्यनुमीयते । तत्र प्रवरदर्पणे भरद्वाजाङ्गिरोमध्ये कश्चित् रातो दृश्यते । माडव्यश्च बौधायनसूत्रे भृगुगणे आश्वलायनसूत्रे तर्पणप्रकरणेऽन्यत्र च बहुषु ग्रन्थेषु श्रुतः । महाभारते च (आदि. १०७ ) कश्चिन्माण्डव्य उपवर्णितः । तत्र को वा रातसहचर इत्यनिर्णीतमेव । धर्मशास्त्रमपि रातमाण्डव्यप्रणीतमस्तीति स्मृतिसारसमुच्चयादिपर्यालोचनां प्रतीयते । तत्र रातमाण्डव्य इत्येकत्वेन व्यपदेशो दृश्यते, स च शङ्खलिखितवत्सम्भूयग्रन्थकर्तृत्वनिमित्तक एव स्यात् ।

एतदतिरिक्ता अन्येऽपि छन्दःशास्त्रकाराः पिङ्गलाचार्यात्पूर्वकालिका भवितुमर्हन्ति, यन्मतमसौ 'एकीयम्' ( ५. १५ ) इति निर्दिशति । परं तद्विषयेऽविदितविशेषा जोषमेवावतिष्ठामः ।

अथ पिङ्गलाचार्यादूर्ध्वकालिकत्वेनाध्यवसितान् कांश्चिदार्षान् ग्रन्थानालोचयामः ।

पिङ्गलाचार्यादुत्तरकालिकाच्छन्दोग्रन्थकाराः ।

तत्र शौनकीये प्रातिशाख्येऽन्त्यैः षोडशादिभिस्त्रिभिः पटलैर्वैदिकच्छन्दसां लक्षणानि निरूपितानि । शौनकश्च नितान्तं प्राचीन इति विमर्शकाः । परं वयमिमं पिङ्गलादूर्ध्वतनं मन्यामहे । यतः प्रातिशाख्ये छन्दःशास्त्रापेक्षया बहवच्छन्दसां सूक्ष्मभेदा लक्षिता दृश्यन्ते । न च तद्विषय एव शास्त्रे तदनिरूपणं सङ्गच्छते, विना तत्पूर्वभावित्वात् । अस्ति चान्यदपि गमकं यच्छन्दःशास्त्रे न्यङ्कुसारिण्याः 'स्कन्धोग्रीवी क्रौष्टुकेः । उरोबृहती यास्कस्य' ( ३. २९-३० ) इत्याचार्यनामग्रहणपूर्वकं संज्ञाद्वयं प्रादर्शि, प्रातिशाख्ये तु '—न्यङ्कुसारिणी । स्कन्धोग्रीव्युरोबृहती त्रेधैनां प्रतिजानते ॥' ( १६. ४३ ) इति नामग्रहणैरपेक्ष्येणैव । तेन छन्दःशास्त्रस्य प्राचीनतावचनेनैव सिद्ध्यति । किञ्च दृश्यते प्रातिशाख्ये 'यजुषां षट् । साम्नां द्विः । ऋचां त्रिः' ( २. ६-८ ) इति छन्दःसूत्राणामनुवाद इव, 'यजुषां षडृचां त्रिःषट् साम्नां द्वादश सम्पदि ।' ( १६. १२ ) इति । तस्मात्प्रातिशाख्यादपि छन्दःशास्त्रमेव प्राचीनम् । प्रातिशाख्ये दृष्टाश्छन्दोविशेषास्तु विशल्यकरण्यां सङ्गृहीता एवास्माभिरिति नात्र पुनरुच्यन्ते ।

कात्यायनप्रणीतं ऋक्सर्वानुक्रमसूत्रं तु प्रायः प्रातिशाख्यानुसारीति तस्य ततोऽर्वाचीनत्वं निर्विवादम् । छन्दःशास्त्रादर्वाक्तनत्वे त्वस्यास्ति स्फुटतरं प्रमाणं यत् छन्दःशास्त्रीययोः 'न्यूनाधिकेनैकेन निचृद्भुरिजौ । द्वाभ्यां विराट्स्वराजौ' ( छं. ३. ५९-६० सर्वा० ३. ४-५ ) इति सूत्रयोरविकलयोरनुवादः । सर्वानुक्रमे च 'अथ च्छन्दांसि' इत्युपक्रम्य तृतीयाद्येकादशान्तैः खण्डैर्ऋग्वेदेऽपेक्षितानां छन्दसां लक्षणान्युक्तानि । अस्माभिस्तु तानि सर्वाणि टिप्पण्यां सोदाहरणानि प्रदर्शितान्येव । शुक्लयजुःसर्वानुक्रमसूत्रं तु छन्दोविषये न ऋक्सर्वानुक्रमसूत्रान्मात्रयापि भिद्यते, अतस्तद्विषये न किञ्चिद्वक्तव्यमस्ति ।

अग्निपुराणे ३२८ तममध्यायमारभ्य ३३५ तमपर्यन्तमष्टभिरध्यायैः क्रमेण परिभाषा, दैव्यादिसंज्ञाः, पादाधिकारः, उत्कृत्यादीनि च्छन्दांसि—आर्यादिमात्रावृत्तानि च, विषमवृत्तानि, अर्धसमवृत्तानि, समवृत्तानि, प्रस्तारादि, इति निरूपितमुपलभ्यते । एतच्च सर्वमपि पिङ्गलोक्तस्य छन्दःशास्त्रस्यानुवादरूपमेव । तथा च प्रतिज्ञातं तत्र 'छन्दो वक्ष्ये मूलशब्दैः पिङ्गलोक्तं यथाक्रमम्' । ( ३२८-१ ) इति । छन्दःशास्त्रे शुद्धाशुद्धपाठपर्यालोचने प्रक्षिप्ताद्यवधारणे च सुतरामुपयुज्यत एतत् ।

गरुडपुराणे पूर्वखण्डे २०७ तममारभ्य २१२ पर्यन्तं षड्भिरध्यायैः क्रमेण परिभाषा, मात्रावृत्तानि, समवृत्तानि, अर्धसमवृत्तानि, विषमवृत्तानि, प्रस्तारादि

च वर्णितं दृश्यते । अत्र कतिचिच्छन्दःशास्त्रेऽनुक्तानामपि वृत्तानां लक्षणानि समुपलभ्यन्ते । तानि चास्मदीयटिप्पण्युक्तलक्षणैर्गतान्येव । वैदिकछन्दसां लक्षणानि तु नात्र वर्णितानि । इदं पैङ्गलीयाच्छास्त्रादुत्तरकालिकमेव, 'तावदर्धे तद्गुणितं द्विद्व्यूनं तु तदन्ततः । परे पूर्णं परे पूर्ण–' इति तदनुवाददर्शनात् ।

नारदीयपुराणे पूर्वखण्डे ५७ तमेऽध्याये–'लौकिकं वैदिकं चापि छन्दो द्विविधमुच्यते ।' इत्युपक्रम्य गणसंज्ञाः, समार्धसमादिलक्षणानि, उक्तादि संज्ञाः, प्रस्तारं च निरूप्य ('इत्येतत्किञ्चिदाख्यातं छन्दसां लक्षणं मुने ! । प्रस्तारोक्तप्रभेदानां नामानन्त्यं प्रजायते ॥ २१ ॥' इत्युपसंहृतम् । अत्र वृत्तानां प्रातिस्विकलक्षणानि न सन्त्येव ।

विष्णुधर्मोत्तरे तृतीयखण्डे ३ अध्याये गायत्र्यादिकृत्यन्तं छन्दःसामान्यलक्षणमभिधाय, लघुगुरुविशेषं प्रस्तारं चोक्त्वा 'दिङ्मात्रमेतत्कथितं नरेन्द्र ! विस्तारजिज्ञासुरतो मनुष्यः । संसाधयेत्तत्स्वधिया यथावत्सुदुस्तरं विस्तरशो हि वक्तुम् ॥२०॥' इत्युपसंहारः कृतः ॥

एतावन्त एवास्मत्सन्दृष्टा आर्षाश्छन्दोग्रन्थाः । एषु पिङ्गलाचार्यकृतं छन्दःशास्त्रमेव प्रतनतरं प्रमाणभूतं सर्वाङ्गपूर्णं च ।

अथ कोऽयं पिङ्गलनागः ? इति पर्यनुयोगे महाभारते जैमिनीये सर्पसत्रे दग्धेषु

पिङ्गलनागः तस्य कालश्च ।

नागेषु कश्चित्पिङ्गलो दृश्यते–'निष्टानको हेमगुहो नहुषः पिङ्गलस्तथा ।' ( आदि. ३५. ९ ) इति । नासौ छन्दःशास्त्रप्रणेता भवितुमर्हति, मुनित्वाभावात्, अस्यान्यथैव मरणश्रवणाच्च । किन्तु मात्स्येऽङ्गिरस्सु 'बोधिर्नगः सौगमाक्षिक्षीरयोरिकिरेव च ।' ( १९६. ६ ) इति श्रुतस्य नगस्य पुत्रः; तत्रैव 'ज्ञात्वायनो हरिर्वाश्यः पैङ्गलश्च तथैव च ।' ( १९६. ३२ ) इति श्रुतस्य पैङ्गलस्य पिता चायं पिङ्गलनागो भविष्यतीत्यस्माकं सम्भावना । एनं फणित्वेन वर्णयन्तस्तु नागशब्देन प्रतारिता एवेति मन्यामहे ।

एतेन महाभाष्यकारं पतञ्जलिमेव पिङ्गलापरनामधेयमाचक्षाणा अपि व्याख्याताः । किञ्च महाभाष्ये नवाह्निके 'पैङ्गलकाण्व' ( आह्नि. ९ सू. ७३ ) शब्ददर्शनात्, भाष्यात्प्राचीनायामृग्वेदसर्वानुक्रमण्यां छन्दःशास्त्रीयसूत्रानुवादस्योपदर्शितत्वाच्च पिङ्गलस्य महाभाष्यकारात्पतञ्जलेः प्राचीनत्वं व्यक्ततरम् ।

वामनपुराणे प्रातःस्मरणीयेषु–'सनत्कुमारः सनकः सनन्दनः सनातनोऽप्यासुरिपिङ्गलौ च । ( १४. २५ ) इति नामसङ्कीर्तनं प्रायोऽस्यैव भविष्यति, आसुरिसाहचर्यात् । स्कान्दे काशीखण्डे च–'गणेन पिङ्गलाख्येन पिङ्गलेशाख्यसंज्ञितम् । लिङ्गं प्रतिष्ठितं शम्भोः कपर्दीशादुदग्दिशि ॥' ( ५५. २ ) इति शिवलिङ्गप्रतिष्ठापकत्वेनोपवर्णितः पिङ्गलोऽयमेव भवितुमर्हति, अस्य 'शिवप्रसादाद्विशुद्धमति'त्वस्योक्तत्वात् । सर्वानुक्रमटीकायां षड्गुरुशिष्यस्तु–सूच्यते हि भगवता पिङ्गलेन पाणिन्यनुजेन'

( ७ ) इति लिखति, तत्र न प्रमाणान्तरमुपलभामहे। वयं त्वेनं पूर्वमुपदर्शितैः प्रमाणैः पाणिनेः पूर्वतनं जानीमहे। परं सम्प्रति 'यथा मकारेणापिङ्गलस्य सर्वगुरुत्रिकः प्रतीयेत' ( मी. भा. १. १. ५ ) इति वचनदर्शनाच्छबरस्वामिनः पूर्वकालिकत्वमात्रमविप्रतिपन्नमस्य। निश्चयेन कालनिर्णयस्तु सर्वेषामेवर्षीणां दुर्निरूप्य एवेति वयमप्यन्ततस्तद्विषये वाचंयमतामेवोररीकुर्मः।

निवासस्तु पिङ्गलाचार्यस्य प्रायः पश्चिमोदधेस्तीरप्रदेश एवेति निश्चीयते। तथा हि

पिङ्गलस्य देशः

तद्देशोद्भवस्त्रीषु रूढौ 'अपरान्तिका' ( ४. ४१ ) 'वानवासिका' ( ४. ४३ ) इति शब्दौ छन्दःशास्त्रे वृत्तनामत्वेनायं प्रायुङ्क्त। अपरान्तिका 'पश्चिमसमुद्रसमीपेऽपरान्तदेशः, तत्र भवाः'। वानवासिका 'कोङ्कणविषयात् पूर्वेण वनवासविषयः, तत्र भवाः' (२. ५. २६,३२) इति वात्स्यायनसूत्रव्याख्याजयमङ्गला। 'प्राच्यवृत्तिः' 'उदीच्यवृत्तिः' (४.३७-३८) इति संज्ञे अप्युक्तार्थेऽनुकूले। महोदधितीरवासित्वादेव 'छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलं' ( २.२६ ) इति पञ्चतन्त्रे दृश्यमानं तद्विषयकं वर्णनमपि स्वरसतः सङ्गच्छते। अतो दक्षिणकोङ्कणमेवास्य निवासस्थानमिति सम्भावयामः।

छन्दःशास्त्रे वृत्तसंज्ञाः।

छन्दःशास्त्रे समुपलभ्यमानासु वृत्तसंज्ञासु तु काश्चन विलासिनीललितसुभगान् भावानाविष्कुर्वन्ति, काश्चन मात्रासमकं पदचतुरूर्ध्वं गच्छन्त्यो माणवकाक्रीडितकमाम्रेडयन्ति, काश्चिन्मत्तमयूरसेवितं कुसुमितलतावेल्लितमनोहरं पुष्पिताग्राभिः शाखाभिरुपशोभितमुद्यानं विचरन्ति, काश्चित् हलमुखीं पृथ्वीं यवमतीं शालिनीं च वितन्वन्ति, काश्चन हरिणीयूथसनाथं शार्दूलविक्रीडितभीषणं भुजङ्गविजृम्भितं काननं सेवन्ते, काश्चिद्द्रुतविलम्बितमृषभगजविलसितं जुषन्ते, काश्चन विद्युन्मालाप्रभाभासुरं वातोर्मिप्रेरितजलधरमालोद्गतं वर्धमानं चण्डवृष्टिप्रपातं भजन्ते, काश्चन हंसरुतनादितां क्रौञ्चपदोपशोभितां जलोद्धतगतिं वेगवतीं वाहिनीमवगाहन्ते, काश्चिच्चाश्वललितरथोद्धतां केतुमतीमपराजितां प्रहरणकलितां सेनां स्मारयन्तीत्यहो सर्वतोमुखी सूक्ष्मनिरीक्षणशक्तिराचार्यस्य। एतासां सम्यग्विमर्शे ग्रन्थकर्तू रसिकता च जीविकारहस्यं च तत्कालीना देशस्थितिश्च सुपरिज्ञाता स्यादिति मन्यामहे।

वृत्तनाम्नामुपपत्तिः।

यद्यप्येता आचार्यवर्येण यथारुचि कल्पिताः-प्राचीनैः कश्यपादिभिश्च विहिताः समादृता इति न तत्र कश्चन पर्यनुयोगः, तथापि कासांचित् संज्ञानामुपपत्तिरप्यनुमातुं शक्येति पश्यामः। यथा-षडक्षरपादायाः मध्याक्षरद्वयस्य लघुत्वात् **तनुमध्या**। पठ्यमाना द्रुतं वक्रं सर्पतः सर्पशिशोरनुकरोतीति **भुजगशिशुसृता**। द्रुतं विलम्बितं च पठ्यत इति **द्रुतविलम्बितम्**। मत्तमयूरस्य नृत्तमिव भातीति **मत्तम-**

यूरम् । यतित्रये विश्रम्य विश्रम्य मन्दं क्रामन्ती **मन्दाक्रान्ता** । व्याघ्रस्य द्रुतिर्द्वादशहस्तेति प्रसिद्धेर्द्वादशाक्षरेषु यतिमच्छार्दूलविक्रीडितम्,–इत्येवमादि द्रष्टव्यम् ।

सङ्ख्येयपरैः पदैः सङ्ख्याया उपलक्षणं चास्मिन्नेव शास्त्रे प्रथमतो दृश्यते । अत्रत्या प्रस्तारादिगणितरीतिराचार्यस्य गणितविद्यायामपि पाटवं प्रकाशयति । एतत्कर्तृकोऽन्यः कोऽपि ग्रन्थोऽस्ति न वेति न ज्ञायते ।

**प्राकृतपिङ्गलस्य** कर्ता त्वन्य एवेत्याहुः । तत्र बहु वक्तव्येऽपि विस्तरभयाद्विरम्यते ।

अदश्छन्दःशास्त्रं दुरूहसूत्रमयत्वाद्व्याख्यानसापेक्षमित्यत्र न कोऽपि संशयः । बहूनि हि सूत्राणि व्याख्यागम्यान्येवात्रत्यानि । अस्य चेदम्प्रथमं व्याख्यानमेषा हलायुधप्रणीता वृत्तिरेवेति **केचित्** । तस्याः प्रथमत्वे मानं तु 'मृतसञ्जीवनी'ति समाख्यैव । यद्यपि **हलायुधवृत्तौ** 'केचिदिदं सूत्रं व्यवस्थितविभाषया व्याचक्षते' ( १. १० ) इत्यादि दृश्यते; तथापि तत्सम्प्रदायमनुलक्ष्यैवोक्तं, न लिखितटीकापुस्तकम् । यतो व्याख्या नाम ग्रन्थस्यार्थबोधिकेव रक्षिकापि भवति । न च हलायुधेन छन्दःशास्त्रस्य मूलं सम्यगुपलब्धम् । दृश्यन्ते हि बहून्यावापोद्वापस्थलान्येतदीयवृत्तौ । यथा–"उक्तम्, अत्युक्तम्, मध्यम्, प्रतिष्ठा, सुप्रतिष्ठेति चतुरुत्तरवृद्ध्या चतुरक्षरादिविंशत्यक्षरान्तं पुरस्ताच्छन्दः पञ्चकं···एतान्यपि भगवता पिङ्गलनागेन सूत्र्यन्ते–उक्तम् । साति । मध्यम् । प्रतिष्ठा । सुच ।" इति **षड्गुरुशिष्य** उदाजहार । न चैतत्सूत्रपञ्चकं हलायुधवृत्तौ दृश्यते ॥ 'एकोनेऽध्वा' ( ८. ३३ ) इति सूत्रं वैदिकैरधीयमानमपि न व्याख्यातम्, अध्वपरिच्छित्तिश्च षट्प्रत्ययपूरिण्यपि न स्वीकृता ॥ अत्रानुक्तं गाथा' ( ८. १ ) इति सूत्रात्परमष्टादशसूत्राणि 'हंसरुतं म्नौ गौ' ( ६. ७ ) 'ततं नौ मरौ ( ६. ६४ ) इत्यादीनि च सूत्राणि वैदिकपाठविरुद्धानि मात्स्ये चाननूदितान्यपि व्याख्यातानि । न ह्येवं सति प्राचीने व्याख्याने सम्भवति । क्वचित् यथावत्सूत्रार्थानवबोधोऽप्युपरितनमनुमानं द्रढयतीति ।

वयं तु हलायुधेनादृष्टमपि प्राचीनं व्याख्यानं भवितुमर्हति छन्दःशास्त्रस्येति ब्रूमः । न ह्येतावन्तं कालमव्याख्यातं स्थास्यति वेदाङ्गं दुर्बोधतरं चेदं शास्त्रम् । किञ्च 'मयरसतजभनलगसम्मितं' इत्यादिकं यच्छ्लोकषट्कं छन्दःशास्त्रादौ दृश्यते, तत्प्राचीनस्यैव व्याख्यानस्य प्रस्तावनारूपं स्यादित्यनुमिमीमहे । न हीदं हलायुधप्रणीतं, न च तेन व्याख्यातम् । ब्रह्मयज्ञे त्वेतत्प्रतीकमेवाधीयते वैदिकैः । विधीयते च **देवीभागवते**–'अथ शिक्षां प्रवक्ष्यामि पञ्चसंवत्सरेति च । मयरसतजभनेत्येव गोत्र्मा इत्येव कीर्तयेत् ॥' ( ११. १०. ९ ) इति । अतश्छन्दोभाष्यस्य परमप्राचीनस्येदं मङ्गलमिति प्रतीमः ।

*(Margin notes: छन्दःशास्त्रस्य व्याख्यानम् ।)*

सम्प्रति तु अनतिहृदयङ्गमापीयं हलायुधवृत्तिरेवाद्रियते सर्वत्र। हलायुधश्च

हलायुधस्य कालः

शालिवाहनस्य पञ्चदश्यां शताब्द्यामुत्पन्न इति केचिद्वर्णयन्ति। तथा ह्यस्ति हलायुधेनैव प्रणीतं कविरहस्याभिधं किमपि काव्यम्। तत्र च स्वोपजीव्यः कृष्णराज उपवर्णितोऽनेन। स च विजयनगराधीश्वर एव। यतः १४३० शकाब्दे तद्दत्तग्रामप्रशस्तौ 'नमस्तुङ्गशिरः–' इति श्लोक उपलभ्यते। स च छन्दःशास्त्रवृत्तिगत इति।

तदेतन्न युक्तम्, 'नमस्तुङ्गशिर' इतिश्लोकस्य प्राचीनत्वेन तदुल्लेखस्याकिञ्चित्करत्वात्। तथा च १३१३ शकाब्दे प्रजापतिवत्सरे हरिहररायेण गोवापुरे मन्त्रिपदे नियुक्तनृहरिप्रदत्तदानपत्रेऽपि दृश्यतेऽसौ श्लोकः। उपलभ्यते च ततः प्राचीनतरेण बाणभट्टेन प्रणीते हर्षचरितेऽपि।

किञ्च कविरहस्ये समुपवर्णितः कृष्णराजो राष्ट्रकूटकुलोद्भवः। 'तोलयत्यतुलं शक्त्या यो भारं भुवनेश्वरः। कस्तं तुलयति स्थाम्ना राष्ट्रकूटकुलोद्भवम्॥' इति हि तत्रोपवर्ण्यते। न च विजयनगराधीश्वरः कृष्णराजो राष्ट्रकूटकुलोद्भवः इति प्रसिद्धमेवैतिह्यविदाम्।

कृष्णराजः खुडिगदेवश्च

राष्ट्रकूटेषु तु त्रयः कृष्णाः प्रसिद्धाः–प्रथमः शुभतुङ्गापरनामकः, द्वितीयः अकालवर्षाख्यः, तृतीयोऽप्यकालवर्षसंज्ञकश्चेति। तत्र तृतीय एव हलायुधस्योपजीव्य इति निश्चिनुमः। यतस्तदनन्तरमधिष्ठितराज्यः खुडिगदेवोऽपि क्वचित् स्मरणविषयतां नीतोऽनेन–'त्वया कृतपरिग्रहे खुडिगवीर! सिंहासने' (लि. पा. ७. १७) इति, 'यशःशेषीभूते खुडिगनरनाथे गुणनिधौ' (लि. पा. ७. २०) इति च। खुडिगदेवश्च तृतीयस्य कृष्णदेवस्य वैमात्रेयो भ्रातेति दानपत्रलेखादवगम्यते। तथाहि–'ऐन्द्रपदजिगीषयेव स्वर्गमधिरूढे च ज्येष्ठे भ्रातरि श्रीमत्कृष्णराजदेवे युवराजदेवदुहितरि कन्दकदेव्याममोघवर्षनृपाज्जातः खोट्टिगदेवो नृपतिरभूद्भुवनविख्यातः' इति। अयं हि कृष्णराजानन्तरं ८९३ शकाब्दं यावत् महीपतिपदमलंचकार। कृष्णराजश्च शालिवाहनस्य ८६७–८८८ वत्सरपर्यन्तं भुवं शशासेत्युत्कीर्णलेखादिभिर्ज्ञायते। असावेव कृष्णराजः कविरहस्ये नायकतां नीतो हलायुधेन।

मुञ्जः

तत्पश्चाच्च मालवेशो वाक्पतिराजापराख्यो मुञ्जराज आश्रितोऽनेन। प्रकृता छन्दःशास्त्रटीका च तदाश्रयेणैव प्रणीता। अत एवास्यां (४. १९। ५. ३४। ५. ३९। ७. ५। ८. १२) इत्यत्र मुञ्जः सबहुमानमुपश्लोक्यते। तस्य वाक्पतिराज इत्यपरं नामधेयमपि दृश्यते (४. २०)। उपलभ्यते च नूनं राष्ट्रकूटेभ्य आच्छिन्नं 'वल्लभेश्वर' विरुद-

अपि । मुञ्जश्च ८९३–९१९ शकाब्दं यावन्मालवानलमकार्षीदिति स एव समयो मृतसञ्जीवन्याः प्रणयनस्येति निर्धारयामः ।

न च यदाधारेणैवं निर्णीयते, तान्युदाहरणपद्यान्यन्यदीयानीति शङ्क्यम्, 'सर्वलघुच्छन्दसि गीत्यार्याशब्दस्य प्रवेशयितुमशक्यत्वात्तन्नाम नोक्तम्' (४. ४८) 'उपस्थितप्रचुपितादीनामस्मिन्नावेशयितुं न शक्यन्ते संज्ञा इति नोक्तिः' (५. ३०) इति वृत्तिदर्शनेन वृत्तनामगर्भितानां श्लोकानां हलायुधेनैव निर्मितत्वस्य स्फुटमवगम्यमानत्वात् । न हि परकीयश्लोकानामेवमुपपादनं सम्भवतीति ।

हलायुधस्य देशविषये तु न विशेषतः किमपि गमकमुपलभामहे । केवलं 'इह हि भवति दण्डकारण्यदेशे स्थितिः' 'पद्माम्बिकातीर्थयात्रागतानेकसिद्धाकुले' (७. ३३) इति श्लोकं पश्यन्तो दाक्षिणात्यमेवैनं सम्भावयामः ।

**हलायुधस्य देशादिकम् ।**

अत्रोपश्लोकितां पद्माम्बिकां चास्य कुलदेवतामुत्प्रेक्षामहे । पिता चास्य मीमांसापारावारपारदृश्वा नाम्ना च नूनं विश्वरूपः । तथा ह्येनमुपवर्णयति स्वायम्—'श्रुतिपरिपूतवक्त्रमतिसुन्दरवाग्विभवं तमखिलजैमिनीयमतसागरपारगतम् । अवितथवृत्तविप्रजनपूजितपादयुगं पितरमहं नमामि बहुरूपमुदारमतिम् ॥' (८. १४) इति । अत एव हलायुधस्यापि मीमांसायां बहुमानः । तथा चोक्तम्—'मीमांसारसममृतं पीत्वा शास्त्रोक्तिः कटुरितरा भाति । एवं संसदि विदुषां मध्ये जल्पामो जयपणवं हत्वा ॥' (६. १०) इति ।

अस्य तु मुख्यं शास्त्रं व्याकरणमिति कविरहस्याज्ज्ञायते । अत्रापि (१. १० । ४. १४) इत्यादिवृत्तिविलोकनेनास्य वैयाकरणत्वं स्फुटीभवति ।

अत्र वृत्तौ माण्डव्यः (पृ. ५०) श्वेतपटः (पृ. ७३) कालिदासः (पृ. ७८) भारविः (पृ. ८०) धरणीधरः (पृ. ८५) कात्यायनः (पृ. १०४) इति ग्रन्थकृतां नामान्युपलभ्यन्ते । तत्र धरणीधरोऽस्य समकालिकः कश्चिदनुबन्धी सुहृद्वा स्यादित्यनुमीयते ।

अभिधानरत्नमालाख्यः कोशोऽप्यनेनैव निर्मित इत्याहुः ।

लक्ष्मणसेनस्य मन्त्री ब्राह्मणसर्वस्व–शिवसर्वस्वादिग्रन्थकर्ता, वृत्तरत्नाकरटीकाकर्तू रामचन्द्रकवेर्भ्राता चेत्यादयो हलायुधा अस्माद्भिन्ना एव ।

अस्य शास्त्रस्य महामहिमशालिभिः शालिवाहनस्य सप्तदश्याः शताब्द्याः पूर्वार्धसमुद्भूतैर्भास्करराजैः प्रणीतं भाष्यम्, वार्तिकराजश्चेति

**अन्यानि व्याख्यानानि**

प्रकामं गुणगरिमाभिरामं विद्योतते व्याख्यानद्वयम् । तद्वत्त्रा सखारामभट्टेन विरचिता छोटीवृत्तिरपि वरीवर्ति । परं कृतप्रयत्ना अपि तन्नालभिष्महि । अन्यच्च व्याख्यानं न नः कर्णपदवीमवतीर्णम् । अतः स्वीयया 'विशल्यकरणी' नाम्न्या टिप्पण्या योजितमेतत् ।

वैदिकच्छन्दसामुदाहरणानि तु वृत्तिकृता न प्रदर्शितानि। तान्यस्माभिरन्विष्यान्विष्य यथास्थानं निवेशितानि। अत्र वैदिकोदाहरणविषये पूर्वपूर्वेषां संशोधनम्। तत्नसंशोधकैः प्रायो गजनिमीलिकैव स्वीकृता। तथा च षट्पदाजगत्युदाहरणम्–( ३. ४९ )

'आपो न देवीरुप यन्ति (१) होत्रियमवः पश्यन्ति (२) विततं यथारजः (३)
प्राचैर्देवासः प्र णयन्ति (४) देवयुं ब्रह्मप्रियं (५) जोषयन्ते वरा इव (६) ॥'
( ऋ. १. ६.४ )

इति दत्तं दृश्यते। वस्तुत इयं चतुष्पदाजगत्येवास्थाने पादकल्पनां विधाय षट्पदत्वं प्रापिता। तत्रापि द्वितीयं षष्ठं चापहाय नाष्टाक्षरस्य कस्यापि पादस्य सम्भवतीति भक्षितेऽपि लशुने न शान्तो व्याधिः। पुरस्ताज्ज्योतिरुदाहरणम्–( ३. ५२ )

'अबोध्यग्निर्ज्म उदेति सूर्यो व्युषा (१) श्चन्द्रा मह्या वो अर्चिषा (२)
आयुक्षातामश्विना या (३) तवे रथं प्रासावीद्देवः (४) सविता जगत्पृथक् ॥'
( ऋ. २. २. २७ )

इयमपि चतुष्पदैव सती पञ्चपदतां नीता। इदं चात्रात्यन्तमाश्चर्यकरं यत् 'यातवे' इति पदमध्येऽपि पादः कल्पितः। ककुब्गत्युदाहरणम्–( ३. ५६ )

'उतासो दैववदिति ( १ ) रुरुष्यतां नाम उग्रः ( २ )। उरुस्यन्तभवतो ( ३ ) वृद्धश्रवसः (४) ॥' अत्र प्रदर्शितः पादः पञ्चाक्षरो भवति, न पुनः षडक्षर इति शङ्कमत्या इदमुदाहरणं भवितुमर्हति, न ककुब्गत्याः। अशुद्धविषये चात्र शुद्धपाठप्रदर्शनमेव पर्याप्तं मन्यामहे तत्त्वविदां चेतश्चमत्काराय—

'उत नो देव्यदितिरुरुष्यतां नासत्या। उरुष्यन्तु मरुतो वृद्धशवसः ॥'(ऋ.६.२.२२)

इदमपरमालोक्यतां भूरिग्जगत्या उदाहरणम्—( ३. ५९ )

'इयो न विद्वां अयुजिरियं धुरि ( १ ) तं वहानि प्रतरणिमवश्चुवम् ( २ )।
नास्य वेश्मि विसुचनावृतं पुनः ( ३ ) विद्वान्पयः पूर एत अजुनेषति ( ४ ) ॥'

कियतीं वाशुद्धीनां काष्ठामारोपितेयमृगिति शुद्धपाठावलोकनेन स्वयमेव विभावयन्तु दोषज्ञाः। शुद्धपाठश्चेत्थम्—

'ह्यो न विद्वाँ अयुजि स्वयं धुरि तां वहामि प्रतरणीमवस्युवम्।
नास्या वश्मि विमुचं नावृतं पुनर्विद्वान् पथः पुर एत ऋजु नेषति ॥(ऋ.४.२.२८)

स्थालीपुलाकन्यायेनाशुद्धीनां स्वरूपं जानीयुस्तज्ज्ञा इति दिङ्मात्रमेवेदं प्रादर्शि। प्रायः सर्वाण्यप्युदाहरणान्येवमेवाशुद्धतराणि लक्षणविसंवादीनि चासन्। अस्माभिस्तु तान्यपसार्य लक्षणानुगतानि निवेशितानि। मूलं च सूक्ष्मेक्षिकया अस्मदीयः प्रयत्नः निरीक्ष्य संशोधितम्। क्वचिद्व्याख्यया दुर्बोधतापि दूरीकृता। मतान्तराणि च युक्तायुक्तविवेचनपूर्वकं निरूपितानि। शौनककात्यायनाभ्यामुक्तानि सूक्ष्मभेदानां लक्षणानि सङ्गृहीतानि, तेषामुदाहरणानि च

**पङ्क्तिर्जागतौ गायत्रौ च । ३ । ३७ ॥**

यदा द्वौ पादौ जागतौ भवतस्ततो गायत्रौ च, तदा 'पङ्क्तिः' नाम छन्दः ॥

**पूर्वौ चेदयुजौ सतः पङ्क्तिः । ३ । ३८ ॥**

यत्र पूर्वोद्दिष्टौ पादावयुजौ भवतः, प्रथमतृतीयौ पादौ जागतावित्यर्थः, द्वितीय-चतुर्थौ च गायत्रौ तच्छन्दः 'सतःपङ्क्तिः' नाम भवति ॥ यथा—

---

[७] **पिपीलिकमध्या—**

'अभिवो वीरमन्धसो मदेषु गाय (१) गिरा महा विचेतसम् (२) ।
इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा (३) ॥' ( ऋ० सं० ६।४।३।४ )

[८] **विषमपदा—**

'सनितः सुसनितरुग्र (१) चित्र चेतिष्ठ सूनृत (२) ।
प्रासहा सम्राट् सहुरिं सहन्तं (३) भुज्युं वाजेषु पूर्व्यम् (४) ॥'
( ऋ० सं० ६।४।४।५ ) चतुर्थपादे 'पूर्विय'मिति व्यूहेन पूर्तिः ।

[९] **बृहती**—( ३।३३ ) इत्यत्रोदाहृता । **शौनकस्तु**—

'तं त्वा वयं पितो वचोभि (१) र्गावो न हव्या सुषूदिम (२) ।
देवेभ्यस्त्वा सधमाद (३) मस्मभ्यं त्वा सधमादम् (४) ॥'
( ऋ० सं० २।५।७।६ ) इतीमामुदाजहार ( प्रा० शा० १६।४७ )

तत्रोत्तमयोः पादयोः 'देवेभिय' 'अस्मभियं' इति व्यूहेन पूरणम् ।

दैव्यादयः प्रागुक्ता भेदा इहाप्यनुसन्धेयाः । तदुदाहरणानि तु—

[१] **दैवी**—'भूर्भुवः स्वः ।' ( तै० ब्रा० ३।१०।५।१ )

[२] **आसुरी**—'महीनां पयोऽसि विहितं देवत्रा ।' ( तै० आ० ४।१२।१ )

[३] **प्राजापत्या**—'स्वस्त्य१ घोषसो दोषसश्च सर्वं आपः सर्वगणो अशीय ।'
( अथ० सं० १६।४।६ )

[४] **याजुषी**—'देवानां परिषूतमसि ।' ( तै० सं० १।१।२।५ )

[५] **साम्नी**—'मरुतः पोत्रात् सुष्टुभः स्वर्कादृतुना सोमं पिबतु ।'
( अथ० सं० २०।२।१ )

[६] **आर्ची**—'मध्वा यज्ञं नक्षति प्रैणानो नराशंसो अग्निः सुकृद्देवः सविता विश्ववारः ।' ( अथ० सं० १५।२७।३ )

[७] **ब्राह्मी**—'देवो अग्निः स्विष्टकृद्देवमिन्द्रं वयोधसम् । देवो देवमवर्द्धयत् ।
अतिच्छन्दसा छन्दसेन्द्रियम् । क्षत्रमिन्द्रे वयो दधत् ।
वसुवने वसुधेयस्य वेतु यज ॥' ( तै० ब्रा० ६।२०।१० )

१. उदाहरणमस्याः प्रस्तारपङ्क्त्यां द्रष्टव्यम् ।

'अग्निना तुर्वशं यदुं परावतं (१) उग्रादेवं हवामहे (२)।
अग्निर्नयन्नववास्त्वं बृहद्रथं (३) तुर्वीतिं दस्यवे सहः (४)॥'
(ऋग्वेदे-अ० १ अ० ३ व० ११ मं० ३)

## विपरीतौ च। ३। ३९॥

यदा तावेव पादौ विपरीतौ भवतः; तदापि सतःपङ्क्तिरेव। अयमर्थः—प्रथमतृतीयौ पादौ गायत्रौ, द्वितीयचतुर्थौ [ च ] जागतौ तदापि सतःपङ्क्तिरेव भवति॥ यथा—
'य ऋष्वः श्रावयत्सखा (१) विश्वेत्स वेद जनिमा पुरुष्टुतः (२)।
तं विश्वे मानुषा युगे (३) न्द्रं हवन्ते तविषं यतस्रुचः (४)॥'
(ऋग्वेदे-अ० ६ अ० ४ व० ३ मं० २)

## प्रस्तारपङ्क्तिः पुरतः। ३। ४०॥

यदा जागतौ पादौ पूर्वौ भवतः, गायत्रौ च परतः, तदा 'प्रस्तारपङ्क्तिः' नाम। यथा—
'भद्रमिद्भद्रा कृणवत्सरस्वत्य (१) कवारी चेतति वाजिनीवती (२)।
गृणाना जमदग्निवत् (३) स्तुवाना च वसिष्ठवत् (४)॥'
(ऋग्वेदे-अ० ५ अ० ६ व० २० मं० ३)

'पङ्क्तिर्जागतौ गायत्रौ च' (पि० सू० ३।३७) इत्यनेन गतार्थमिदं संज्ञाविशेषज्ञापनार्थं पुनरुच्यते॥

## आस्तारपङ्क्तिः परतः। ३। ४१॥

यदा जागतौ पादौ परौ भवतः, गायत्रौ च पूर्वौ, तदा 'आस्तारपङ्क्तिः' नाम। यथा—
'भद्रं नो अपि वातय (१) मनो दक्षमुत क्रतुम् (२)।
अधा ते सख्ये अन्धसो वि वो मदे (३) रणन् गावो न यवसे विवक्षसे (४)॥'
(ऋग्वेदे-अ० ७ अ० ७ व० ११ मं० १)

## विष्टारपङ्क्तिरन्तः। ३। ४२॥

यदा जागतौ पादौ मध्ये भवतः, आद्यन्तयोश्च गायत्रौ, तदा 'विष्टारपङ्क्तिः' नाम यथा—
'अग्ने तव श्रवो वयो (१) महि भ्राजन्ते अर्चयो विभावसो (२)।
बृहद्भानो शवसा वाजमुक्थ्यं१ (३) दधासि दाशुषे कवे (४)॥'
(ऋग्वेदे-अ० ८ अ० ७ व० २८ मं० १)

---

१. सायणभाष्ये तु सतोबृहती नाम। २. लाघवाय 'युजौ चे'ति वक्तव्ये गौरवाङ्गीकारो 'विपरीते'ति संज्ञापीति सूचनार्थः। तथा चोक्तं शौनकेन—'विपरीता विपर्यये।' (प्रा० शा० १६।५४) इति। ३. कलिकातामुद्रितपुस्तके प्रथममास्तारपङ्क्तिः। तदयुक्तम्, 'आस्तारपङ्क्तिः पुरतः पश्चादास्तारपङ्क्तिका।' (३३०।१२) इत्यग्निपुराणविरोधात्, सर्वानुक्रमविरोधाच्च।

**संस्तारपङ्क्तिर्बहिः । ३ । ४३ ॥**

यदा तावेव जागतौ पादौ बहिर्भवतः, मध्ये च गायत्रौ, तदा 'संस्तारपङ्क्तिः' नाम छन्दः । यथा—

'पितुभृतो न तन्तुमित्सुदानवः (१) प्रति दध्मो यजामसि (२) ।
उषा अप स्वसुस्तमः (३) संवर्तयति वर्तनिं सुजातता (४) ॥'
(ऋग्वेदे-अ० ८ अ० ८ व० ३० मं० ३,४)

**अक्षरपङ्क्तिः पञ्चकाश्चत्वारः । ३ । ४४ ॥**

पञ्चाक्षरैश्चतुर्भिः पादैः 'अक्षरपङ्क्तिः' नाम छन्दः । ननु चत्वारिंशदक्षरा पङ्क्तिश्छन्दः, तत्कथं 'पञ्चकाश्चत्वारः' इत्युच्यते ? तत्रोत्तरम्—'द्वावप्यल्पशः' ( पि० सू० ३।४५ ) इत्यस्मात् सिंहावलोकितन्यायेनाल्पग्रहणमनुवर्तते । तेन पङ्क्तेरल्पत्वं विशेषात्प्रतिपादितं भवति । यथा—

'पश्वा न तायुं (१) गुहा चतन्तं (२)
नमो युजानं (३) नमो वहन्तम् (४) ॥'
(ऋग्वेदे-अ० १ अ० ५ व० ९ मं० १)

**द्वावप्यल्पशः । ३ । ४५ ॥**

पञ्चग्रहणमनुवर्तते । पञ्चाक्षराभ्यां पादाभ्यामल्पशः पङ्क्तिर्नाम छन्दो भवति, क्वचिदेव वेदे न सर्वत्र ॥ यथा—

'सदो विश्वायुः (१) शर्म सप्रथाः ।' ( तै० आ० ४।११ )

**पदपङ्क्तिः पञ्च । ३ । ४६ ॥**

'पञ्चकाः' इत्यनुवर्तते । यदा पञ्चाक्षराः पञ्च पादा भवन्ति, तदा 'पदपङ्क्तिः' नाम छन्दः । यथा—

'घृतं न पूतं (१) तनूररेपाः (२) शुचि हिरण्यम् (३) ।
तत्ते रुक्मो न (४) रोचत स्वधावः (५) ॥'
(ऋग्वेदे-अ० ३ अ० ५ व० १० मं० ६)

**चतुष्कपदा त्रयश्च । ३ । ४७ ॥**

---

१. **कात्यायनमते** त्वियं दशाक्षरपादद्वयवती द्विपदा विराट् । **शौनकेन** पक्षद्वयमप्युक्तम्—'विराजो द्विपदाः केचित्सर्वा आहुश्चतुष्पदाः । कृत्वा पञ्चाक्षरान् पादांस्तांस्तथाक्षरपङ्क्तयः ॥' ( ऋ० प्रा० शा० १७।५० ) इति । साङ्ख्यायनोऽप्याह—'उत्तरस्या दशाक्षरौ, तामक्षरपङ्क्तिरित्यप्याचक्षते ।' ( श्रौ० सू० ७।२७ ) इति ।

२. भुरिग्रूपत्वादेकाक्षराधिक्यम् । कात्यायनेन तु 'पञ्चकाश्चत्वारः पङ्क्तश्चैकः' ( सर्वा० ४।२ ) इत्येव सूत्रितम् ।

चकारः 'पञ्चकाः' इत्यनुकर्षणार्थः। यदा प्रथमश्चतुरक्षरः पादः द्वितीयः षडक्षरः, ततस्त्रयः पञ्चाक्षरास्तदा पञ्चपदा पदपङ्क्तिरेव। यथा—

'अधा ह्यग्ने (१) क्रतोर्भद्रस्य (२) दक्षस्य साधोः (३)।
रथीर्ऋतस्य (४) बृहतो बभूथ (५) ॥'
(ऋग्वेदे–अ० ३ अ० ५ व० १० मं० २)

**पथ्या पञ्चभिर्गायत्रैः। ३। ४८॥**

पञ्चभिरष्टाक्षरैः पादैः 'पथ्या' नाम पङ्क्तिर्भवति[2]। अस्योदाहरणम्—

'यो अर्यो मर्तभोजनं (१) परादादाति दाशुषे (२)।
इन्द्रो अस्मभ्यं शिक्षतु (३) विभजा भूरि ते वसु (४)
भक्षीय तव राधसः (५) ॥' (ऋग्वेदे–अ० १ अ० ६ व० २ मं० १)

**जगती[3] षड्भिः। ३। ४९॥**

'गायत्रैः' इत्यनुवर्तते। गायत्रैः षड्भिः पादैः 'जगती' नाम पङ्क्तिर्भवति। यथा—

'महि वो महतामवो (१) वरुण मित्र दाशुषे (२)।
यमादित्या अभि द्रुहो (३) रक्षथा नेमघं नशत् (४)
दनेहसो व ऊतयः (५) सुऊतयो व ऊतयः (६) ॥'
(ऋग्वेदे–अ० ६ अ० ४ व० ७ मं० १)

---

१. वस्तुतस्त्वत्र क्रमो न विवक्षितः। यथा कथञ्चित्पादत्रयं पञ्चाक्षरम्, एकश्चतुरक्षरः, एकश्च षडक्षर इत्यर्थः। अत एव 'द्वौ वा पादौ चतुष्कश्च षट्कश्चैकस्त्रिपञ्चकाः। (ऋ० प्रा० शा० १६।१५) इति शौनकीयलक्षणम् 'द्वौ पादौ एकश्चतुष्कः, एकः षट्कः, त्रयश्च पञ्चाक्षरा भवन्ती'ति क्रमनैरपेक्ष्येणैव व्याचख्यावुव्वटः। तत्राद्यचतुष्कान्त्यषट्कोदाहरणम्—

'अधा ह्यग्ने० (ऋ० सं० ३।५।१०।२) इत्येव।

तृतीयचतुष्कान्त्यषट्कोदाहरणम्—

'एभिर्नो अर्कैः (१) भवा नो अर्वाङ् (२) स्वर्ण ज्योतिः (३)।
अग्ने विश्वेभिः (४) सुमना अनीकैः (५) ॥' (ऋ० सं० ३।५।१०।३)

चतुर्थचतुष्कपञ्चमषट्कोदाहरणम्—

'अग्ने तमद्या- (१) श्वं न स्तोमैः (२) क्रतुं न भद्रं (३) हृदिस्पृशम् (४)।
ऋध्यामा त ओहैः (५) ॥' (ऋ० सं० ३।५।१०।१)

अन्यान्यप्युदाहरणानि शाखान्तरे मृग्याणीति दिक्।

२. यद्यप्यस्याः प्रथमेऽर्धे पादद्वयम्, उत्तरार्धे च त्रयमिति प्रायो दृश्यते; तथापि क्वचिद्वैपरीत्यस्यापि विद्यमानत्वात् न तथा नियमः। यथा—

'नकिर्देवा मिनीमसि (१) नकिरा योपयामसि (२) मन्त्रश्रुत्यं चरामसि (३)।
पक्षेभिरपि कक्षेभि (४) रत्राभि सं रभामहे (५) ॥' (ऋ० सं० ८।७।२२।७)

३. 'महापङ्क्तिः षडष्टकाः' (प्रा० शा० १६।७१) इति शौनकः। कदाचिदत्रापि मूले 'महती' इति पाठः सम्भाव्यते।

इति पङ्क्त्यधिकारः ।

अथ त्रिष्टुब्जगत्यधिकारः ।

**एकेन त्रिष्टुब्ज्योतिष्मती । ३ । ५० ॥**

त्रिष्टुभः प्रस्तुतत्वात्प्रत्यासत्तेश्च तस्या एव संबन्धः । एकेन त्रैष्टुभेन पादेनाधिकाराच्चतुर्भिर्गायत्रैः पञ्चपात् 'त्रिष्टुब्ज्योतिष्मती' नाम छन्दो भवति । त्रैष्टुभेन सह 'पञ्चभि-

---

१. 'पङ्क्तिः पञ्चपदे'ति यास्कः । (निरु० ७।१२।११) । **सर्वानुक्रमणिकायां कात्यायनेन** तु पङ्क्तेरष्टौ भेदा उक्ताः—'**पञ्चमं पङ्क्तिः पञ्चपदा** [१] **अथ चतुष्पदा—विराड् दशकैः** [२] **अयुजौ जागतौ सतोबृहती** [३] **युजौ चेद्विपरीता** [४] **आद्यौ चेत्प्रस्तारपङ्क्तिः** [५] **अन्त्यौ चेदास्तारपङ्क्तिः** [६] **आद्यन्त्यौ चेत्संस्तारपङ्क्तिः** [७] **मध्यमौ चेद्विष्टारपङ्क्तिः** [८]' (ऋ० सर्वा० ८) इति । तत्र [१] **पङ्क्तिः**—(३।४८) इत्यत्रोदाहृता ।

[२] **विराट्**—

'ऋतस्य॑ प॒थि वे॒धा अ॑पायि (१) श्रि॒ये मनां॑सि दे॒वासो॑ अक्रन् (२) ।
दधा॑नो॒ नाम॑ म॒हो वचो॑भि॒ (३) र्वपु॑र्दृ॒शये॑ वे॒न्यो व्या॑वः (४) ॥'

(ऋ० सं० ४।७।१७।३)

चतुर्थपादे व्यूहेनाक्षरपूर्तिः ।

[३–८] सतोबृहती-सतःपङ्क्तिः (३।३८), विपरीता (३।३९), प्रस्तारपङ्क्तिः (३।४०), आस्तारपङ्क्तिः (३।४१), संस्तारपङ्क्तिः (३।४३), विष्टारपङ्क्तिः (३।४२) इति उदाहृता एव ।

दैव्यादिभेदानामुदाहरणानि तु—

[१] **दैवी**—'नम॑स्का॒राय॑ ।' (तै० सं० ४।५।८।८)

[२] **आसुरी**—'अ॒रि॒प्रा आपो॒ अप॑ रि॒प्रम॒स्मत् ।' (अथ० सं० १६।१।१०)

[३] **प्राजापत्या**—'प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते ।'

(साम० सं० पू० ५।२।६।१०)

[४] **याजुषी**—'इन्द्र॑स्य त्वा बा॒हुभ्या॒मुद्य॑च्छे ।' (तै० सं० १।१।२)

[५] **साम्नी**—'विश्वतो दावन् विश्वतो न आभर यं त्वा शविष्ठमीमहे ।'

(सा० सं० पू० ५।२।६।१)

[६] **आर्ची**—'वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः ।
वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नु रन्त्यः ॥'

(सा० सं० पू० ६।३।१३।२)

[७] **ब्राह्मी**—'प्राची॒ दिग॒ग्निरधि॑पतिरसि॒तो र॑क्षि॒तादि॒त्या इष॑वः । तेभ्यो॒ नमोऽधि॑पतिभ्यो॒ नमो॑ रक्षि॒तृभ्यो॒ नम॒ इषु॒भ्यो॒ नम॑ एभ्यो अस्तु । यो॒३॒ऽस्मान्द्वेष्टि॒ यं व॒यं द्वि॒ष्मस्तं वो॒ जम्भे॑ दध्मः ॥' (अथ०सं०३।२७।१)

गायत्रैः' (पिं० सू० ३।४८) इत्युक्ते चत्वार एव गायत्राः पादा लभ्यन्ते । यथा 'उपाध्यायेन सह पञ्च शिष्या आगता' इत्युक्ते उपाध्यायपञ्चमाः प्रतीयन्ते ॥

## तथा जगती । ३ । ५१ ॥

एकेन जागतेन पादेन चतुर्भिर्गायत्रैः पादैः पञ्चपाज्जगती 'ज्योतिष्मती' नाम छन्दो भवति ॥

## पुरस्ताज्ज्योतिः प्रथमेन । ३ । ५२ ॥

प्रथमेन त्रैष्टुभेन पादेन, शेषैश्च गायत्रैः पादैः 'पुरस्ताज्ज्योतिः' नाम त्रिष्टुब भवति । यथा—

'कृधी नो अह्रयो देव सवितः (१) स च स्तुषे मघोनाम् (२) ।
सहो न इन्द्रो वह्निभि (३) र्न्येषां चर्षणीनां (४) चक्रं रश्मिं न योयुवे[4] (५) ॥'
(ऋग्वेदे-अ० ८ अ० ४ व० २७ मं० ४)

पूर्वेणैव गतार्थत्वाद्विशेषसंज्ञाज्ञापनार्थमिदम् । 'तथा जगती' इत्यनुवर्तनीयम् । तेनाद्येन जागतेन पादेन चतुर्भिश्च गायत्रैः 'पुरस्ताज्ज्योतिः' नाम जगती भवति । यथा—

'नमोवाके प्रस्थिते अध्वरे नरा (१) विवक्षणस्य पीतये (२) ।
आयातमश्विना गत (३) मवस्युर्वामहं हुवे (४) धत्तं रत्नानि दाशुषे (५) ॥'
(ऋग्वेदे-अ० ६ अ० ३ व० १७ मं० ५)

## मध्येज्योतिर्मध्यमेन । ३ । ५३ ॥

---

१. वस्तुतस्त्वत्र एकेनेति 'पथ्या पञ्चभिर्गायत्रैः' (३।४८) इत्यतो गायत्रपादस्य प्रस्तुतत्वात् प्रत्यासत्तेश्च तस्यैव संबन्धः । तस्मात् गायत्रेणैकेन पादेनाधिकारात् त्रिभिस्त्रैष्टुभैः पादैश्चतुष्पात् त्रिष्टुप् 'ज्योतिष्मती' नाम—इति व्याख्यानमेव युक्तम्, 'ततो ज्योतिर्यतोऽष्टकः ।' (ऋ० प्रा० १६।६६) इति शौनकीयमप्येवं सङ्गच्छते ।

२. 'एकेन गायत्रेण पादेन त्रिभिर्जागतैश्चतुष्पाद् 'ज्योतिष्मती' नाम ।' इति व्याख्यानान्तरम् ।

३. 'प्रथमेन गायत्रेण पादेन शेषैश्च त्रैष्टुभैस्त्रिभिः 'पुरस्ताज्ज्योतिः त्रिष्टुब्' ।' यथा—
'मा छिदो मृत्यो मा वधीः (१) । मा मे बलं विवृहो मा प्रमोषीः (२) ।
प्रजां मा मे रीरिष आयुरुग्र (३) । नृचक्षसं त्वा हविषा विधेम (४) ॥'
(तै० आ० ३।१५।२)

४. द्वितीयचतुर्थपादयोर्व्यूहेनाक्षरपूर्तिः । ५. 'गायत्रेण पादेन त्रिभिर्जागतैः' । यथा—
'ताभिरायातं वृषणो (१) प मे हवं विश्वप्सुं विश्ववार्यम् (२) ।
इषा मंहिष्ठा पुरुभूतमा नरा (३) याभिः क्रिविं वावृधुस्ताभिरा गतम् (४) ॥'
(ऋ० सं० ६।२।७।२)

यदा मध्यमस्त्रैष्टुभः पादो भवति, उभयतश्च द्वौ द्वौ गायत्रौ, तदा 'मध्येज्योतिः' नाम त्रिष्टुब् भवति । मध्येज्योतिरित्यलुक्समासः । यथा—

'बृहद्भिरग्ने अर्चिभिः (१) शुक्रेण देव शोचिषा (२) ।
भरद्वाजे समिधानो यविष्ठ्य (३) रेवन्नः शुक्र दीदिहि (४) द्युमत्पावक दीदिहि(५)॥'
( ऋग्वेदे-अ० ४ अ० ८ व० २ मं० २ )

'तथा जगती' इत्यनुवर्तनीयम् । तेन मध्यमेन जैागतेन एकेन जागतेन मध्यमेन तृतीयेनोभयतश्च द्वौ द्वौ गायत्रौ, तदा 'मध्येज्योतिः' नाम जगती भवति । यथा—

'यन्मे नोक्तं तद्रवतां (१) शकेयं यदनुब्रुवे (२) ।
निशामतं निशामहै मयि व्रतं (३) सह व्रतेषु भूयासं (४) ब्रह्मणा सङ्गमेमहि (५)॥'
( ऋग्वेदे-अ० ८ अ० ८ व० ९ परि० मं० ४ )

## उपरिष्टाज्ज्योतिरन्त्येन । ३ । ५४ ॥

यदा चत्वारो गायत्राः पादा भवन्ति, अन्ते च त्रैष्टुभः, तदा 'उपरिष्टाज्ज्योतिः' नाम त्रिष्टुब् भवति ।

---

१. यदा मध्यमो गायत्रो द्वितीयः पादो भवति उत्तरतश्च द्वौ त्रैष्टुभौ [१], यदा वा पूर्वौ अन्तिमश्चैकस्त्रैष्टुभः [२], तदा 'मध्येज्योतिर्नाम त्रिष्टुब्' भवति । यथा—

[१] 'स नो युवेन्द्रो जोहूत्रः सखा (१) शिवो नरामस्तु पाता (२) ।
यः शंसन्तं यः शशमानमूती (३) पचन्तं च स्तुवन्तं च प्रणेषत् (४) ॥'
( ऋ० सं० २।६।२५।३ )

[२] 'आवो रुवण्युमौशिजो हुवध्यै (१) घोषेव शंसमर्जुनस्य नंशे (२) ।
प्र वः पूष्णे दावन आँ (३) अच्छा वोचेय वसुतातिमग्नेः (४) ॥'
( ऋ० सं० २।१।१।५ )

२. 'एकेन गायत्रेण मध्यमेन द्वितीयेनोत्तरतश्च जागताभ्यां [१], प्रथमद्वितीयाभ्यां चतुर्थेन च जागतेन [२], 'मध्येज्योतिर्जगती' भवति ।' यथा—

[१] 'यद्वा यज्ञं मनवे सं मिमिक्षथु (१) रेवेत्काण्वस्य बोधतम् (२) ।
बृहस्पतिं विश्वान्देवाँ अहं हुव (३) इन्द्राविष्णू अश्विना वा शुहेषसा (४) ॥'
( ऋ० सं० ५।८।३४।२ )

[२] 'तदश्विना भिषजा रुद्रवर्तनी (१) । सरस्वती वयति पेशो अन्तरः (२) ।
अस्थि मज्जानं मासरैः (३) । कारोतरेण दधतो गवां त्वचि (४) ॥'
( तै० ब्रा० २।६।४।३ )

३. 'यदा त्रयस्त्रैष्टुभाः पादा भवन्ति, अन्ते च गायत्रस्तदा 'उपरिष्टाज्ज्योतिस्त्रिष्टुब्' नाम भवति ।' यथा—

'स वृह्लेचिदभि तृणत्ति वाज (१) मर्वता स धत्ते अक्षिति श्रवः (२) ।
त्वे देवत्रा सदा पुरूवसो (३) विश्वा वामानि धीमहि (४) ॥'
( ऋ० सं० ६।७।१३।५ )

यथा—

'संवेशिनीं संयमिनीं (१) ग्रहनक्षत्रमालिनीम् (२)।
प्रपन्नोऽहं शिवां रात्रीं (३) भद्रे पारमशीमहि (४) भद्रे पारमशीमह्यों नमः (५)॥'

( ऋग्वेदे-अ० ८ अ० ७ व० १४ परि० मं० ४)

'तथा जगती' इत्यनुवर्तनीयम्। तेनान्तेन जागतेन पादेन शेषैश्च गायत्रैश्चतुर्भिः 'उपरिष्टाज्ज्योतिः' नाम जगती भवति। यथा—

'लोकं पृण छिद्रं पृण (१)। अथो सीद शिवात्वम् (२)। इन्द्राग्नी त्वा बृहस्पतिः (३)।
अस्मिन् योनावसीषदन् (४)। तया देवतयाङ्गिरस्वद्ध्रुवा सीद (५)॥'

( यजुर्वेदे-तै० ब्रा० अ० ३ प्र० ११ अ० ६ मं० ३ )

इति त्रिष्टुब्जगत्यधिकारः।

---

१. 'हिओं' इति व्यूहेनाक्षरपूर्तिः। २. 'तथा जगती' त्यनुवर्तनीयम्। तेनान्तेन गायत्रेण शेषैश्च जागतैस्त्रिभिः 'उपरिष्टाज्ज्योतिर्जगती' नाम भवति। यथा—

'अग्निरत्रिं भरद्वाजं गविष्ठिरं (१) प्रावन्नः कण्वं त्रसदस्युमाहवे (२)।
अग्निं वसिष्ठो हवते पुरोहितो (३) मृळीकाय पुरोहितः (४)॥'

( ऋ० सं० ८।८।८।५)

३. 'तु अ' इति व्यूहेनाक्षरपूर्तिः। ४. अक्षराधिक्याद्भुरिक्। एवमेवोत्तरत्र समाधेयम्। ५. 'त्रिष्टुप् स्तोभत्युत्तरपदा। का तु त्रिता स्यात्? तीर्णतमं छन्दः। त्रिवृद्वज्रस्तस्य स्तोभतीति वा। यत्त्रिरस्तोभत्तत्त्रिष्टुभस्त्रिष्टुप्त्वमिति विज्ञायते।' इति **यास्कः**। ( नि० ७।१५।१२ )। क्वचित्तु त्रिष्टुगित्यपि श्रूयते—'एकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुक्।' ( तै० सं० ६।३।३ ) 'चतुश्चत्वारिंशदक्षरा त्रिष्टुक्।' ( तै० सं० ७।२।६ ) 'त्रिष्टुग्भवति। इन्द्रियं वै त्रिष्टुक्।' ( तै० ब्रा० ३।३।९ ) इत्यादौ।

**सर्वानुक्रमणिकायां कात्यायनाचार्योक्ताः**—'**षष्ठं त्रिष्टुप्, त्रैष्टुभपदा [१] द्वौ तु जागतौ यस्याः सा जागते जगती, त्रैष्टुभे त्रिष्टुप् [२] वैराजौ जागतौ चाभिसारिणी [३] नवकौ वैराजस्त्रैष्टुभश्च; द्वौ वा वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थाना [४] एकादशिनस्त्रयोऽष्टकश्च विराड्रूपा [५] द्वादशिनस्त्रयोऽष्टकश्च ज्योतिष्मती [६] यतोऽष्टकस्ततो ज्योतिः [७] चत्वारोऽष्टका जागतश्च महाबृहती [८] मध्ये चेद्यवमध्या [९] आद्यौ दशकावष्टकास्त्रयः पङ्क्त्युत्तरा, विराट्पूर्वा वा [१०]**' ( ऋ० सर्वा० ९ ) इति दशविधास्त्रिष्टुभः.

तत्र विशिष्टानामुदाहरणानि प्रदर्श्यन्ते।

**[१] त्रिष्टुप्—**

'कस्य नूनं कतमस्यामृतानां (१) मनामहे चारु देवस्य नाम (२)।
को नो मह्या अदितये पुनर्दात् (३) पितरं च दृशेयं मातरं च (४)॥'

( ऋ० सं० १।२।१३।१)

[२] **जागतद्विपादा १ त्रिष्टुप्—**
'यूपव्रस्का उत ये यूपवाहा (१) श्चषालं ये अश्वयूपाय तक्षति (२) ।
ये चार्वतो पचनं सम्भर (३) न्त्युतो तेषामभिगूर्तिर्न इन्वतु (४) ॥'
(ऋ० सं० २।३।८।१)

२ **जगती—**
'अस्मै भीमाय नमसा समध्वर (१) उषो न शुभ्र आभरा पनीयसे (२) ।
यस्य धाम श्रवसे नामेन्द्रियं (३) ज्योतिरकारि हरितो नायसे (४) ॥'
(ऋ० सं० १।४।२२।३)

[३] **अभिसारिणी—**
'यो वाचा विवाचो मृध्रवाचः (१) पुरू सहस्राशिवा जघान (२) ।
तत्तदिदस्य पौंस्यं गृणीमसि (३) पितेव यस्तविषीं वावृधे शवः (४) ॥'
(ऋ० सं० ७।७।९।५)

[४] **विराट्स्थाना १—**
'स्वस्ति न इन्द्रो वृद्धश्रवाः (१) स्वस्ति नः पूषा विश्ववेदाः (२) ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः (३) स्वस्ति नो बृहस्पतिर्दधातु (४) ॥'
(ऋ० सं० १।६।१६।१)

२—
'धिष्वा शवः शूर येन वृत्र (१) मवाभिनद्दानुमौर्णवाभम् (२) ।
अपावृणोर्ज्योतिरार्याय (३) नि सव्यतः सादि दस्युरिन्द्र (४) ॥'
(ऋ० सं० २।६।६।३)

अत्र क्रमस्याविवक्षितत्वादन्येऽपि भेदा भवन्ति, तेषामुदाहरणानि (ऋ० सं० २।६।३-६) इत्यादौ द्रष्टव्यानि ।

[५] **विराड्रूपा**—व्याख्यानान्तरपक्षे ज्योतिष्मत्या गता ।
[६] **ज्योतिष्मती**—उदाहृता ।
[७] **ज्योतिः**—सभेदा पुरस्तादुदाहृता ।
[८] **महाबृहती**—उपरिष्टाज्ज्योतिषा गता ।
[९] **यवमध्या**—मध्येज्योतिरेव ।
[१०] **पङ्क्त्युत्तरा, विराट्पूर्वा वा—**
'समिन्द्रेरय गामनड्वाहं (१) य आवहदुशीनराण्या अनः (२) । भरतामप यद्रपो (३) द्यौः पृथिवि क्षमा रपो (४) मोषु ते किञ्चनाममत्(५) ॥'
(ऋ० सं० ८।१।२३।५)

तत्रैतादृशि त्रिष्टुप्छन्दसि विशेषमाह **कात्यायनाचार्यः**—'बह्वूना अपि त्रिष्टुभ एवेत्युद्देशः' (ऋ० सर्वा० ३।१०) इति । अस्यार्थस्तु-त्रिष्टुभश्चतुश्चत्वारिंशदक्षरत्वे प्राप्ते सति बहुभिरक्षरैरूना अपि विराड्रूपादयस्त्रिष्टुबधिकारोक्तास्त्रिष्टुभ एव स्युः । एतेन पञ्चभिश्च-

तुभिस्त्रिभिर्वाक्षरैरूना अपि ऋचस्त्रिष्टुप्सूक्तस्थास्त्रिष्टुभ एव, न तु तासां निचृत्पङ्क्तित्वभुरिक्पङ्क्तित्वादि। यथा—

'अस्मा इदु त्यमुपमं स्वर्षां (१) भराम्याङ्गूषमास्येन (२)।
महिष्ठमच्छोक्तिभिर्मतीनां (३) सुवृक्तिभिः सूरिं वावृधध्यै (४)॥'

(ऋ० सं० १।४।२७।३)

इत्येषा षड्भिरक्षरैरूनापि त्रिष्टुबेव। इतिशब्दः प्रकारे। उद्देशः सङ्क्षेपः। पूर्वोक्तप्रकारो बहूनेषु तत्तदधिकारात्तदात्मकसप्तच्छन्दस्सु गायत्र्यादिष्वभिमत इत्यर्थः। तेन 'त्रयः सप्तकाः पादनिचृदि'त्येकविंशत्यक्षरापि, 'मध्यमः षट्कश्चेदतिनिचृदि'ति च विंशत्यक्षरापि गायत्र्येवेत्यादि सिद्धं भवति। समामनन्ति हि—'न वा एकेनाक्षरेण छन्दांसि वियन्ति, न द्वाभ्याम्' (ऐ० ब्रा० १।६।१) इति। न वियन्ति अन्यत्वं न गच्छन्तीत्यर्थः। द्व्येकयोरुपलक्षणत्वाद्बहूनेष्वपि भवतीति। एतेन—'न्य१ग्वातोऽव वाति (१) न्यक्तपति सूर्यः (२)। नीचीनमघ्न्या दुहे (३) न्यग्भवतु ते रपः (४)॥' (ऋ० सं० ८।१।२५।५) इत्यस्याः षड्विंशत्यक्षराया अप्यनुष्टुप्त्वमपि व्याख्यातम्।

अथ दैव्यादयः प्रदर्श्यन्ते—

[१] **दैवी**—'देवं गममसि।' (तै० सं० १।१।२।२०)

[२] **आसुरी**—'स्वधा पितृभ्यः पृथिविषद्भ्यः।' (अथ० सं० १८।४।७८)

[३] **प्राजापत्या**—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। आददे नारिरसि।' (शु० वा० सं० ३७।१)

[४] **याजुषी**—'अग्निजा असि प्रजापते रेतः।' (तै० आ० ४।२।१५)

[५] **साम्नी**—'ऊर्जा मित्रो वरुणः पिन्वतेडाः पीवरीमिषं कृणुही न इन्द्र।' (सा० सं० पू० ५।२।७।९)

[६] **आर्ची**—एता असदन्सुकृतस्य लोके ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिं पाहि मां यज्ञनियम्।' (तै० सं० १।१।११)

[७] **ब्राह्मी**—'वि य और्णोत् पृथिवीं जायमान आ समुद्रमदधादन्तरिक्षे।
तस्य देवस्य क्रुद्धस्यैतदागो य एवं विद्वांसं ब्राह्मणं जिनाति।
उद्वेपय रोहित प्रक्षिणीहि ब्रह्मज्यस्य प्रति मुञ्च पाशान्॥

(अथ० सं० १३।३।२२)

६. 'जगती गततमं छन्दः। जलचरगतिर्वा, जलगल्यमानोऽसृजदिति च ब्राह्मणम्।' इति निरुक्तम् (७।१३।१)। कात्यायनाचार्योक्ता यथा—'**सप्तमं जगती, जागतपदा [१] अष्टिनस्त्रयः स्वौ च द्वौ महासतोबृहती [२] अष्टकौ सप्तकः षट्को दशकौ नवकश्च, षड्षट्का वा महापङ्क्तिः** [३] (ऋ० सर्वा० १०) इति त्रिविधा आख्यः.

[१] **तत्र जगती**—प्रदर्शयिष्यते (४।७) इत्यत्र।

## एकस्मिन्पञ्चके छन्दः शङ्कुमती । ३ । ५५ ॥

यदैकः पञ्चाक्षरः पादो भवति, त्रयश्च षडक्षराः, तदा 'शङ्कुमती' नाम गायत्री । यथा—

['तिस्रो देवीर्बर्हि (१) रेदꣳसदन्त्विडा (२) सरस्वती भारती (३) ।
मही गृणाना (४) ॥' (य० तैत्तिरीयसंहिता—कां० ४ प्र० १ अ० ८ मं० ९)]

---

[२] महासतो बृहती—
'आ यः पप्रौ भानुना रोदसी उभे (१) धूमेन धावते दिवि (२) ।
तिरस्तमो ददृश ऊर्म्यास्वा (३) श्यावास्वरुषो वृषा (४)
श्यावा अरुषो वृषा (५) ॥' (ऋ० सं० ४।८।२।१)

[३] महापङ्क्तिः-१—
'सूर्ये विषमा सजामि (१) दृतिं सुरावतो गृहे (२) । सो चिन्नु न मराति (३)
नो वयं मरामा (४) रे अस्य योजनं हरिष्ठा (५) मधु त्वा मधुला चकार (६) ॥'
(ऋ० सं० २।५।१५।५)

२—षडष्टका (३।४९) इत्यत्रोदाहृता ।

दैव्यादिप्रागुक्तभेदोदाहरणान्यपि प्रदर्श्यन्ते । तत्र—

[१] दैवी—'ओषधे त्रायस्वैनम् ।' (तै० सं० १।२।१।२)

[२] आसुरी—'मधु त्वा मधुला करोतु ।' (तै० आ० ४।२।१८)

[३] प्राजापत्या—'हरिः पतङ्गः पटरी सुपर्णः । दिविक्षयो नभसा य एति ।
स न इन्द्रः कामवरं ददातु ॥' (तै० आ० ३।११)

[४] याजुषी—'नमः शर्वाय च पशुपतये च ।' (तै० सं० ४।५।५।२)

[५] साम्नी—'श्रियं च वा एष संविदं च गृहाणामश्नाति यः पूर्वोऽतिथेरश्नाति ।'
(अथ० सं० ९।६।३।६)

[६] आर्ची—'बध्नान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि
यं च वयं द्विष्मस्तमतो मा मौक् ।' (तै० सं० १।१।९।६)

[७] ब्राह्मी—'आपो वा इदꣳ सर्वं विश्वा भूतान्यापः । प्राणा वा आपः पशव
आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दाꣳ-
स्यापो ज्योतीꣳष्यापो यजूꣳष्यापः सत्यमापः सर्वा देवता आपो
भूर्भुवः सुवराप ओम् ।' (तै० आ० १०।२२)

१. 'यदैकः पञ्चाक्षरः पादो भवति त्रयश्च द्वादशाक्षरास्तदा 'शङ्कुमती जगती' नाम छन्दो भवति ।' इति क. मु. पु. टिप्पण्यां लिखितपुस्तके च । २. इदं चिन्त्यमेव । एकस्य पादस्य पञ्चाक्षरत्वमात्रं ह्यत्र विवक्षितम् । तथा च लक्ष्यमपि—

१ 'युक्तेन मनसा वयं (१) देवस्य सवितुः सवे (२) ।
स्वर्ग्याय शक्त्या (३) ॥' (शु० य० सं० ११।२)

छन्दोग्रहणे प्रकृते पुनश्छन्दोग्रहणं छन्दोमात्रप्रतिपत्त्यर्थम्। तेन सर्वेषु छन्दःसु पञ्चाक्षरैकपादलक्षिता शङ्कुमती भवति। इतरथा ह्यनन्तरं सप्रत्ययः स्यात्॥

**षट्के ककुद्मती। ३। ५६॥**

एकस्मिन् षडक्षरे पादे, अन्येषु यथालक्षणमुपात्तेषु च्छन्दोमात्रं, ककुद्मती नाम।

---

१.-२ **उष्णिहो** यथा—'सुवीर्यं स्वश्व्यं (१) सुगव्यमिन्द्र दद्धि नः (२)।
होतेव पूर्वचित्तये प्राध्वरे॥' (ऋ० सं० ६।१।६।८)

३ **अनुष्टुभो** यथा—'पितुं नु स्तोषं (१) महो धर्माणं तविषीम् (२)। यस्य त्रितो व्योजसा (३) वृत्रं विपर्वं मर्दयत् (४)॥' (ऋग्वेदे-अ०२अ०५व०६मं०१)

४ **बृहत्या** यथा—'वास्तोष्पते ध्रुवा स्थूणां (१) सत्रं सोम्यानाम् (२)।
द्रप्सो भेत्ता पुरां शश्वतीना (३) मिन्द्रो मुनीनां सखा (४)॥'
(ऋ० सं० ६।१।२४।४)

५ **पङ्क्त्या** यथा—'अग्ने तव त्यदुक्थ्यं (१) देवेष्वस्त्याप्यम् (२)।
स नः सत्तो मनुष्वदा (३) देवान्यक्षि विदुष्टरो (४)
वित्तं मे अस्य रोदसी (५)॥' (ऋ० सं०१।७।२२।३)

६ **त्रिष्टुभो** यथा—'विधुं दद्राणं समने बहूनाम् (१)। युवानꣳ सन्तं पलितो जगार (२)। देवस्य पश्य काव्यं महित्वाद्यामार (३)।
स ह्यः समान (४)॥' (तै० आ० ४।२०।३)

७ **जगत्या**—मृग्यम्।

२. अत्र दकारो 'यरोऽनुनासिकेऽनुनासिको वा' (पाणि० सू० ८।४।४५) इति छन्दसि पाक्षिकः। भाषायां तु यवादिगणे निपातनात्। ककुब्मती, ककुम्मती, इति क. मु.पुस्तके। तत्र—

१ **गायत्र्या** यथा—'नि येन मुष्टिहत्यया (१) नि वृत्रा रुणधामहै (२)।
त्वोतासो न्यर्वता (३)॥' (ऋ० सं० १।१।१५।२)

२ **उष्णिहो** यथा—'स्तुहीन्द्रं व्यश्ववं (१) दनूर्मिं वाजिनं यमम् (२)।
अर्यो गयं मंहमानं वि दाशुषे (३)॥' (ऋ०सं०६।२।१९।२)

३ **अनुष्टुभो** यथा—'स पूर्व्यो महानां (१) वेनः क्रतुभिरानजे (२)। यस्य द्वारा मनुष्पिता (३) देवेषु धिय आनजे (४)॥' (ऋग्वेदे-अ०६ अ०४ व० ४२ मं०३)

४ **बृहत्या** यथा—'एन्द्र याहि मत्स्व (१) चित्रेण देवराधसा (२)। सरो न प्रास्युदरं सपीतिभि (३) रा सोमेभिरुरु स्फिरम् (४)॥'(ऋ०सं०अ०५अ०७व०१४मं०३)

५ **पङ्क्त्या** यथा—'असदत्र सुवीर्य (१) मुत त्यदाश्वश्व्यम् (२)। देवानां य इन्मनो (३) यजमान इयक्षत्य (४) भीदयज्वनो भुवत्॥' (ऋ० सं० अ० ६ अ० २ व० ४० मं० ८)

६ **त्रिष्टुभो** यथा—'विश्वेदेवा अनमस्यन्भियाना (१) स्त्वामग्ने तमसि तस्थिवांसम् (२)। वैश्वानरोऽवतूतये नोऽमर्त्यो (३) ऽवतूतये नः (४)॥'
(ऋ० सं० अ० ४ अ० ५ व० ११ मं० ७)

## त्रिपादणिष्ठमध्या पिपीलिकमध्या[1] । ३ । ५७ ॥

यदाद्यन्तौ पादौ बह्वक्षरौ, मध्यमोऽल्पतराक्षरः, तदाणिष्ठमध्या सती 'पिपीलिकमध्या' नाम भवति । अयमर्थः—आद्यन्तौ पादावष्टाक्षरौ, मध्यमस्त्र्यक्षरः, एवं त्रिपाद्गायत्री पिपीलिकमध्या नाम भवति । एवं चतुरक्षरे पञ्चाक्षरेऽपि मध्यमे पादे पिपीलिकमध्या सिद्ध्यति । यत्किंचित्त्रिपाच्छन्दो लघुमध्यमपादं तत्सर्वं पिपीलिकमध्यमुच्यते ॥

## विपरीता यवमध्या । ३ । ५८ ॥

आद्यन्तौ पादौ लघ्वक्षरौ, मध्यमश्च बह्वक्षरः, सा गायत्री 'यवमध्या' नाम भवति । एवमुष्णिगादिष्वपि योज्यम् ॥

## ऊनाधिकेनैकेन निचृद्भुरिजौ । ३ । ५९ ॥

चतुर्विंशत्यक्षरा गायत्री एकेनाक्षरेण न्यूनेन सा 'निचृत्' इति विशेषसंज्ञां लभते । एकेनाधिकेन 'भुरिक्' इति । एवमुष्णिगादिष्वपि द्रष्टव्यम् ॥

---

१. 'पिपीलिकमध्येत्यौपमिकम्' ( नि० ७।१३।३ ) इति **यास्कः** ।

१ **गायत्र्या** यथा—'नृभिर्येमानो हर्य॒तो (१) विचक्षणो (२) राजा देवः समुद्रियः (३) ॥' ( ऋग्वेदे–अ० ७ अ० ५ व० १५ मं० १)

२ **उष्णिहो** यथः—'हरी यस्य सुयुजा विव्रता वे (१) रर्वन्ता नु शेपा (२) । उभा रजी न केशिना पतिर्दन् (३) ॥' ( ऋग्वेदे–अ० ८ अ० ५ व० २६ मं० २)

३ **अनुष्टुभो** यथा—'पर्यूषु प्र धन्व वाजसातये (१) परि वृत्राणि सक्षणिः (२) । द्विषस्तरध्या ऋणया न ईयसे (३) ॥' ( ऋग्वेदे–अ० ७ अ० ५ व० २२ मं० १)

४ **बृहत्या** यथा—'अभिवो वीरमन्धसो मदेषु गाय (१) गिरा महा विचेतसम् (२) । इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा (३) ॥' (ऋ०सं०अ०६अ०४व०३मं०४)

२. **गायत्र्या** यथा—'स सुन्वे यो वसूनां (१) यो रायामानेता य इळानाम् (२) । सोमो यः सुक्षितीनाम् (३) ॥' ( ऋ० सं० ७।५।१९।३ )

**उष्णिहो यथा**—'सुदेवः समहासति (१) सुवीरो नरो मरुतः स मर्त्यः (२) । यं त्रायध्वे स्याम ते (३) ॥' ( ऋग्वेदे–अ० ४ अ० ३ व० १३ मं० ५)

३. **निचृद्गायत्र्या** यथा—'अग्निमिन्धानो मनसा (१) धियं सचेत मर्त्यः (२) । अग्निमीधे विवस्वभिः (३) ॥' ( ऋग्वेदे–अ० ६ अ० ७ व० १२ मं० ७)

**निचृदुष्णिहो** यथा—'स इधानो वसुष्कवि (१) रग्निरीळेन्यो गिरा (२) । रेवदस्मभ्यं पुर्वणीक दीदिहि (३) ॥' ( ऋ० सं० १।५।२७।५ )

**निचृदनुष्टुभो** यथा—त्वेषस्ते धूम ऋण्वति (१) दिविषञ्छुक्र आततः (२) । सूरो नहि द्युता त्वं (३) कृपा पावक रोचसे (४) ॥'

( ऋग्वेदे–अ० ४ अ० ५ व० २ मं० १)

निचृद्बृहत्या यथा—'बलं धेहि तनूषु नो (१) बलमिन्द्रानळुत्सु नः (२)। बलं तोकाय तनयाय जीवसे (३) त्वं हि बलदा असि (४) ॥' (ऋग्वेदे-अ० ३ अ० ३ व० २२ मं० ३)

निचृत्पङ्क्त्या यथा—'यच्चिद्धि सत्यसोमपा (१) अनाशस्ता इव स्मसि (२)। आतू न इन्द्र शंसय (३) गोष्वश्वेषु शुभ्रिषु (४) सहस्रेषु तुवीमघ (५) ॥' (ऋ० सं० १।२।२७।१)

निचृत्त्रिष्टुभो यथा—'इदन्त एकं पर ऊ त एकं (१) तृतीयेन ज्योतिषा सं विशस्व (२)। संवेशने तन्व१श्चारुरेधि (३) प्रियो देवानां परमे जनित्रे (४) ॥' (ऋग्वेदे-अ० ८ अ० १ व० १८ मं० १)

निचृज्जगत्या यथा—शतक्रतुमर्णवं शाकिनं नरं (१) गिरो म इन्द्रमुपयन्ति विश्वतः (२)। वाजसनिं पूर्भिदं तूर्णिमप्तुरं (३) धामसाचमभिषाचं स्वर्विदम् (४) ॥' (ऋग्वेदे-अ० ३ अ० ३ व० १५ मं० २)

साङ्ख्यायनसूत्रे तु—'एकेन द्वाभ्यामित्यूनके निचृत्, अतिरिक्ते भुरिक्' (शां० श्रौ० सू० ७।२७) इति विराट् स्वराजावप्यत्रैवान्तर्भाविते ।

४. भुरिग्गायत्र्या यथा—'परि द्युक्षः सनद्रयि (१) भरद्वाजं नो अन्धसा (२)। सुवानो अर्ष पवित्र आ (३) ॥' (ऋ० सं० ७।१।९।१)

भुरिगुष्णिहो यथा—'अप योरिन्द्रः पापज (१) आ मर्तो न शश्रमाणो बिभीवान् (२)। शुभे यद्युयुजे तविषीवान् (३) ॥' (ऋ० सं० ८।५।२६।३)

भुरिगनुष्टुभो यथा—'तां म आवह जातवेदो (१) लक्ष्मीमनपगामिनीम् (२)। यस्यां हिरण्यं विन्देयं (३) गामश्वं पुरुषानहम् (४) ॥' (ऋ०सं० ४।४।३४ परि०२)

भुरिग्बृहत्या यथा—'आ नः स्तोममुप द्रव (१) हियानो अश्वो न सोतृभिः (२)। यं ते स्वधावन्त्स्वदयन्ति धेनव (३) इन्द्र कण्वेषु रातयः (४) ॥' (ऋ० सं० ६।४।१४।५)

भुरिक्पङ्क्त्या यथा—'देवीरापो अपान्नपा (१) यो व ऊर्मिर्हविष्य (२) इन्द्रियावान्मदिन्तमः (३)। तं देवेभ्यो देवत्रा दत्त (४) शुक्रपेभ्यो येषां भागःस्थ (५) ॥' (शु० य० ६।२७)

भुरिक्त्रिष्टुभो यथा—'प्र ऋभुभ्यो दूतमिव वाचमिष्य (१) उपस्तिरे श्वैतरीं धेनुमीळे (२)। ये वातजूतास्तरणिभिरेवैः (३) परि द्यां सद्यो अपसो बभूवुः (४) ॥' (ऋग्वेदे-अ० ३ अ० ७ व० १ मं० १)

भुरिग्जगत्या यथा—हयो न विद्वाँ अयुजि स्वयं धुरि (१) तां वहामि प्रतरणीमवस्युवम् (२)। नास्या वश्मि विमुचं नावृतं पुन (३) र्विद्वान्पथःपुरएत ऋजु नेषति (४) ॥' (ऋग्वेदे-अ० ४ अ० २ व० २८ मं० १)

## द्वाभ्यां विराट्स्वराजौ । ३ । ६० ॥

'ऊनाधिक'ग्रहणमनुवर्तते । द्वाभ्यामक्षराभ्यां न्यूनाधिकाभ्यां गायत्री यथाक्रमं विराट्-स्वैराट्-संज्ञा भवति । एवमुष्णिगादिष्वपि द्रष्टव्यम् ॥[3]

---

१. **विराड्गायत्र्या** यथा—'राजन्तमध्वराणां (१) गोपामृतस्य दीदिविम् (२) । वर्धमानं स्वे दमे (३) ( ऋग्वेदे–अ० १ अ० १ व० २ मं० ३ )

**विराडुष्णिहो** यथा—'त्वामग्ने मनीषिणः (१) सम्राजं चर्षणीनाम् (२) । देवं मर्तास इन्धते समध्वरे (३) ॥' ( ऋग्वेदे–अ० ३ अ० १ व० ७ मं० १ )

**विराडनुष्टुभो** यथा—त्वामग्ने हविष्मन्तो (१) देवं मर्तास ईळते (२) । मन्ये त्वा जातवेदसं (३) स हव्या वक्ष्यानुषक् (४) ॥'

( ऋग्वेदे–अ० ४ अ० १ व० १ मं० १ )

**विराड्बृहत्या** यथा—'अग्ने विवस्वदुषसं (१) श्चित्रं राधो अमर्त्य (२) । आ दाशुषे जातवेदो वहा त्व (३) मद्या देवाँ उषर्बुधः (४) ॥'

( ऋग्वेदे–अ० १ अ० ३ व० २८ मं० १ )

**विराट्पङ्क्त्या** यथा—'नून इद्धि वार्यं (१) मासा सचन्त सूरयः (२) । ऊर्जोन पादुभिष्टये (३) पाहि शग्धि स्वस्तय (४) उतैधि पृत्सुनो वृधे (५) ॥'

( ऋ० सं० ४।१।९।५ )

**विराट्त्रिष्टुभो** यथा—'इदं नमो वृषभाय स्वराजे (१) सत्यशुष्माय तवसेऽवाचि (२) । अस्मिन्निन्द्र वृजने सर्ववीराः (३) स्मत्सूरिभिस्तव शर्मन्त्स्याम (४)॥'

( ऋग्वेदे–अ० १ अ० ४ व० ११ मं० ५)

**विराड्जगत्या** यथा—यूयमस्मभ्यं धिषणाभ्यस्परि (१) विद्वांसो विश्वा नर्याणि भोजना ( २ ) । द्युमन्तं वाजं वृषशुष्ममुत्तम (३) मानो रयिमृभवस्तक्षता वयः ( ४ ) ॥ ( ऋग्वेदे–अ० ३ अ० ७ व० ८ मं० ३ )

२. **स्वराड्गायत्र्या** यथा—'जोषा सवितुर्यस्य ते (१) हरः शतं सवाँ अर्हति (२) । पाहिनो दिद्युतः पतन्त्याः (३) ॥' ( ऋग्वेदे–अ० ८ अ० ८ व० १६ मं० २ )

**स्वराडुष्णिहो** यथा—'अश्विना घर्मं पातꣳहार्द्वान (१) महर्दिवाभिरूतिभिः (२) । तन्त्रायिणे नमो द्यावा पृथिवीभ्याम् (३) ॥' ( शु० य० ३८।१२ )

**स्वराडनुष्टुभो** यथा—'यस्ते द्रप्सः स्कन्नो यस्ते अंशु (१) रवश्च यः परः स्रुचा (२) । अयं देवो बृहस्पतिः (३) सं तं सिञ्चतु राधसे (४) ॥'

( ऋ० सं० ७।६।२५।३ )

**स्वराड्बृहत्या** यथा—'प्राणदा अपानदा व्यानदा (१) वर्चोदा वरिवोदाः (२) । अन्याँस्ते अस्मत्तपन्तु हेतयः (३) पावको अस्मभ्यꣳशिवो भव (४) ॥'

( शु० य० १७।१५ )

## आदितः संदिग्धे । ३ । ६१ ॥

यदा षड्विंशत्यक्षरं छन्दो भवति, तदा किं प्रतिपत्तव्यम्? । किं गायत्री स्वराड्? उतोष्णिग्विराड्? इति । एवं संदिग्धे सति छन्दस्यादिभूतात् पादान्निर्णयः कर्तव्यः । यदि प्रथमः पादो गायत्र्यास्तदा गायत्र्येवासौ । अथोष्णिहस्तदोष्णिग् इति । एवं सर्वत्र ॥

## देवतादितश्च । ३ । ६२ ॥

इदमपरं निर्णयनिमित्तमुच्यते । संदिग्धे छन्दसि देवतादेश्च निर्णयः कर्तव्यः । 'आदि'ग्रहणं स्वरादिपरिग्रहार्थम् ॥

---

स्वराट्पङ्क्त्या यथा—अयाश्चाग्नेऽस्यनभिशस्तीश्च (१) सत्यमित्त्वमया असि (२) । अयासावयसा कृतो (३) ऽया सन् हव्यमूहिषे (४) ऽया नो धेहि भेषजम् (५) ॥'
( आश्व० श्रौ० सू० १।११।१३ )

स्वराट्त्रिष्टुभो यथा—'इन्द्रासोमा परि वां भूतु विश्वत (१) इयं मतिः कक्ष्याश्वेव वाजिना (२) । यां वां होत्रां परिहिनोमि मेधये (३) मा ब्रह्माणि नृपतीव जिन्वतम् (४) ॥' ( ऋग्वेदे-अ० ५ अ० ७ व० ६ मं० १ )

स्वराड्जगत्या यथा—'आरोहतं दशतꣳशक्करीर्मम (१) । ऋतेनाग्न आयुषा वर्चसा सह (२) । ज्योग्जीवन्त उत्तरामुत्तराꣳ समाम् (३) । दर्शमहं पूर्णमासं यज्ञं यथा यजै (४) ॥' ( तै० ब्रा० १।२।१।३५ )

३. 'स्वराड्वै तच्छन्दो यत्किञ्च चतुस्त्रिंशदक्षरम्' ( सां० ब्रा० १७।१ ) इति श्रुतिस्त्वनुष्टुप्परा । विशेषेण राजत इति विराट् । स्वेनैव राजत इति स्वराट् ।

१. 'उष्णिग्गायत्रौ जागतश्च' ( छं० शा० ३।१८ ) इत्यनुशासनेनोष्णिहः प्रथमपादस्यापि गायत्रत्वान्नेदं सूत्रं गायत्र्युष्णिहोः सन्देहे नियामकं भवितुमर्हति । अतः—

'यो अग्नीषोमा हविषा सपर्या (१) देवद्रीचा मनसा यो घृतेन (२) ।
तस्य व्रतं रक्षतं पातमंहसो (३) विशे जनाय महि शर्म यच्छतम् (४) ॥'
( ऋ० सं० १।६।२९।२ )

इतीयं षट्चत्वारिंशदक्षरा किं त्रिष्टुप्स्वराट्? उत जगती विराट्? इति सन्देहे प्रथमापादस्यैकादशाक्षरत्वात्त्रिष्टुबेवेत्युदाहार्यम् ।

२. "भवत्येव संशये छन्दसां दैवतेनाध्यवसायः, यथा—'तव स्वादिष्ठा-' ( ऋ० सं० ३।५।१०।५ ) 'शिवा नः सख्या-' ( ऋ० सं० ३।५।१०।८ ) इत्यनुष्टुबुष्णिहोर्मध्ये 'धूतं न पूतं-' ( ऋ० सं० ३।५।१०।६ ) इति षड्विंशत्यक्षरे द्वे ऋचौ दैवतेन स्वराजौ गायत्र्यावध्यवसीयेते, न विराजावुष्णिहौ ।" इत्यृक्प्रातिशाख्यव्याख्यायामुव्वटः ( १७।२० ) ।

कस्य छन्दसः का देवता, यथा निर्णयः कर्तव्यः ? इत्यपेक्षायामिदमुच्यते—

**अग्निः सविता सोमो बृहस्पतिर्मित्रावरुणाविन्द्रो विश्वेदेवा देवताः । ३ । ६२ ॥**

गायत्र्यादीनां जगतीपर्यन्तानां यथाक्रममग्न्यादयो देवता वेदितव्याः । तत्र संदिग्धे छन्दसि यदाग्नेयं, तदा गायत्री । यदि सावित्रं, तदोष्णिग् । एवं सर्वत्र । वैदिकेष्वेव

---

१. मित्रावरुणौ विराजो देवते, न पङ्क्तेः । अत्रोद्देशक्रमानुसारेण (छं० शा० २।१५) गायत्र्यादिछन्दःसप्तके पञ्चमस्य पङ्क्तित्वेन तत्र तद्देवताया एव वक्तव्यत्वेऽपि, तत्स्थाने विराड्देवतोक्तिः पङ्क्तिविराजोश्चत्वारिंशदक्षरत्वाविशेषेण 'अक्षराण्येव सर्वत्र निमित्तं बलवत्तरम् । विद्याद्विप्रतिपन्नानां पादवृत्ताक्षरैर्ऋचाम् ॥' (ऋ० प्रा० १७।३५) इति **शौनको**क्तिबलादभेदाभिप्रायेण, उपजीव्यश्रुत्यर्थानुसरणैकपरतया चेति ज्ञेयम् । तथा चैतन्मूलभूतौ मन्त्रौ दृश्येते—**अ॒ग्नेर्गा॑य॒त्र्य॑भवत्स॒युग्वो॒ष्णिह॑या सवि॒ता सम्ब॑भूव । अ॒नु॒ष्टुभा॒ सोम॑ उ॒क्थैर्मह॑स्वान् बृह॒स्पते॑र्बृह॒ती वाच॑मावत् ॥ वि॒राण् मि॒त्रावरु॑णयोरभि॒श्रीरिन्द्र॑स्य त्रि॒ष्टुबि॒ह भा॒गो अह्नः॑ । विश्वा॑न् दे॒वान् जग॒त्या वि॑वेश॒ तेन॑ चाक्लृप्र ऋष॑यो मनु॒ष्याः॑ ॥'** (ऋ० सं० ८।७।१८।४-५) इति । **कात्यायनस्तु** शुक्लयजुःसर्वानुक्रमणिकायाम्— 'विराजो मित्रः, स्वराजो वरुण' (४।१०) इति विशेषमाह । 'पङ्क्तेर्वरुण' इत्यपि तत्रैव दृश्यते, परं भगवता **शौनकेन** पङ्क्तिं प्रकृत्य 'सा तु वासवी' (ऋ० प्रा० १७।२२) इत्युक्तत्वात्, अनुपदमेव वरुणस्य विराड्देवतात्वाभिधानाच्च 'वसव' इत्यस्य स्थले 'वरुण' इति लेखकप्रमाद एवेति सम्भाव्यते । 'छन्दसां देवताः क्रमात् । अग्निः सूर्यः शशी जीवो वरुणश्चेन्द्र एव च ॥ विश्वेदेवाश्च–' (३३०।१९) **इत्याग्नेय**संवादाच्छाखाभेदेन वा व्यवस्था । वासवी वसुदैवत्या । जगत्या देवता अवयुत्याह **साङ्ख्यायनब्राह्मणम्**–'वारुणं बार्हस्पत्यं वैष्णवमिति शंसति, जगती वा एतेषां छन्दः' (३०।२) इति । अन्येषामपि च्छन्दसां देवता आह **शौनकः**–'प्राजापत्यास्त्वतिच्छन्दा, विच्छन्दा वायुदैवता । द्विपदा पौरुषं छन्दो, ब्राह्मी त्वेकपदा स्मृता ॥' (ऋ० प्रा० १७।२३-२६) इति । अतिजगत्यादीनि च्छन्दांस्यतिच्छन्दः शब्देनोच्यन्ते । विच्छन्दा अवान्तरभेदाः पदपङ्क्त्यादय' इत्युव्वटः । **कृष्णीये** त्वन्या एव देवता उक्ताः—

'गायत्र्या देवता वह्निर्विश्वेदेवास्तथोष्णिहः ।
बृहत्या देवता सूर्यो बृहस्पतिरनुष्टुभः ॥
अश्विनौ देवता पङ्क्तेस्त्रिष्टुभश्च सुधाकरः ।
जगतीछन्दसः प्रोक्तो देवता नाकनायकः ॥
पृथ्वी विराट्छन्दसः स्यात्ककुदस्तु त्रिविक्रमः ।
ककुद्विराट्छन्दसस्तु केचिद्देवं हरिं विदुः ॥' (मं० म० बिं० ११)

इति । तत्र मूलं मृग्यम् ।

छन्दःसु निचृद्भुरिजौ, तथा विराट्स्वराजौ च दृश्येते; न लौकिकेषु । अतो लौकिकेषु संदेहाभावात्तन्निर्णयभूता देवतादयो नेष्यन्ते ॥

**स्वराः षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः । ३ । ६४ ॥**

स्वरा गायत्र्यादिषु क्रमेण द्रष्टव्याः ॥

**सितसारङ्गपिशङ्गकृष्णनीललोहितगौरा वर्णाः । ३ । ६५ ॥**

गायत्र्यादिषु क्रमेण वर्णा वर्णनिर्णयनिमित्तमभिधीयन्ते ॥

**आग्निवेश्यकाश्यपगौतमाङ्गिरसभार्गवकौशिकवासिष्ठानि गोत्राणि ३ । ६६ ॥**[1]

---

१. एतदग्रे—'**श्यामान्यतिच्छन्दांसि**' ३।६७
**रोचनाभाः कृतयः** ३।६८
**अनुक्तानां कामतो वर्णा इति** ३।६९
इति सूत्रत्रयं स्पष्टार्थमेव ।

**हलायुधीय**मस्यानुपपन्नत्वप्रतिपादनमव्याख्यानं च 'द्वाभ्यां–' (छं० शा० ३।६०) इत्यस्योपलक्षणार्थत्वेन त्र्याद्यूनाधिकेष्वतिच्छन्दस्सु निर्णायकान्तरापेक्षासत्वात्, 'यश्छन्दसां वेद विशेषमेनं भूतानि च त्रैष्टुभजागतानि । सर्वाणि रूपाणि च भक्तितो यः स्वर्गं जयत्येति तथामृतत्वम् ॥' ( ऋ० प्रा० १८।४६ ) इति विशेषज्ञानस्य श्रेयोहेतुत्वस्मरणात्, एतत्सूत्रत्रयत्यागे च प्रत्यध्यायसमाप्ति दृश्यमानेतिशब्दाभावेनात्र तृतीयाध्यायसमाप्त्यनिश्चयात्, अविच्छिन्नवैदिकाध्ययनपरम्परया 'गोरोचनाभाः कृतयो ह्यतिच्छन्दो हि श्यामलम् ।' ( ३३०।२२ ) **इत्यग्निपुराणे**ऽनुवाददर्शनेन चास्य मौलिकत्वनिश्चयात्, आर्षशास्त्रदूषणे 'यः प्रवृत्तां श्रुतिं सम्यक् शास्त्रं वा मुनिभिः कृतम् । दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातिनम् ॥' ( म० भा० अनु० २४।८ ) इत्यादौ महादोषस्मरणाच्चातिसाहसमात्रम् ॥

अत्र विशेषः **प्रातिशाख्ये**—'अरुणं श्यामगौरे च बभ्रु वै नकुलं तथा । पृश्निवर्णं च वैराजं निचृच्छ्यावं पृषद्भुरिक् ॥ ब्रह्मसामर्ग्यजुश्छन्दः कपिलं वर्णतः स्मृतम् । ( १७।२८-३२ ) इति । अरुणं प्रातःसन्ध्याभवर्णं पाङ्क्तम् । श्यामं कृष्णवर्णमतिच्छन्दः । गौरं सिद्धार्थवर्णं विच्छन्दः । बभ्रु कपिलवर्णं द्वैपदं छन्दः । नकुलवर्णमेकपदं छन्दः । पृश्निवर्णं बहुवर्णचित्रं वैराजम् । अथ कस्मात् वैराजस्य द्विवर्णोपदेशः क्रियते? । तत्र क्रमेणैव नीलत्वं सिद्धम् । न सिध्यति; कथम्? एतास्तिस्रो विराजः,–अनुष्टुबेका, पङ्क्तिरेका, द्वाभ्यां न्यूना चैका । तत्र पूर्वयोर्नीलवर्णः, अस्याः पृश्निरिति वेदितव्यम् । एवमपि कथमेतदध्यवसीयते–पूर्वयोर्नीलः, अस्याः पृश्निरिति? । निचृद्भुरिजोर्न्यूनाधिकयोः समीपोपदेशात् अस्याः पृश्निरिति, परिशेषादितरयोर्नील इत्यध्यवसीयते । **एके** क्रमात्पङ्क्तेरेव विराजो नीलत्वं मन्यन्ते । श्यावं कृमिदूषितपत्रवर्णं निचृद्भवति । विद्रुमवद्भुरिक् भवति ।

गायत्र्यादीनां क्रमेणैतानि गोत्राणि भवन्तीति वाक्यशेषः । अत्र 'रोचनाभाः कृतयः; श्यामान्यतिच्छन्दांसि', इत्येवमादिकमधीयते **छान्दसाः** । तन्नोपपद्यते । कृतीनामतिच्छन्दसां च निचृद्भुरिजोर्विराट्स्वराजोश्च प्रदेशाभावात् कश्चिन्नास्ति संशयः, यस्य निर्णयनिमित्तं वर्णोपन्यासः क्रियते । तदपि ऋषिदेवतास्वरवर्णानां ज्ञानान्निःश्रेयसमिच्छन्ति **छान्दसाः** ॥

इति भट्टहलायुधकृतायां पिङ्गलछन्दोवृत्तौ तृतीयोऽध्यायः ।

---

ब्रह्मणः सामगर्यजुषां च छन्दो वर्णतः कपिलं जटाकलापसूर्यरश्मिवर्णं स्मृतम् ।—इत्युव्वटभाष्यम् ॥

छन्दसां धातवोऽप्युक्ताः **साङ्ख्यायनारण्यके**—'अश्मानं जागतमयस्त्रैष्टुभं लोहमौष्णिहं सीसं काकुभं रजतं स्वाराज्यं सुवर्णं गायत्रम्' ( ११।७ ) इति । एवमन्यदप्यतिच्छन्दसां स्वरादिग्रन्थान्तराज्ज्ञेयम् । विस्तरभयान्न सङ्गृह्यते ।

ननु भगवता पिङ्गलाचार्येण कृतो योऽयं देवतादिनियमः, स किं विधिर्नियमोऽनुवादार्थो वा,? । नाद्यः, तत्तद्वेदानुक्रमणिकाकारैः स्मृतिकारैश्च संहितास्थमन्त्राणां कर्मकाण्डीयमन्त्राणां च देवतादीनां विहितत्वेनापूर्वत्वाभावात् । किंच 'गायत्र्याः सविता जातवेदसः' 'त्रिष्टुभोऽग्निर्देवता' इत्यादिना, सप्तव्याहृतीनामपि छन्दसां देवतानां चानेन महाविरोधापातात् । यथाह संवर्तः—'व्याहृतीनां च सर्वेषामार्षं चैव प्रजापतिः । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तिरेव च ॥ त्रिष्टुप् च जगती चैव छन्दांस्येतानि सप्त वै । अग्निर्वायुस्तथा सूर्यो बृहस्पतिरपांपतिः । इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ॥' इति । नापि द्वितीयः, अनन्तव्यभिचारात् । नापि तृतीयः, निष्फलत्वाद्विरोधापाताच्च ।

अत्रेदमवधेयम्—येषां मन्त्राणां छन्दोदेवतादीनि नोक्तानि, अपि तु विराट्स्वराडादिलक्षणद्वयलक्षितत्वेन 'गायत्र्युष्णिग्भ्याम्' 'उष्णिगनुष्टुब्भ्याम्' इत्यादि संशयो भवेत्, तत्राद्यपादेन क्वचिद्देवतादिभ्यश्च विरोधः परिहरणीय इत्यभिप्रयता भगवता पिङ्गलाचार्येण 'आदितः संदिग्धे' ( पि० सू० ३ । ६१ ) इत्यादि नव सूत्राणि विहितानि, इति । एतेषामुदाहरणानि बहूनां वेदशाखानामनुपलम्भाद्दुर्लभानि । यत्तु—'शुक्लमुच्चं विजानीयान्नीचं लोहितमेव च । श्यामं तु स्वरितं विद्यादग्निरुच्चस्य देवता ॥ नीचे सोमं विजानीयात्स्वरिते सविता भवेत् । उदात्तं ब्राह्मणं विद्यान्नीचं क्षत्रियमेव च ॥ वैश्यं तु स्वरितं विद्यादुदात्तं तु भारद्वाजम् । नीचं गोतममित्याहुर्गार्ग्यं तु स्वरितं विदुः ॥ विद्यादुदात्तां गायत्रीं नीचं त्रैष्टुभमेव च । जागतं स्वरितं विद्यादेवमेव नियोगतः ॥ गान्धर्ववेदे ये प्रोक्ताः सप्त षड्जादयः स्वराः । त एव वेदे विज्ञेयास्त्रय उच्चादयः स्वराः ॥ उच्चौ निषादगान्धारौ नीचावृषभधैवतौ । शेषास्तु स्वरिते ज्ञेयाः षड्जमध्यमधैवताः ॥' इति याज्ञवल्कीयशिक्षोक्तेस्त्रिष्टुभो लोहितो वर्णः, सोमो देवता, ऋषभधैवतौ स्वरौ, गोतमऋषिः । जगत्याः श्यामो वर्णः, सविता देवता, षड्जमध्यमपञ्चमाः स्वराः, गार्ग्यऋषिरित्यादिभिः पिङ्गलोक्तेनानैक्यं; तदपि शाखाभेदेन परिहरणीयम् ।

चतुर्थोऽध्यायः।

## चतुःशतमुत्कृतिः ।४।१॥

चतुरधिकं शतं चतुःशतम्। मध्यमपदलोपी समासः। अथ वा चत्वारि च शतं च चतुःशतम्। द्वन्द्वसमासः। कर्मधारयस्तु नेष्यते। तत्र चतुःशतानीति प्राप्नोति। यत्र चतुःशतमक्षराणां संख्या भवति, तत् 'उत्कृतिः' नाम छन्दः। यथा—

छागस्य हुविष आत्तामुद्य (१) मध्यतो मेद उद्भृतं (२) पुरा द्वेषोभ्यः (३) पुरा पौरुषेय्या गृभो (४) घस्तां नूनं (५) घासे अज्राणां यवसप्रथमानाꣳ (६) सुमत्क्षराणाꣳ शतरुद्रियाणाम् (७) अग्निष्वात्तानां पीवोपवसनानां (८) पार्श्वतः श्रोणितः (९) शितामतः उत्सादुतः (१०) अङ्गादङ्गादवत्तानां (११) करत एवाश्विना (१२) जुषेतांꣳ हुविः (१३)' (यजुर्वेदे—अ० २१ मं० ४३)

## चतुरश्चतुरस्त्यजेदुत्कृतेः ।४।२॥

चतुःशताक्षराच्छन्दसः क्रमेण चतुरश्चतुरः संख्याविशेषांस्त्यजेत्। एतदुक्तं भवति—उत्कृतेरारभ्य चतुर्भिश्चतुर्भिरक्षरैर्न्यूनानि छन्दांस्यन्यानि स्थापयेत्, अष्टाचत्वारिंशदक्षरं यावत्॥

## तान्यभिसंव्याप्रेभ्यः कृतिः ।४।३॥

तान्युत्कृतेरनन्तराणि छन्दांसि अभि-सं-वि-आङ्-प्र इत्येतेभ्यः पराणि 'कृति'संज्ञानि भवन्ति। तत्र शताक्षरं छन्दः '**अभिकृतिः**'। यथा—

'देवो अग्निः स्विष्टकृत् (१)। देवान्यक्षद्यथायथम् (२)। होताराविन्द्रमश्विना (३)। वाचा वाचꣳ सरस्वतीम् (४)। अग्निꣳ सोमꣳ स्विष्टकृत् (५)। स्विष्ट इन्द्रः सुत्रामा (६)। सविता वरुणो भिषक् (७)। इष्टो देवो वनस्पतिः (८)। स्विष्टा देवा आज्यपाः (९)। इष्टो अग्निरग्निना (१०)। होता होत्रे स्विष्टकृत् (११)। यशो न दधदिन्द्रियम् (१२)। ऊर्जमपचितिं स्वधाम् (१३)॥' (तैत्तिरीयब्राह्मणे—अ० २ प्र० ६ अ० १४ मं० ११)

षण्णवत्यक्षरं **संकृतिः**। यथा—

'देवो अग्निः स्विष्टकृत् (१)। सुद्रविणा मन्द्रः कविः (२)। सत्यमन्मा युजी होता (३)। होतुर्होतुरायजी यान् (४)। अग्ने यान् देवानयाट् (५)। याꣳ अपि प्रैः (६)। येते होत्रे अमत्सत (७)। ताꣳ ससनुषीꣳ होत्रां देवंगमां (८)। दिवि

---

१. उत्कृत्यादिकृतिपर्यन्तानामुदाहरणानि श्रीमता हलायुधेन न दर्शितानि, अतस्तानि सर्वानुक्रमभाष्योपलब्धानि, अन्यत्र सुप्रसिद्धानि च सर्वोपकृतये वृत्तिमध्येऽस्माभिर्निवेशितानि।

२. 'कृतिः प्रकृतिराकृतिः। विकृतिः संकृतिश्चैव तथातिकृतिरुत्कृतिः॥' (नार० पु० पू० ५७।१३)

दे॒वेषु॑ य॒ज्ञमे॑रये॒मम् (९)। स्वि॒ष्ट कृ॒च्चा॒ग्ने॒ होता॒भूः॑ (१०)। वसु॒वने॑ वसु॒धेय॑स्य नमो वा॒के वीहि॑ (११) ॥' ( तैत्तिरीयब्राह्मणे—अ० ३ अ० ६ अ० १४ मं० १ )

द्वानवत्यक्षरं **विकृतिः** । यथा—

'इ॒मे सोमाः॑ सु॒रामा॑णः (१)। छागै॒र्न मे॒षैर्ऋ॑ष॒भैः सु॒ताः (२)। श॒ष्पैर्न तोक्म॑भिः (३)। ला॒जैर्मह॑स्वन्तः (४)। मदा॒ मास॑रेण॒ परि॑ष्कृताः (५)। शु॒क्राः पय॑स्वन्तो॒ऽमृताः॑ (६)। प्रस्थि॑ता वो मधु॒श्चुतः॑ (७)। ताना॒श्विना॒ सर॑स्वती (८) न्द्रः सु॒त्रामा॑ वृत्र॒हा (९)। जु॒षन्ता॑ꣳ सो॒म्यं मधु॑ (१०) पिब॑न्तु॒ मद॑न्तु॒ विय॑न्तु॒ सोम॑म् (११) ॥' ( तैत्तिरीयब्राह्मणे—अ० २ प्र० ६ अ० ११ )

अष्टाशीत्यक्षर**माकृतिः** । यथा—

'तच्चक्षु॑र्दे॒वहि॑तं (१) पु॒रस्ता॑च्छु॒क्रमु॒च्चर॑त् (२)। पश्ये॑म श॒रदः॑ श॒तं (३) जीवे॑म श॒रदः॑ श॒तं (४) नन्दा॑म श॒रदः॑ श॒तं (५) मोदा॑म श॒रदः॑ श॒तं (६) भवा॑म श॒रदः॑ श॒तꣳ (७) शृ॒णवा॑म श॒रदः॑ श॒तं (८) प्रब्र॑वाम श॒रदः॑ श॒त (९) मजी॑ताः स्याम श॒रदः॑ श॒तं (१०) ज्योक्च॒ सूर्यं॑ दृ॒शे ॥' ( तैत्तिरीयारण्यके–प्र० ४ अ० ४२ मं० २२ )

चतुरशीत्यक्षरं **प्रकृतिः** । यथा—

'अग्निश्च मा मन्यु॒श्च मन्युपतयश्च मन्यु॑कृते॒भ्यः (१)। पापे॑भ्यो रक्ष॒न्ताम् (२)। यदह्ना पाप॑मका॒र्षम् (३)। मनसा वाचा॑ हस्ता॒भ्याम् (४)। प॒द्भ्यामु॒दरे॑ण शि॒श्ना (५)। अह॒स्तद॑वलु॒म्पतु (६)। यत्किंच॑ दुरि॒तं मयि॑ (७)। इ॒दमहं माम॒मृत॑यो॒नौ (८)। सत्ये ज्योतिषि जुहो॑मि स्वा॒हा (९) ॥' ( तै० आ० प्र० १० अ० २४ )

## प्रकृत्या चोपसर्गवर्जितः । ४ । ४ ॥

उपसर्गेण वर्जितः शुद्धः कृतिशब्दः प्रकृत्या स्वरूपेणैवावतिष्ठते । तेनैतदुक्तं भवति—अशीत्यक्षरं छन्दः 'कृतिः' नाम । यथा—

---

१. **कात्यायनेन** त्वतिच्छन्दसां पादनियमविशेष उक्तः—**'पादा अतिजगत्यास्तु त्रयो द्वादशकाः परौ । अष्टकौ शकरीपादाः सप्तैवाष्टाक्षराः स्मृताः ॥१॥ अतिशाकरपादौ द्वावादितः षोडशाक्षरौ । जागतोऽथाष्टका वष्टिपादाः षोडशकास्त्रयः ॥२॥ अष्टकौ चात्यष्टिपादौ जागतौ चाष्टकास्त्रयः । जागतश्चाष्टकश्चाथ धृतिपादौ तु जागतौ ॥३॥ पादास्त्रयोऽष्टकाश्चाथ षोडशाक्षर एव च । अष्टकश्चाथातिधृतौ द्वौ पादौ जागतौ ततः ॥४॥ त्रयोऽष्टका जागतश्च तथाष्टाक्षरकावपि । परः सप्तकपादास्तु प्रसङ्गात्स्वयमीरिताः ॥५॥'** इति । **शौनकोऽप्याह**—'सन्त्यतिच्छन्दसां पादा एकोत्कर्षेण जागतात् । षोडशाक्षरपर्यन्ता एकश्चाष्टादशाक्षरः ॥' ( ऋ० प्रा० १७।५८ ) इति । एक एवाष्टादशाक्षरः—**'अ॒भि त्यं दे॒वं स॑वि॒तार॑मो॒ण्योः क॒विक्र॑तु (१) मर्चा॑मि स॒त्यस॑वं र॒त्न॒धाम॒भि प्रि॒यं म॒तिं क॒विम् (२)। ऊ॒र्ध्वा यस्या॒मति॒र्भा अदि॑द्युत॒त्सवी॑मनि॒ (३) हिर॑ण्यपाणि॒रमिमीत सु॒क्रतुः॑ कृ॒पा स्वः॑ (४) ॥'** ( आश्व० श्रौ० सू० ४।६ शु० य० ४।२५ ) इत्यस्यामृचि द्वितीयः ।

'दे॒व इन्द्रो॒ नरा॒शꣳसं॒ (१) त्रि॒व॒रू॒थस्त्रि॒व॑न्धु॒रो (२) दे॒वमिन्द्र॑मवर्धयत् (३)। श॒तेन॑ शिति॒पृ॒ष्ठाना॒माहि॑तः (४) स॒हस्रे॑ण॒ प्रव॑र्तते (५) मि॒त्रावरु॒णेद॑स्य हो॒त्रमर्ह॑तो (६) बृह॒स्पति॑ः स्तो॒त्र (७) म॒श्विनाध्व॑र्य॒वं (८) व॒सुव॒ने व॒सु॒धेय॑स्य वे॒तु यज॑ (९) ॥'

(यजुर्वेदे—अ० २८ मं० १९)

## धृत्यष्टिशक्करीजगत्यः । ४ । ५ ॥

कृतेरधस्ताद्धृतिरष्टिः शक्करी जगतीत्येते शब्दाः क्रमेण व्यवस्थापनीयाः ॥

## पृथक्पृथक्पूर्वत एतान्येवैषाम् । ४ । ६ ॥

एषां धृत्यादीनां पूर्वतः पृथक्पृथगेतान्येव शब्दरूपाणि विन्यसेत्। पृथक्पृथग्ग्रहणं प्रत्येकं पूर्वत्वज्ञापनार्थम्। अन्यथा हि समुदायपूर्वत्वमेषां स्यात्। तेनायमर्थः—धृतिशब्दात् पूर्वं धृतिशब्दः, अष्टिशब्दात्पूर्वमष्टिशब्दः, शक्करीशब्दात्पूर्वं शक्करीशब्दः, जगतीशब्दात् पूर्वं जगतीशब्दः ॥

## द्वितीयं द्वितीयमतितः । ४ । ७ ॥

अत्र द्वितीयं द्वितीयं शब्दरूपमतिशब्दात्परतः प्रयोक्तव्यम्। एवं सत्युत्तरेषां छन्दसामेताः संज्ञाः क्रमेण भवन्ति। तत्र षट्सप्तत्यक्षर**मतिधृतिः**। यथा—

'स हि शर्धो॒ न मारु॑तं तुवि॒ष्वणि॒ (१) रप्न॑स्वतीषू॒र्वरा॑स्वि॒ष्टनि॒ (२) रातै॑नास्वि॒ष्टनि॑ः (३)। आद॑द्धव्यान्या॒ददि॒ (४) य॒ज्ञस्य॑ के॒तुर॒र्हणा॑ (५)। अध॑ स्मास्य॒ हर्ष॑तो॒ हृषी॑वतो॒ (६) विश्वे॑ जुषन्त॒ पन्थां॑ (७) नरः॑ शु॒भे न पन्था॑म् (८) ॥' (ऋग्वेदे—अ० २ अ० १ व० १३ मं० १)

द्वासप्तत्यक्षरं **धृतिः**। यथा—

'अ॒वमे॑ह इ॒न्द्र दादृ॒हि श्रु॒धी नः॑ (१) शु॒शोच॒ हि द्यौः क्षा न भी॒षाँ अ॑द्रिवो (२) घृ॒णान्न भी॒षाँ अ॑द्रिवः (३)। शु॒ष्मिन्त॑मो॒ हि शु॒ष्मिभि॒ (४) र्व॒धैरु॒ग्रेभि॒रीय॑से (५)। अपू॑रुषघ्नो अप्रतीत शू॒र॒ सत्व॑भि (६) स्त्रि॒स॒प्तैः शू॒र सत्व॑भिः (७) ॥' (ऋग्वेदे—अ० २ अ० १ व० २२ मं० ६)

अष्टषष्ठ्यक्षर**मत्यष्टिः**। यथा—

'अद॑र्शि गा॒तुरु॒रवे॒ वरी॑यसी॒ (१) पन्था॑ ऋ॒तस्य॒ सम॑यंस्त र॒श्मिभि॒ (२) श्चक्षु॒र्भग॑स्य र॒श्मिभि॑ः (३)। द्यु॒क्षं मि॒त्रस्य॒ साद॑न (४) मर्य॒म्णो वरु॑णस्य च (५)। अथा॑दधाते बृ॒हदु॒क्थ्यं[1] वय॑ (६) उप॒स्तुत्यं॑ बृ॒हद्वय॑ः (७) ॥'

(ऋग्वेदे—अ० २ अ० १ व० २६ मं० २)

चतुःषष्ठ्यक्षर**मष्टिः**। यथा—

'त्रिक॑द्रुकेषु महि॒षो यवा॑शिरं (१) तुवि॒शुष्म॑स्तृ॒पत्सोम॑मपिब॒ (२) द्विष्णु॑ना सु॒तं

१. एषु व्यूहान्न्यूनता परिहार्या.

यथावंशत् (३)। स ईं ममादु महि कर्म कर्तवे मुहामुरुं (४) सैनं सश्चद्देवो देवं (५) सुत्यमिन्द्रं सुत्य इन्दुः (६) ॥' ( ऋग्वेदे–अ० २ अ० ६ व० २८ मं० १ )

षष्ट्यक्षर**मतिशक्वरी** । यथा—

'सार्कं जातः क्रतुना साकमोर्जसा ववक्षिथ (१) सार्कं वृद्धो वीर्यैः सासुहिर्मृधो विचर्षणिः (२)। दाता राधः स्तुवते काम्यं वसु (३) सैनं सश्चद्देवो देवं (४) सुत्यमिन्द्रं सुत्य इन्दुः (५) ॥' ( ऋग्वेदे–अ० २ अ० ६ व० २८ मं० ३ )

षट्पञ्चाशदक्षरा **शक्वरी** । यथा—

'प्रौष्वस्मै पुरोरथ (१) मिन्द्राय शूषमर्चत (२)। अभीके चिदु लोककृत् (३) सुङ्गे समत्सु वृत्रहा (४) ऽस्माकं बोधि चोदिता (५) नभन्तामन्यकेषाम् (६) ज्याका अधिधन्वसु (७)' ( ऋग्वेदे–अ० ८ अ० ७ व० २१ मं० १ )

द्विपञ्चाशदक्षर**मतिजगती** । यथा—

'स भ्रातरं वरुणमग्न आववृत्स्व (१) देवाँ अच्छा सुमती यज्ञवनसं (२) ज्येष्ठं यज्ञवनसम् (३)। ऋतावानमादित्यं चर्षणीधृतं (४) राजानं चर्षणीधृतम् (५) ॥' ( ऋग्वेदे–अ० ३ अ० ४ व० १२ मं० २ )

अष्टाचत्वारिंशदक्षरा **जगती** । यथा—

इन्द्रं मित्रं वरुणमग्निमूतये (१) मारुतं शर्धो अदितिं हवामहे (२)।
रथं न दुर्गाद्वसवः सुदानवो (३) विश्वस्मान्नो अंहसो निष्पिपर्तन (४) ॥
( ऋग्वेदे–अ० १ अ० ७ व २४ मं० १ )

## अथ लौकिकम् । ४ । ८ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः । पूर्वेषां छन्दसां वैदिकत्वमेव । इतः प्रभृत्यार्यादीनां चूलिकापर्यन्तानां लौकिकत्वमेव । [१]समान्यादीनामुत्कृतिपर्यन्तानां वैदिकत्वं लौकिकत्वं च । अत्र वैदिकच्छन्दसां प्रस्तावे प्रसङ्गाद्देवदनादिमुनिपारम्पर्यागतं स्मृतिपुराणेतिहासादिषु दृश्यमानमार्यादिदण्डकपर्यन्तं लौकिकच्छन्दोजातमधिक्रियते । तन्मूलत्वात्काव्यस्य । काव्यं च कीर्तिरूपत्वादानन्दहेतुत्वाच्च पुरुषार्थः ॥

## आत्रैष्टुभाच्च यदार्षम् । ४ । ९ ॥

आङभिविधौ । त्रिष्टुबेव त्रैष्टुभम् । स्वार्थे तद्धितः । गायत्र्यादित्रिष्टुप्पर्यन्तं यदार्षं छन्दोजातं वैदिके व्याख्यातं, लौकिके च तत्तथैव द्रष्टव्यम् । किं तदार्षम्? चतुर्विंशत्यक्षरा गायत्री, अष्टाविंशत्यक्षरोष्णिक्, द्वात्रिंशदक्षरानुष्टुप्, षड्त्रिंशदक्षरा बृहती, चत्वारिंशदक्षरा पङ्क्तिः, चतुश्चत्वारिंशदक्षरा त्रिष्टुप् । चः समुच्चये ॥

---

१. २. ३. एषु व्यूहाद्यूनता परिहार्या. ४. 'ग्लिति समानी' ( पि० सू० ५।६ ) इति सूत्रबोधितं छन्दः. ५. 'आर्षमा त्रैष्टुभात्स्मृतम् । त्रिष्टुप्पङ्क्तिश्च बृहती अनुष्टुबुष्णिगीरितम् ॥ गायत्री स्यात्सुप्रतिष्ठा प्रतिष्ठा मध्यया सह । अत्युक्तोक्ता आदितश्च एकैकाक्षरवर्जितम् ॥' ( ३३१।३-४ ) इत्याग्नेये ।

**पादश्चतुर्भागः। ४। १० ॥**

चतुर्भागश्चतुर्विंशत्यक्षराया गायत्र्याश्चतुर्थो भागः पादसंज्ञां लभते। गायत्र्याः षडक्षरपादः। एवमुष्णिगादिष्वपि द्रष्टव्यम्। समवृत्तविषयमेतत्[1] ॥

**यथावृत्तसमाप्तिर्वा। ४। ११ ॥**

यस्य वृत्तस्य यादृशैः पादैर्न्यूनाक्षरैरधिकाक्षरैर्वा समाप्तिर्दृश्यते, तस्य तादृशा एव पादा ग्रहीतव्याः। वाशब्दो व्यवस्थितविभाषा। उद्गतादिषु विषमवृत्तेषु चतुर्भागातिक्रमेणापि पादव्यवस्थादर्शनात्[2]।

आदौ तावद्गणच्छन्दो मात्राछन्दस्ततः परम्।
तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम् ॥
आर्याद्युद्गीतिपर्यन्तं गणच्छन्दः समीरितम्।
वैताल्यादिचूलिकान्तं मात्राछन्दः प्रकीर्तितम्।
समान्याद्युत्कृतिं यावदक्षरच्छन्द एव च ॥

तत्रादौ तावदार्यालक्षणसिद्ध्यर्थं गणसंज्ञां करोति—

**लः समुद्रा गणः। ४। १२ ॥**

ल इत्येकमात्रिकस्याक्षरस्य ग्रहणम्। समुद्रा इति चतुःसंख्योपलक्षणार्थम्। चतुर्णां लकाराणां 'गणः' इत्येषा संज्ञा विधीयते ॥

**गौ गन्तमध्यादिर्न्लश्च। ४। १३ ॥**

अनेन गणस्य विन्यासभेदं दर्शयति। स हि गणः कदाचिद्गुरुद्वयेन (ऽऽ) भवति, कदाचिदन्तेनैकेन गुरुणा (।।ऽ), कदाचिन्मध्यमेन (।ऽ।), कदाचिदाद्येन (ऽ।।), कदाचिच्चतुर्भिर्लघुभिः (।।।।)। षष्ठस्य भेदस्याभावाद् विस्पष्टार्थमिदं सूत्रम्। अन्तमध्यादिरिति प्रथमं द्वन्द्वसमासं कृत्वा पश्चाद्गकारेण बहुव्रीहिः। द्वन्द्वात् परो यः श्रूयते लभतेऽसौ प्रत्येकाभि-

---

१. इदं च लक्षणं प्रायिकत्वात्। आर्यासु अर्धसमविषमेषु च न्यूनाधिकाक्षरदर्शनात्। विपुलाचूलिकादिषु विपुलायां यतिमात्रं निषिद्धं त्रिषु गणेषु; 'चूलिकार्धमेकोनत्रिंशत्–' (छं० शा० ४।५२) इत्यर्धस्य लक्षणकथनेऽपि एकाक्षरन्यूनाधिकभावेन पादः कल्पनीयः इति **तरुणवाचस्पतिः**। पादलक्षणं **मन्दारमरन्दे**—'छन्दसा ग्रथितः शब्दः पाद इत्यभिधीयते।' (१।९) इति। इदमत्रावगन्तव्यम्–एकद्व्यादिवर्णघटितपादचतुष्टयात्मकवृत्ते वक्तुः श्रोतुर्वा पादत्वेन तात्पर्ये सति पाद एव, वृत्तत्वेन तात्पर्ये सति वृत्तमेव। एतदेकाक्षरमारभ्य चतुर्विंशतिवर्णपर्यन्तवर्णघटितवाक्य एव। पञ्चविंशतिषड्विंशतिवर्णात्मकवाक्ये पादत्वमेव। तत ऊर्ध्वं तु न पादत्वम् इति तद्व्याख्यायाम्। २. 'गायत्र्या वसवः' (पि० सू० ३।३) इति यत्तृतीयाध्याये दर्शितं, तद्वैदिकविषयमात्रम्। तेन लौकिकच्छन्दसां त्रिपञ्चषट्पदता निषिद्धा। यतो लौकिकविषमवृत्तेऽपि लौकिकविषम एव भविष्यति न तु वैदिकोक्तः, किं तु चतुष्पदत्वं तत्राप्यक्षतमेव ज्ञेयम्।

संबन्धम् । द्वौ गकारौ चत्वारो लघवो भवन्ति, स एको (ऽऽ) गणः । गकारोऽन्ते यस्य स गन्तो द्वितीयो (।।ऽ) गणः । गकारो मध्ये यस्य स गमध्यस्तृतीयो (।ऽ।) गणः । गकार आदौ यस्यासौ गादिश्चतुर्थो (ऽ।।) गणः । नकारलकारौ मिलितौ चत्वारो लघवो भवन्ति, स पञ्चमो (।।।।) गणः ॥

एवं गणेषु सिद्धेष्विदानीमार्यालक्षणं करोति—

## स्वरा अर्धं चार्यार्धम् । ४ । १४ ॥

गणग्रहणमनुवर्तते । स्वरा इति सप्तानां संज्ञा । यत्र प्रस्तारे गणाः सप्त भवन्ति, अर्धं च गणस्य, तदार्यार्धं निष्पद्यते । द्वितीयमप्यर्धं तादृशमेव । समप्रविभागेऽर्धशब्दः । यद्येवमर्धशब्दस्य 'अर्धं नपुंसकम्' (पा० सू० २।२।२) इत्यनेनैकदेशिसमासे सति पूर्वनिपातः प्राप्नोति, यथा—अर्धाढकम्, अर्धपलम्, अर्धखारीति । नैष दोषः; सत्यपि समप्रविभागत्वे संबन्धमात्रस्यात्र विवक्षितत्वात् । समप्रविभागस्याप्यर्धशब्दस्यैकदेशिसमासव्यभिचारदर्शनात् । यथा—तुलार्धेन गां क्रीणाति ।

पणार्धक्रीतताम्बूलचर्वणाद्धुर्वितानना: ।
अनभ्यासाद्गलल्लाला यान्त्येते वारयात्रिकाः ॥

---

१. आर्यायाः प्रथमं लक्षणप्रयोजनमुक्तं **वृत्तमणिकोशे**—

'घटिकासहस्रयुग्भिः शिवो जगौ पञ्चभिर्मुखैरार्याम् ।
त्र्यब्दान् द्वादश दिवसान् षोडश घटिकाश्च निर्निद्रः ॥
आर्याद्बोधः कठिनो ज्ञातुं व्यक्तानि वर्णवृत्तानि ।
आदौ सलक्षणममूं तानि च परतः सलक्षणं ब्रूमः ॥' (वि० ३ श्लो० १-२)

'पढमं बारहमत्ता बीए अट्ठादहेहिँ संजुत्ता ।
जह पढमं तह तीअं दहपञ्चविहूसिआ गाहा ॥' इति प्रा० पि० सू० १।४९.

'सब्बाए गाहाए सत्तावण्णाइँ होन्ति मत्ताइं ।
पुब्बद्धम्मि अ तीसा सत्ताईसा परद्धम्मि ॥' इति प्रा० पि० १।५१.

'गाथा' इति नामान्तरमार्यायाः प्राकृतपिङ्गले. २. गुरुरूपो द्विमात्र इत्यर्थः. ३. इदं सूत्रं श्रीमता भगवता पतञ्जलिना प्रत्याख्यातम् 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (पा० सू० २।४।२६) इति सूत्रे भाष्ये. तथा च भाष्यम्—'एकदेशिसमासो नारप्स्यते । कथमर्धपिप्पलीति ? । समानाधिकरणसमासो भविष्यति, अर्धं च सा पिप्पली चार्धपिप्पलीति । न सिध्यति, परत्वात्षष्ठीसमासः प्राप्नोति । अथ पुनरयमेकदेशसमास आरभ्यमाणः षष्ठीसमासं बाधते । इष्यते च षष्ठीसमासोऽपि । तद्यथा—अपूपार्धं मया भक्षितम् । ग्रामार्धं मया लब्धमिति । एवं पिप्पल्यर्धमिति भवितव्यम् ।' इति. अत एव 'प्रेम्णा शरीरार्धहरां हरस्य' (कु० सं० १।४९) इति कालिदासप्रयोगः संगच्छते ।

तथात्रासमप्रविभागत्वेऽप्यर्धशब्दस्यैकदेशिसमासदर्शनाच्च ।

अर्धचन्द्रं दधन्मूर्ध्नि पातु वः पार्वतीपतिः ।
कालकूटविषं हन्तुं संगृहीतमिवामृतम् ॥

तथा च ।

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते ॥

अत्रार्धस्य लक्षणं कुर्वाण एवं ज्ञापयत्याचार्यो यदार्यायामवान्तरपादव्यवस्था नास्ति । तेन 'द्वीपादन्यस्मादपि' इत्यादौ गणत्रयस्यान्ते गुरुत्वं न स्यात् ।

१ २ ३ ४ ५ ६ ७
ऽ·ऽ ऽ·ऽ ऽ·।·। ऽ·ऽ ।·।·।·। ।ऽ·। ऽ·ऽ ऽ
द्वीपा—दन्य—स्मादपि मध्या—दपि जल—निधेर्दि—शोऽप्य—न्तात् ।

१ २ ३ ४ ५ ६ ७
ऽ·ऽ ।·।·।·। ।·।·।·। ।·।·।·। ।·।·।·। । ऽ·ऽ ऽ
आनी—य झटिति घटयति विधिरभि—मतमभि—मु—खीभू—तः ।

(रत्नावली–अं० १ श्लो० ६)

## अत्रायुङ् न ज् । ४ । १५ ॥

अत्रार्याच्छन्दसि, अयुग्गणः, प्रथमस्तृतीयः पञ्चमः सप्तमश्च, न जगणो (।ऽ।) मध्यगुरुर्न कर्तव्यः । शेषास्तु कामतो भवन्ति ॥

## [2]षष्ठो ज् । ४ । १६ ॥

अत्रार्याच्छन्दसि षष्ठो जगणो (।ऽ।) मध्यगुरुरेव भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ·।·। ।·।·ऽ ऽ·ऽ ऽ·ऽ ।·।ऽ ।·ऽ·। ।·।·।·। ऽ
सा जय—ति जग—त्यार्या देवी दिवमु—त्पतिष्णु—रतिरुचि—रा ।

१ २ ३ ४ ५ ६ ७
ऽ·ऽ ।·ऽ·।· ।·।ऽ ऽ·।·। ऽ·ऽ ।·ऽ। । ऽ,
या दृ—श्यते ऽम्ब—रतले कंसव—धोत्पा—तविद्यु—दि—व ॥

## [3]न्लौ वा । ४ । १७ ॥

'षष्ठः' इत्यनुवर्तते । आर्यायाः षष्ठो गणः (।।।।) सर्वलघुर्वा भवति । तत्रोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ·ऽ ।·ऽ·। ऽ·ऽ ऽ·ऽ ऽ·ऽ ।·।·।·। ।·।·।·। ऽ
रूपा—न्तरेण देवीं तामे—व स्तौ—मि सपदि किल महि—षः ।

---

१.–२.–३. एतदर्थानुवादकं प्राकृतपिङ्गलसूत्रम्.
'सत्तगणा दीहंता जो णलहू छट्ठ णेह जो विसमे ।
तह गाहे बिअद्धे छट्ठं लहुअं विआणेहु ॥'.(१।५०) इति.

ऽ·ऽ—ऽ·।·।—ऽ·।·। ऽ·।·।—।·।·ऽ— ।— ऽ·ऽ — ऽ,
पाद—स्पर्शसु—खादिव मीलित—नयनो—ऽभ—वद्य—स्याः ॥

## न्लौ चेत्पदं द्वितीयादि । ४ । १८ ॥

षष्ठो (।।।।) गणः सर्वलघुश्चेद्भवति, तदा द्वितीयाक्षरादारभ्य पदं प्रवर्तते । पूर्वमेवोदाहरणम् ॥

## सप्तमः प्रथमादि । ४ । १९ ॥

षष्ठे गणे मध्यगुरौ (।ऽ।) सर्वलघौ (।।।।) वा जाते सप्तमो गणः (।।।।) सर्वलघुश्चेद्भवति, तदा प्रथमाक्षरादारभ्य पदं प्रवर्तते । तत्रोदाहरणम्—

ऽ·ऽ—ऽ·।·।—ऽ·ऽ।·ऽ·।—ऽ·ऽ—।·ऽ·।—।·।·।·।—ऽ,
ब्रह्म—क्षत्रकु—लीनः समस्त—साम—न्तचक्र—नुतचर—णः ।
।·।·।·।—।·ऽ·।—ऽ·ऽ ऽ·ऽ ऽ·ऽ—।·ऽ·।— ।—ऽ,
सकलसु—कृतैक—पुञ्जः श्रीमान् मुञ्ज—श्चिरं ज—य—ति ॥
।·।·।·।—।·ऽ·।—ऽ·ऽ ऽ·ऽ—।·।·।·।—।·।·।·।—।·।·।·।—ऽ,
जयति भु—वनैक—वीरः सीरा—युधतुलि—तविपुल—बलविभ—वः ।
।·।·।·।—।·ऽ·।—।·।·।·।—ऽ·।·।—ऽ·ऽ— ।—ऽ·ऽ—ऽ,
अनवर—तवित्त—वितरण—निर्जित—चम्पा—धि—पो मु—ञ्जः ॥

## अन्त्ये पञ्चमः । ४ । २० ॥

अन्त्ये भवमन्त्यम् । दिगादित्वाद्यत् । अन्त्ये द्वितीयार्धे पञ्चमश्चेद्गणः (।।।।) सर्वलघुर्भवति, तदा प्रथमादि पदं प्रवर्तते । तत्रोदाहरणम्—

।·।·।·।— ऽ·।·।—ऽ·ऽ ।·।·ऽ—।·।·ऽ—।·ऽ·।—ऽ·।·।—ऽ,
स जयति—**वाक्पति-राजः** सकला—र्थिमनो—रथैक—कल्पत—रुः ।
ऽ·ऽ—।·ऽ·।—ऽ·।·।—ऽ·ऽ—।·।·।·।—।·ऽ·।— ।—ऽ,
प्रत्य—र्थिभूत—पार्थिव—लक्ष्मी—हठहर—णदुर्ले—लि—तः ॥

## षष्ठश्च ल् । ४ । २१ ॥

'अन्त्ये' इत्यनुवर्तते । अन्त्ये द्वितीयेऽर्धे मध्यगुरौ (।ऽ।) सर्वलघौ (।।।।) वा षष्ठे गणे प्राप्ते तदपवादो लकारो विधीयते । पूर्वमेवोदाहरणम् ॥

---

१. 'प्रलीनसामन्त' इति लिखितोदाहरणपुस्तके । २. इदं सूत्रं 'लः समुद्रा गणः' (पि० सू० ४।१२) इत्यस्यापवादभूतम्, तेन द्वितीयार्धे एकेनापि लघुना षष्ठो गणो भवतीति बोध्यम्.

**त्रिषु गणेषु पादः पथ्याद्ये च । ४ । २२ ॥**

चकारोऽन्त्य इत्यनुकर्षणार्थः । यस्या आर्याया अन्त्येऽर्धे आद्ये च त्रिषु गणेषु पादः समाप्यते, सा आर्या 'पथ्या' नाम भवति । तद्यथा—

१ २ ३ ४ ५ ६ ७
ऽ·ऽ— ऽ·ऽ — ऽ·ऽ ऽ·।·।— ऽ·ऽ ।·ऽ। ऽ·ऽ ऽ,
पथ्या—शी व्या—यामी स्त्रीषु जि—तात्मा नरो न रोगी स्यात् ।

१ २ ३ ४ ५ ६ ७
।·।·।·।—ऽ·।·।— ऽ·ऽ — ऽ·।·।—ऽ·ऽ। ऽऽ— ऽ,
यदि वच—सा मन—सा वा—द्रुह्यति नित्यं न भूते—भ्यः ॥

पादग्रहणं यत्युपलक्षणार्थम् ॥

**विपुलान्या । ४ । २३ ॥**

यस्य आर्याया अन्त्येऽर्धे, आद्ये वोभयोर्वा त्रिषु गणेषु पादो न विश्राम्यति, सा आर्या 'विपुला' नाम । सा चाद्यन्तोभयपूर्वकत्वात्त्रिधा भवति । सामान्येन विधानमेतत् ॥

तत्रादिविपुला—

१ २ ३ ४ ५ ६ ७
ऽ·ऽ— ऽ·ऽ ऽ·ऽ— ।·ऽ। — ऽ·ऽ — ।।।। — ऽ·ऽ — ऽ,
स्निग्ध—च्छाया लाव—ण्यलेपि—नी किं—चिदवन—तघ्रा—णा ।

१ २ ३ ४ ५ ६ ७
।।।।— ऽ·ऽ— ऽ·ऽ ।·।·ऽ ऽ·ऽ— । ऽ·ऽ — ऽ,
मुखविपु—ला सौ—भाग्यं लभते स्त्रीत्या—ह **माण्ड—व्यः** ॥

अन्त्यविपुला—

१ २ ३ ४ ५ ६ ७
ऽ·ऽ ।·ऽ·। ।·।·ऽ—ऽ·।·।·— ऽ·ऽ—।·ऽ·।— ऽ·ऽ·—ऽ,
चित्तं हरन्ति हरिणी—दीर्घदृ—शः का—मिनां क—लाला—पैः ।

१ २ ३ ४ ५ ६ ७
ऽ·ऽ—।·ऽ·।—ऽ·ऽ—।·।·।·।—।·।ऽ—।·।·।·।—।—ऽ,
नीवी—विमोच—नव्या—जकथित—जघना जघनवि—पु—लाः ॥

उभयविपुला—

१ २ ३ ४ ५ ६ ७
ऽ·ऽ ।·।·।·।—।·।·ऽ—।·ऽ·।—ऽ·ऽ—।·ऽ·।—ऽ·।·।—ऽ,
या स्त्री कुचकल—शनित—म्बमण्ड—ले जा—यते म—हाविपु—ला ।

१ २ ३ ४ ५ ६ ७
ऽ·ऽ—।·ऽ·।—।·।·ऽ—।·ऽ·।—ऽ·।·।—।·ऽ·। —।—ऽ,
गम्भी—रनाभि—रतिदी—र्घलोच—ना भव—ति सा सु—भ—गा ॥

अत्रोच्यते—पथ्याविपुलालक्षणयोः सहानवस्थानलक्षणो विरोधः, तेन मिश्रीभावो नास्ति । य एवांशो विपुलयाभिस्पृष्टस्तेनैव पथ्यात्वं नष्टं भवति, उभयाश्रयत्वाच्च

पथ्यालक्षणस्य विपुलायास्तत्रांशेनापि प्रवेशो दुर्लभः । ततश्च पथ्यालक्षणैकांशवैकल्येऽपि तदन्यमात्रविषयत्वाद्विपुला भवत्येव । पथ्याचपलयोश्च विरोधाभावाद्बाध्यबाधकभावो नास्ति । तत्रायं संग्रहः—

'एकैव भवति पथ्या तिस्रो विपुलाश्चतस्र एवं ताः ।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्याः स्युः ॥
गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात् ।
साकल्येनार्याणामशीतिरेवं विकल्पाः स्युः ॥'

---

१. उक्ता आर्याभेदाः सुखावबोधाय क्रमेण प्रदर्श्यन्ते—

१ पथ्यार्या
२ आदिविपुला
३ अन्तविपुला
४ उभयविपुला
५ मुखचपला पथ्या
६ मुखचपलादिविपुला
७ मुखचपलान्तविपुला
८ मुखचपलोभयविपुला
९ जघनचपला पथ्या
१० जघनचपलादिविपुला
११ जघनचपलान्तविपुला
१२ जघनचपलोभयविपुला
१३ महाचपला पथ्या
१४ महाचपलादिविपुला
१५ महाचपलान्तविपुला
१६ महाचपलोभयविपुला
१७ गीतिपथ्या
१८ गीत्यादिविपुला
१९ गीत्यन्तविपुला
२० गीत्युभयविपुला
२१ मुखचपला गीतिपथ्या
२२ मुखचपला गीत्यादिविपुला
२३ मुखचपला गीत्यन्तविपुला
२४ मुखचपला गीत्युभयविपुला
२५ जघनचपला गीतिपथ्या
२६ जघनचपला गीत्यादिविपुला
२७ जघनचपला गीत्यन्तविपुला
२८ जघनचपला गीत्युभयविपुला
२९ महाचपला गीतिपथ्या
३० महाचपला गीत्यादिविपुला
३१ महाचपला गीत्यन्तविपुला
३२ महाचपला गीत्युभयविपुला
३३ उपगीति पथ्यार्या
३४ उपगीत्यादिविपुला
३५ उपगीत्यन्तविपुला
३६ उपगीत्युभयविपुला
३७ मुखचपलोपगीतिपथ्या
३८ मुखचपलोपगीत्यादिविपुला
३९ मुखचपलोपगीत्यन्तविपुला
४० मुखचपलोपगीत्युभयविपुला
४१ जघनचपलोपगीतिपथ्या
४२ जघनचपलोपगीत्यादिविपुला
४३ जघनचपलोपगीत्यन्तविपुला
४४ जघनचपलोपगीत्युभयविपुला
४५ महाचपलोपगीतिपथ्या
४६ महाचपलोपगीत्यादिविपुला
४७ महाचपलोपगीत्यन्तविपुला
४८ महाचपलोपगीत्युभयविपुला
४९ उद्गीतिपथ्या
५० उद्गीत्यादिविपुला

तेषामनुक्तोदाहरणान्यूह्यानि ॥

## चपला द्वितीयचतुर्थौ ग्मध्ये जौ। ४। २४॥

अधिकारोऽयम्। द्वितीयचतुर्थौ गणौ मध्यगुरू (।ऽ।) भवतः। प्रथमश्चान्तगुरुः (॥ऽ), तृतीयो द्विगुरुः (ऽऽ), पञ्चमश्चादिगुरुः (ऽ॥)। शेषं यथाप्राप्तम्। एवं गकारयोर्मध्ये द्वितीयचतुर्थौ जकारौ भवतः, सा आर्या 'चपला' नाम। उदाहरणमग्रतः॥

## पूर्वे मुखपूर्वा। ४। २५॥

पूर्वेऽर्धे चपलालक्षणं चेद्भवति, तदासौ 'मुखचपला' आर्या। पथ्यापूर्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
।·।·ऽ—।·ऽ·।—ऽ·ऽ ।·ऽ·। ऽ·ऽ—।·ऽ·।— ऽ·।·।—ऽ,
अतिदा—रुणा द्वि—जिह्वा परस्य रन्ध्रा—नुचारि—णी कुटि—ला।
१ २ ३ ४ ५ ६ ७
ऽ·ऽ—।·।·।·।—ऽ·ऽ ऽ·ऽ ऽ·ऽ—।·।·।·।—।—ऽ,
दूरा—त्परिहर—णीया नारी नागी—व मुखच—प—ला॥

आदिविपुलापूर्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ·ऽ ।·ऽ·।—ऽ·ऽ—।·ऽ·।—ऽ·ऽ—।·ऽ·।—ऽ·ऽ—ऽ,
यस्या विलोच—ने पि—ङ्गले भ्रु—वौ सं—गते मु—खं दी—र्घम्।

| | |
|---|---|
| ५१ उद्गीत्यन्तविपुला | ६६ आर्यागीत्यादिविपुला |
| ५२ उद्गीत्युभयविपुला | ६७ आर्यागीत्यन्तविपुला |
| ५३ मुखचपलोद्गीतिपथ्या | ६८ आर्यागीत्युभयविपुला |
| ५४ मुखचपलोद्गीत्यादिविपुला | ६९ मुखचपलार्यागीतिपथ्या |
| ५५ मुखचपलोद्गीत्यन्तविपुला | ७० मुखचपलार्यागीत्यादिविपुला |
| ५६ मुखचपलोद्गीत्युभयविपुला | ७१ मुखचपलार्यागीत्यन्तविपुला |
| ५७ जघनचपलोद्गीतिपथ्या | ७२ मुखचपलार्यागीत्युभयविपुला |
| ५८ जघनचपलोद्गीत्यादिविपुला | ७३ जघनचपलार्यागीतिपथ्या |
| ५९ जघनचपलोद्गीत्यन्तविपुला | ७४ जघनचपलार्यागीत्यादिविपुला |
| ६० जघनचपलोद्गीत्युभयविपुला | ७५ जघनचपलार्यागीत्यन्तविपुला |
| ६१ महाचपलोद्गीतिपथ्या | ७६ जघनचपलार्यागीत्युभयविपुला |
| ६२ महाचपलोद्गीत्यादिविपुला | ७७ महाचपलार्यागीतिपथ्या |
| ६३ महाचपलोद्गीत्यन्तविपुला | ७८ महाचपलार्यागीत्यादिविपुला |
| ६४ महाचपलोद्गीत्युभयविपुला | ७९ महाचपलार्यागीत्यन्तविपुला |
| ६५ आर्यागीतिपथ्या | ८० महाचपलार्यागीत्युभयविपुला |

१. 'मर्मानुसारिणी' इति लिखितोदाहरणपुस्तके। २. 'यस्याश्च' इत्यपि तत्रैव।

१ २ ३ ४ ५ ६ ७
।·।·ऽ — ।·ऽ·। ऽ·ऽ ऽ·ऽ — ऽ·।·। — ।·।·।·। — । — ऽ,
विपुलो—न्नताश्च दन्ताः कान्ता—सौ भव—ति मुखच—प—ला ॥

अन्त्यविपुलापूर्वकं मुखचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
।·।·ऽ — ।·ऽ·। — ऽ·ऽ — ।·ऽ·। ऽ·ऽ — ।·ऽ·। — ऽ·ऽ — ऽ,
विपुला—भिजात—वंशो—द्भवापि रूपा—तिरेक—रम्या—पि ।

१ २ ३ ४ ५ ६ ७
ऽ·ऽ — ।·ऽ·। — ऽ·ऽ — ।·ऽ·। ऽ·।·। — ।·।·।·। — । — ऽ,
[२]निर्वा—स्यते गृ—हाद्व—ल्लभापि चेद्भव—ति मुखच—प—ला ॥

## जघनपूर्वेतरत्र । ४ । २६ ॥

द्वितीयेऽर्धे चपलालक्षणं चेद्भवति, सार्या 'जघनचपला' नाम । तत्र पथ्यापूर्वकं जघनचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ·ऽ — ऽ·।·। — ऽ·ऽ ऽ·।·। — ।·।·ऽ — ।·ऽ·। — ऽ·ऽ — ऽ,
यत्पा—दस्य क—निष्ठा न स्पृश—ति मही—मनामि—का वा—पि ।

१ २ ३ ४ ५ ६ ७
ऽ·ऽ — ।·ऽ·। — ऽ·ऽ ।·ऽ·। — ऽ·ऽ ।·।·।·। — । — ऽ,
सा स—र्वधूर्त—भोग्या भवेद—वश्यं जघनच—प—ला ॥

अन्त्यविपुलापूर्वकं जघनचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
ऽ·ऽ ऽ·ऽ — ऽ·ऽ ।·ऽ·। ऽ·ऽ ।·ऽ·। — ऽ·ऽ — ऽ,
यस्याः पादा—ङ्गुष्ठं व्यतीत्य याति प्रदेशि—नी दी—र्घा ।

१ २ ३ ४ ५ ६ ७
।·।·ऽ ।·ऽ·। — ऽ·ऽ — ।·ऽ·। — ऽ·।·। — । — ।·।·ऽ ऽ,
विपुले कुले प्र—सूता—पि सा ध्रु—वं जघ—न—चपला स्यात् ॥

महाविपुलापूर्वकं जघनचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
।·।·ऽ — ।·।·ऽ — ।·।·ऽ — ।·ऽ·। — ऽ·।·। — ।·ऽ·। — ऽ·ऽ — ऽ,
मकर—ध्वजस—द्मनि दृ—श्यते स्फु—टं तिल—कलाञ्छ—नं य—स्याः ।

१ २ ३ ४ ५ ६ ७
।·।·ऽ — ।·ऽ·। — ऽ·ऽ — ।·ऽ·। — ऽ·।·। — । — ।·।·ऽ — ऽ,
विपुला—न्वयप्र—जाता—पि जाय—ते जघ—न—च-पला-सौ ॥

---

१. 'उभयविपुलापूर्वं' इति क० मु० पुस्तके । २. 'निःसार्यते' इत्यपि च तत्रैव ।

## उभयोर्महाचपला । ४ । २७ ॥

यस्या उभयोरर्धयोश्चपलालक्षणं भवति, सार्या 'महाचपला' नाम। तत्र पथ्यापूर्वकं महाचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
।·।·ऽ ।·ऽ·। ऽ·ऽ ।·ऽ·।— ऽ·ऽ— ।·ऽ·।— ऽ·ऽ—ऽ,
हृदयं हरन्ति नार्यो मुनेर—पि भ्रू—कटाक्ष—विक्षे—पैः।
१ २ ३ ४ ५ ६ ७
ऽ·ऽ—।·ऽ·।—ऽ·ऽ ।·ऽ·।—ऽ·ऽ ।·ऽ·।—।—ऽ,
दोर्मू—लनाभि—देशं निदर्श—यन्त्यो महाच—प—लाः ॥

विपुलापूर्वकं महाचपलोदाहरणम्—

१ २ ३ ४ ५ ६ ७
।·।·ऽ ।·ऽ·।—ऽ·ऽ— ।·ऽ·।—ऽ·ऽ—।·ऽ·।—ऽ·ऽ—ऽ,
चिबुके कपोल—देशे—ऽपि कूपि—का दृ—श्यते स्मि—ते य—स्याः।
१ २ ३ ४ ५ ६ ७
।·।·ऽ·—।·ऽ·।—ऽ·ऽ—।·ऽ·।—ऽ·ऽ ।·ऽ·।—।—ऽ,
विपुला—न्वयप्र—जाता—पि जाय—ते सा महाच—प—ला ॥

## आद्यर्धसमा गीतिः । ४ । २८ ॥

आद्यर्धेन सममन्त्यमर्धं यस्याः साद्यर्धसमा 'गीतिः' नाम। अन्त्यपदलोपी समासः। एतदुक्तं भवति—द्वितीयेऽप्यर्धे षष्ठो गणो (।ऽ।) जकारो न्लौ (।।।।) वा कर्तव्यः॥

तत्र पथ्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
।·।·ऽ ऽ·ऽ—।·।·ऽ ऽ·।·।—।·।·ऽ—।·ऽ·।—ऽ·ऽ—ऽ,
मधुरं वीणा—रणितं पञ्चम—सुभग—श्च कोकि—लाला—पः।
१ २ ३ ४ ५ ६ ७
ऽ·ऽ ऽ·।·।—ऽ·ऽ ऽ·ऽ ।·।·ऽ—।·ऽ·।—ऽ·।·।—ऽ,
गीतिः पौरव—धूनां सुप्तं कुसुमा—युधं प्र—बोधय—ति ॥

आदिविपुलागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
।·।·।·।—ऽ·।·।—ऽ·ऽ—।·ऽ·।—ऽ·ऽ—।·ऽ·।—।·।·ऽ—ऽ,
इयमप—रा विपु—ला गी—तिरुच्य—ते स—र्वलोक—हितहे—तोः।
१ २ ३ ४ ५ ६ ७
।·।·ऽ—।·ऽ·।—ऽ·ऽ—।·ऽ·। ।·।·ऽ— ।·ऽ·।—ऽ·ऽ—ऽ,
यदनि—ष्टमात्म—नस्त—त्परेषु भवता—पि मा क—चित्का—रि ॥

पथ्यामहाचपलागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ·ऽ ।·ऽ·। —ऽ·ऽ—।·ऽ·।—ऽ ·ऽ—।·ऽ·।—।·।·ऽ—ऽ,

कामं चकास्ति—गीति—र्मृगीदृ—शां सी—धुपान—चपला—नाम् ।

१ २ ३ ४ ५ ६ ७

।·।·ऽ—।·ऽ·।—ऽ·ऽ ।·ऽ·।—ऽ·ऽ—।·।·।·।—।·।·ऽ—ऽ,

सुरतं—च मुक्त—लज्जं निरर्ग—लोल्ला—पमणित—रमणी—यम् ॥

महाविपुलामहाचपलागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ·ऽ—।·ऽ·।—ऽ·ऽ—।·ऽ·।—ऽ·ऽ—।·।·।·।—।·।·।·।—ऽ,

पञ्चे—षुवल्ल—भः प—ञ्चमध्व—निस्त—त्र भवति—यदि विपु—लः ।

१ २ ३ ४ ५ ६ ७

।·।·ऽ—।·ऽ·। ऽ·ऽ—।·ऽ·।—ऽ·ऽ—।·ऽ·।—ऽ· ऽ—ऽ,

चपलं—करोति कामा—कुलं म—नः का—मिनाम—सौ गी—तिः ॥

## अन्त्येनोपगीतिः । ४ । २९ ॥

‘समा’ इत्यनुवर्तते । अन्त्येनार्धेन सममाद्यमर्धं यस्याः, सार्या ‘उपगीतिः’ नाम ।

तत्र पथ्योपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ·ऽ—ऽ·।·।—ऽ·।·।—ऽ·ऽ—ऽ·ऽ—।·ऽ·।—।—ऽ,

गान्ध—र्वं मक—रध्वज—देव—स्यास्त्रं जगद्वि—ज—यि ।

१ २ ३ ४ ५ ६ ७

।·।·।·।—ऽ·।·।—ऽ·।·।—।·।·ऽ—ऽ·ऽ—।—ऽ·ऽ—ऽ,

इति सम—वेक्ष्य मु—मुक्षुभि—रुपगी—तिस्त्य—ज्य—ते दे—शः ॥

महाविपुलोपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

।·।·ऽ—।·ऽ·।—ऽ·ऽ—।·।·।·।—ऽ·।·।—।—ऽ·ऽ—ऽ,

विपुलो—पगीति—झङ्का—रमुखरि—ते भ्रम—र—माला—नाम् ।

१ २ ३ ४ ५ ६ ७

ऽ·।·।—ऽ·।·।—ऽ·ऽ—।·ऽ·। ।·।·ऽ ।—ऽ·ऽ—ऽ,

रैवत—कोपव—ने व—स्तुमस्तु सततं म—म प्री—तिः ॥

पथ्यामहाचपलोपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

।·।·ऽ—।·ऽ·।—ऽ·ऽ ।·ऽ·। ऽ·ऽ ।·ऽ·।—।—ऽ,

विषया—मिषाभि—लाषं करोति चित्तं सदा च—प—लम् ।

१ २ ३ ४ ५ ६ ७

ऽ·ऽ—।·ऽ·।—ऽ·ऽ ।·ऽ·।—ऽ·ऽ ।—ऽ·ऽ—ऽ,

वैरा—ग्यभाव—नानां तथोप—गीत्या भ—वेत्स्व—स्थम् ॥

महाविपुलामहाचपलोपगीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

।·।·ऽ—।·ऽ·। ऽ·ऽ—।·ऽ·।—ऽ·ऽ—।—ऽ·ऽ—ऽ,

विपुलो—पगीति संत्य—ज्यतामि—दं स्था—न—कं भि—क्षो ।

१ २ ३ ४ ५ ६ ७

।·।·ऽ—।·ऽ·।—ऽ·ऽ—। ऽ ।—ऽ·ऽ—।—ऽ·ऽ—ऽ,

विषया—भिलाष—दोषे—ण बाध्य—ते च—ञ्च—लं चि—त्तम् ॥

## उत्क्रमेणोद्गीतिः । ४ । ३० ॥

पूर्वोक्तात्क्रमाद्विपरीतः क्रम उत्क्रमः । अयमर्थः—आद्यमन्त्यं भवत्यर्धम्, अन्त्यमादौ, सा 'उद्गीतिः' नाम आर्या । तत्र पथ्योद्गीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ·।·।—ऽ·ऽ—।·।·ऽ ।·।·ऽ ऽ·ऽ—।·ऽ·।—।—ऽ,

व्याध इ—वोद्गी—तिरवैः प्रथमं ताव—न्मनो ह—र—सि ।

१ २ ३ ४ ५ ६ ७

ऽ·।·।—।·।·ऽ—ऽ·।·। ऽ·ऽ—ऽ·ऽ—।·ऽ·।—ऽ·ऽ—ऽ,

दुर्नय—कर वि—श्राम्यसि पश्चा—त्प्राणे—षु विप्रि—यैः श—ल्यैः ॥

महाविपुलोद्गीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ·ऽ ।·ऽ·।—ऽ·ऽ—।·ऽ·। ।·।·ऽ ।·ऽ·।—।—ऽ,

एषा तवाप—रोद्गी[२]—तिरत्र विपुला परिभ्र—म—ति ।

१ २ ३ ४ ५ ६ ७

ऽ·ऽ—।·ऽ·। ऽ·ऽ—।·।·।·।—ऽ·ऽ—।·ऽ·।—।·।·ऽ—ऽ,

त्वद्व—ल्लभापि यत्की—र्तिरखिल—दिक्पा—लपार्श्व—मुपया—ति ॥

पथ्यामहाचपलोद्गीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७

ऽ·ऽ—।·ऽ·। ऽ·ऽ ।·ऽ·।—ऽ·ऽ—।—।·।·ऽ—ऽ,

उद्गी—तिरत्र नित्यं प्रवर्त—ते का—म—चपला—नाम् ।

१ २ ३ ४ ५ ६ ७

ऽ·ऽ—।·ऽ·।—ऽ·ऽ ।·ऽ·।—ऽ·ऽ ।·ऽ·।—ऽ·ऽ—ऽ,

तस्मा—न्मुने वि—मुञ्च प्रदेश—मेतं समेत—मेता—भिः ॥

---

१. व्युत्क्रमेणेति क्वचित्पाठः । २. उद्गीतिर्विगीतिः, दुष्कीर्तिरिति यावत् । अत्र निन्दया स्तुतिव्यक्तिरूपो व्याजस्तुतिरलङ्कारः ।

महाविपुलामहाचपलोद्गीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७
।·।S ।·S·।—S·S—।·S·।—S·S—।·S·।—।—S,
विपुला पयोध—रश्रो—णिमण्ड—ले च—क्षुषोश्च—प—ला ।

१ २ ३ ४ ५ ६ ७
S·S—।·S·।—S·S—।·S·। S·S—।·S·।—S·।·।—S,
उद्गी—तिशालि—नी का—मिनी च सा वा—णिनी म—नो हर—ति ॥

## अर्धे वसुगणे आर्यागीतिः । ४ । ३१ ॥

अष्ट गणाः प्रथमेऽर्धे यस्या भवन्ति सा 'आर्यागीतिः' नामार्या । अष्टमोऽपि गणश्चतुर्मात्रिको भवतीत्यर्थः । विशेषाभावात् द्वितीयमप्यर्धं तादृशमेव । अत्रापि षष्ठो मणो द्विविकल्प एव, न लकारः । अर्धे इति वर्तमाने पुनरर्धग्रहणाद्गणग्रहणाच्च । इयमपि पथ्यादिलक्षणपूर्वकत्वात् तद्वदार्यागीतिः ॥ पथ्यार्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
।·।·।·।—।·।·।·।—S·S S·S—S·S—।·S·।—S·S—।·।·।
अजमज—रममर—मेकं प्रत्य—क्चैत—न्यमीश्व—रं ब्र—ह्म परम् ।

१ २ ३ ४ ५ ६ ७ ८
S·S—S·S—।·।·S ।·।·S—S·S—।·S·।—S·S—S·S,
आत्मा—नं भा—वयतो भवमु—क्तिः स्या—दितीय—मार्या—गीतिः ॥

महाविपुलार्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
।·।·S—।·S·।—।·।·S—।·S·।—S·।·।—।·।·।·।—।·।·।·।—।·।·S
विषया—भिलाष—मृगतृ—ष्णिका ध्रु—वं हर—ति हरिण—मिव हृत—हृदयम् ।

१ २ ३ ४ ५ ६ ७ ८
।·।·S—।·S·।—।·।·S—।·S·।—S·S—।·S·।—।·।·।·।—S·S,
विपुला—त्ममोक्ष—सुखका—ङ्क्षिभिस्त—तस्त्य—ज्यते वि—षयरस—सङ्गः ॥

पथ्याजघनचपलार्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
S·S—।·S·।—S·S—।·।·S S·S—।·।·।·।—।·।·S—।·।·S,
वाता—हतोर्मि—माला—चपलं संप्रे—क्ष्य विषय—सुखम—ल्पतरम् ।

१ २ ३ ४ ५ ६ ७ ८
S·S ।·S·।—S·S ।·S·।—S·S—।·S·। S·S—।·।·S,
मुक्त्वा समस्त—सङ्गं तपोव—नान्या—श्रयन्ति तेना—त्मविदः ॥

---

१. 'मालिनी' इति लि० पु०. २. 'गणाः' इति पाठः. ३. 'आर्याणामासमन्ताद्गीतिः. ४. 'विपुलाभिलाष' इति लि० पु०. ५. 'हन्ति' इति लि० पु०.

महाविपुलामहाचपलार्यागीत्युदाहरणम्—

१ २ ३ ४ ५ ६ ७ ८
।·।·ऽ—।·ऽ·।—ऽ·ऽ—।·ऽ·।—ऽ·ऽ ।·ऽ·। ।·।·।·।—।·।·ऽ,
चपला—नि चक्षु—रावी—नि चित्त—हारी च हन्त हतविष—यगणः ।

१ २ ३ ४ ५ ६ ७ ८
ऽ·ऽ—।·ऽ·।—ऽ·ऽ—।·ऽ·।—ऽ·।·।—।·।·।·।—।·।·ऽ—ऽ·ऽ,
एका—न्तशीलि—नां यो—गिनाम—तो भव—ति परम—सुखसं—प्राप्तिः ॥[1]

इत्यार्याधिकारः ।

## वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते ल्र्गः । ४ । ३२ ॥

'लः' इत्यनुवर्तते । यत्रायुक्पादे प्रथमे तृतीये च द्विःस्वराश्चतुर्दश लकारा भवन्ति, युक्पादे च द्वितीये चतुर्थे च युग्वसवः षोडश लकाराः, तत् 'वैतालीयं' नाम छन्दः । तेषां लां मध्ये उभयोरपि पादयोरन्ते रेफलकारगकाराः कर्तव्याः । आद्ये पादे षड् लकाराः पश्चादेवशिष्यन्ते[2], द्वितीये चाष्टौ । एवं वैतालीयार्धं सिध्यति । द्वितीयमप्यर्धं तादृशमेव । तत्रोदाहरणम्—

रगणः ल. गु. रगणः ल. गु.
२. ४. ५. ६. ८. ९. ११. १२. १४. २. ४. ६. ७. ८. १०. ११. १३. १४. १६.
ऽ—ऽ—।—।—ऽ—।—ऽ—।—ऽ ऽ—ऽ—ऽ—।—।—ऽ—।—ऽ—।—ऽ,
क्षु—त्क्षी—ण—श—री—र—सं—च—या व्य—क्ती—भू—त—शि—रा—स्थि—प—ञ्ज—राः ।

रगणः ल. गु. रगणः ल. गु.
२. ४. ५. ६. ८. ९. ११. १२. १४. २. ४. ६. ७. ८. १०. ११. १३. १४. १६.
ऽ—ऽ ।—।—ऽ—।—ऽ—।—ऽ ऽ—ऽ—ऽ—।—।—ऽ ।—ऽ—।—ऽ,
के—शैः प—रु—षै—स्त—वा—र—यो वै—ता—ली—य—त—नुं वि—त—न्व—ते ॥

---

१. मन्दारमरन्देऽन्येपि केचिद्गीतिभेदा दृश्यन्ते—

'तत्रैकद्वित्रिमात्राणामाधिक्यं प्रथमे यदि ।
तदा **विगीतिः** कथिता द्वितीये चेत्**सुगीतिका** ॥
तृतीये **त्वतिगीतिः** स्याच्चतुर्थे **स्वरगीतिका** ।
**कटुगीति**स्त्वोजयोश्चेत्समयोर्**मधुगीतिका** ॥
यदि द्वितीयादिमयो**र्बालगीति**रुदाहृता ।
**वक्रगीति**स्तु कथिता चेत्तृतीयचतुर्थयोः ॥' इति । (बिं० १)

२. पश्चात् रेफलकारगकाराणां प्रागिति भावः ।

अपि च ।

रगणः ल. गु. रगणः ल. गु.

१. २. ४. ५. ६. ८. ९. ११. १२. १४. १. २. ४. ६. ७. ८. १०. ११. १३. १४. १६.

।–।–ऽ– । ।–ऽ–।–ऽ–।–ऽ ।–।–ऽ–ऽ ।–।–ऽ–।–ऽ–।–ऽ,

त–व–त–न्वि क–टा–क्ष–वी–क्षि–तैः प्र–स–र–द्भिः श्र–व–णा–न्त–गो–च–रैः ।

रगणः ल. गु. रगणः ल. गु.

१. २. ४. ५. ६. ८. ९. ११. १२. १४. १. २. ४. ६. ७. ८. १०. ११. १३. १४. १६.

।–।–ऽ–।–। ऽ– ।–ऽ–।–ऽ ।–।–ऽ ऽ–।–। ऽ– ।–ऽ ।–ऽ,

वि–शि–खै–रि–व ती–क्ष्ण–को–टि–भिः प्र–ह–तः प्रा–णि–ति दु–ष्क–रं न–रः ॥

यथा च ।

रगणः ल. गु. रगणः ल. गु.

१.–२. ४. ५. ६. ८. ९. ११. १२. १४. १. २. ४. ६. ७. ८. १०. ११. १३. १४. १६.

।–।–ऽ–।–।–ऽ–।–ऽ–।–ऽ ।–।–ऽ–ऽ–।–।–ऽ– ।–ऽ–।–ऽ,

श–व–शो–णि–त–प–ङ्क–च–र्चि–तं पु–रु–षा–न्त्र–ग्र–थि–तो–र्ध्व–मू–र्ध–जम्

रगणः ल. गु. रगणः ल. गु.

१. २. ४. ५. ६. ८. ९. ११. १२. १४. २. ४. ६. ७. ८. १०. ११. १३. १४. १६.

।–।–ऽ– ।–।–ऽ–।–ऽ–।–ऽ ऽ–ऽ–ऽ–।–।–ऽ ।–ऽ–।–ऽ,

व–पु–रा–न्त–र–व–ह्वि–दी–पि–तं वै–ता–ली–य–मि–दं वि–लो–क्य–ताम् ॥

वैतालीयमिति वेतालशब्दात्कृशाश्वा( पा० सू० ४।२।८० ) देराकृतिगणत्वाच्छण्प्रत्ययश्चातुरर्थिकः । अत्र पादग्रहणमिदं ज्ञापयति, यत्–आर्यादीनां 'पादश्चतुर्भागः' ( पि० सू० ४।१० ) इति व्यवस्था नास्ति ॥

## गौपच्छन्दसकम् । ४ । ३३ ॥

अस्मिन् वैतालीये छन्दस्यन्ते गकारश्चेदधिको भवति, तद् 'औपच्छन्दसकं' नाम छन्दः । तत्रोदाहरणम्—

रगणः ल. गु. गु. रगणः ल. गु. गु.

२. ४. ५. ६. ८. ९. ११. १२. १४. १६. २. ४. ६. ७. ८. १०. ११. १३. १४. १६. १८.

ऽ– ऽ–।–।–ऽ ।–ऽ–। ऽ–ऽ ऽ ऽ–ऽ–।–।–ऽ–।–ऽ । ऽ–ऽ,

वा–क्यै–र्म–धु–रैः प्र–ता–र्य पू–र्वं यः प–श्चा–द–ति–सं–द–धा–ति मि–त्रम् ।

रगणः ल. गु. गु. रगण. ल. गु. गु.

२. ४. ५. ६. ८. ९. ११. १२. १४. १६. २. ४. ६. ७. ८. १०. ११. १३. १४. १६. १८.

ऽ–ऽ–।–।–ऽ ।–ऽ–।–ऽ–ऽ–ऽ–ऽ– ऽ–।–।–।–ऽ ।–ऽ– । ऽ–ऽ,

तं दु–ष्ट–म–तिं वि–शि–ष्ट–गो–ष्ठ्या–मौ–प–च्छ–न्द–स–कं व–द–न्ति बा–ह्यम् ॥

---

१. लगयोरन्ते गकारेऽधिके यगणः सिध्यति । अत एवोक्तं गारुडे—'अन्तेयौ पूर्ववदिदमौपच्छन्दसिकं मतम् ।' ( पू. खं. २०८।६ ) इति ।

अपि च ।

रगणः यगणः रगणः यगणः

१. २. ४. ५. ६. ८. ९. ११. १२.१४.१६. १. २. ४. ६. ७. ८. १०.११. १२.१४.१६.१८.

।–।–ऽ–।–।–ऽ–।–ऽ–।–ऽ–ऽ ।–।–ऽ–ऽ–।–।–ऽ–।–ऽ–।–ऽ–ऽ,

प–र–म–र्म–नि–री–क्ष–णा–नु–र–क्तं स्व–य–म–त्य–न्त–नि–गू–ढ–चि–त्त–वृ–त्तिम् ।

रगणः यगणः रगणः यगणः

१. २. ४. ५. ६. ८. ९. ११. १२.१४.१६. २. ४. ६. ७. ८. १०.११.१२.१४.१६. १८.

।–।–ऽ–।–।–ऽ–।–ऽ–।–ऽ–ऽ–ऽ–ऽ–ऽ–।–।–ऽ ।–ऽ–। ऽ–ऽ,

अ–न–व–स्थि–त–म–र्थ–लु–ब्ध–मा–रा–दौ–प–च्छ–न्द–स–कं ज–ही–हि मि–त्रम् ॥

उपछन्दःशब्दादरीहणादि(पा० सू० ४।२।८०)पाठाच्चातुरर्थिको वुञ्प्रत्ययः ॥

## आपातलिका भ्गौ ग् । ४ । ३४ ॥

रेफलकारगकाराणामपवादः । 'द्विस्वरा अयुक्पादे युग्वसवोऽन्ते'(पि० सू० ४।३२) इत्यनुवर्तते । पूर्वलक्षणयोरन्ते भकारो गकारौ—च भवतः, तद्वैतालीयम् 'आपातलिका' नाम लभते । तत्रोदाहरणम्—

भगणः गु. गु. भगणः गु. गु.

२. ३. ४. ६. ८. ९. १०. १२. १४. २. ४. ६. ७. ८. १०. ११.१२.१४.१६.

ऽ–।–।–ऽ–ऽ ।–।–ऽ–ऽ ऽ–ऽ–ऽ ।–।–ऽ–।–।–ऽ–ऽ,

पि–ङ्ग–ल–के–शी क–पि–ला–क्षी वा–चा–टा वि–क–टो–न्न–त–द–न्ती ।

भगणः गु. गु. भगणः गु. गु.

२. ४. ५. ६. ८. ९. १०.१२.१४. १. २. ३. ४. ६. ७. ८. १०.११.१२.१४.१६.

ऽ–ऽ–।–।–ऽ ।–।–ऽ–ऽ ।–।–।–।–ऽ– । । ऽ–।–।–ऽ–ऽ,

आ–पा–त–लि–का पु–न–रे–षा नृ–प–ति–कु–ले–ऽपि न भा–ग्य–मु–पै–ति ॥

आपातलिका अस्थिरेत्यर्थः ॥

## शेषे परेण युङ् न साकम् । ४ । ३५ ॥

अत्र वैतालीयाधिकारे येषां लकाराणां नियम उक्तस्तद्व्यतिरिक्तो लकारवर्णः शेषः, तस्मिन्नियमः क्रियते—युग्लकारः परेण साकं न मिश्रीकर्तव्यः । द्वितीयस्तृतीयेन, चतुर्थः पञ्चमेन, युक्पादे षष्ठश्च सप्तमेन । एवं वदता शेषाणां मिश्रीभावोऽप्यनुज्ञातः । अत्रोदाहरणं पूर्वमेव ॥

## षट् चामिश्रा युजि । ४ । ३६ ॥

अत्र द्वितीयचतुर्थयोः पादयोः षट् लकारा अमिश्रा न कर्तव्याः । पृथग् न प्रयोक्तव्या इत्यर्थः । प्रथमतृतीययोश्च पादयोः स्वरुचिः । तत्रोदाहरणं वैतालीये तावत्—

रगणः ल. गु. रगणः ल. गु.

१. २. ३. ४. ५. ६. ८. ९.११.१२.१४. १. २. ३. ४. ६. ७. ८.१०.११.१२.१४.१६.

।–।–।–।–।–। ऽ–।–ऽ ।–ऽ ।–।–।–।–ऽ–।–।–ऽ–।–ऽ–।–ऽ,

स–म–र–शि–र–सि स–द्य–ते द्वि–षां न–व–नि–शि–ता–यु–ध–वृ–ष्टि–र–प्र–तः ।

रगणः ल. गु. रगणः ल. गु.

१. २. ३. ४. ५. ६. ८. ९. ११. १२. १४. १. २. ३. ६. ७. ८. १०. ११. १२. १४. १६.

।–।–।–।–।–।–ऽ–।–ऽ–।–ऽ ।–।–ऽ–ऽ । ।–ऽ–।–ऽ–।–ऽ,

कु–व–ल–य–द–ल–दी–र्घ–च–क्षु–षां प्र–म–दा–नां न क–टा–क्ष–वी–क्षि–तम् ॥

औपच्छन्दसकोदाहरणम्—

रगणः यगणः रगणः यगणः

१. २. ३. ४. ५. ६. ८. ९. ११. १२. १४. १६. २. ४. ६. ७. ८. १०. ११. १२. १४. १६. १८.

।–।–।–।–।–। ऽ–।–ऽ–।–ऽ–ऽ ऽ–ऽ–ऽ–।–।–ऽ ।–ऽ ।–ऽ–ऽ,

प–र–यु–व–ति–षु पु–त्र–भा–व–मा–दौ कृ–त्वा–प्रा–र्थ–य–ते त–तः प–ति–त्वम् ।

रगणः यगणः रगणः यगणः

१. २. ३. ४. ५. ६. ८. ९. ११. १२. १४. १६. २. ४. ६. ७. ८. १०. ११. १२. १४. १६. १८.

।–।–।–।–।–।–ऽ–।–ऽ ।–ऽ–ऽ–ऽ–ऽ–ऽ–।–।–ऽ ।–ऽ–। ऽ–ऽ,

इ–द–म–प–र–मि–हो–च्य–ते वि–शे–षा–दौ–प–च्छ–न्द–स–कं ख–ल–स्य वृ–त्तम् ॥

आपातलिकोदाहरणम्—

भगणः गु. गु. भगणः गु. गु.

१. २. ३. ४. ५. ६. ८. ९. १०. १२. १४. २. ३. ४. ६. ७. ८. १०. ११. १२. १४. १६.

।–।–।–।–।–। ऽ–।–।–ऽ–ऽ ऽ–।–।–ऽ ।–।–ऽ–।–।–ऽ–ऽ,

अ–भि–र–म–य–ति किं–न–र–क–ण्ठी हं–स–ग–तिः श्र–व–णा–य–त–ने–त्रा ।

भगणः गु. गु. भगणः गु. गु.

१. २. ३. ४. ५. ६. ८. ९. १०. १२. १४. १. २. ३. ४. ६. ७. ८. १०. ११. १२. १४. १६.

।–।–।–।–।–।–ऽ–।–।–ऽ–ऽ ।–।–।–।–ऽ ।–।–ऽ ।–।–ऽ–ऽ,

वि–श–द–क–म–ल–को–म–ल–गा–त्री यु–व–ति–रि–यं हृ–द–यं त–रु–णा–नाम् ॥

## पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः । ४ । ३७ ॥

इदानीं विशेषलक्षणमाह—'शेषे परेण युङ् न साकम्' ( पि० सू० ४।३५ ) इत्यत्र पञ्चमचतुर्थयोरेकीभावो निषिद्धः सोऽनेन विधीयते । 'युजि' इत्यनुवर्तते । यदा युक्पादे पञ्चमेन लकारेण पूर्वः संगच्छते तदा 'प्राच्यवृत्तिः' नाम वैतालीयं भवति । शेषं यथाप्राप्तम् । तत्रोदाहरणम्—

रगणः ल. गु. रगणः ल. गु.

१. २. ४. ५. ६. ८. ९. ११. १२. १४. २. ३. ५. ६. ७. ८. १०. ११. १२. १४. १६.

।–।–ऽ–।–।–।–ऽ–।–ऽ–।–ऽ, ऽ–। ऽ–। । ।–ऽ–। ऽ–।–ऽ,

वि–पु–ला–र्थ–सु–वा–च–का–क्ष–राः क–स्य ना–म न हृ–र–न्ति मा–न–सम्¹ ।

---

१. 'वैतालीयप्राच्यवृत्तिः, औपच्छन्दसकप्राच्यवृत्तिः, आपातलिकाप्राच्यवृत्तिः' इति भेदत्रयमुपलभ्यते छन्दःकौस्तुभादौ ।

रगणः ल. गु. रगणः ल. गु.

१. २. ४. ५. ६. ८. ९. ११. १२. १४. २. ३. ५. ६. ७. ८. १०. ११. १३. १४. १६.

।–।–ऽ–।–।–ऽ–।–ऽ–।–ऽ ऽ–।–ऽ–।–।–।–ऽ–।–ऽ–।–ऽ,

र–स–भा–व–वि–शे–ष–पे–श–लाः प्रा–च्य–वृ–त्ति–क–वि–का–व्य–सं–प–दः ॥

## अयुक्तृतीयेनोदीच्यवृत्तिः । ४ । ३८ ॥[1]

'पूर्वः साकम्' इत्यनुवर्तते । अयुक्पादे तृतीयेन लकारेण यदि पूर्वः संगच्छते, तदा 'उदीच्यवृत्तिः' नाम वैतालीयम् । शेषं यथाप्राप्तमेव । तत्रोदाहरणम्—

रगणः ल. गु. रगणः ल. गु.

१. ३. ४. ५. ६. ८. ९. ११. १२. १४. १. २. ४. ६. ७. ८. १०. ११. १३. १४. १६.

।–ऽ–।–।–।–ऽ–।–ऽ–।–ऽ ।–।–ऽ–ऽ ।–।–ऽ–।–ऽ–।–ऽ,

अ–वा–च–क–म–नू–र्जि–ता–क्ष–रं श्रु–ति–दु–ष्टं य–ति–क–ष्ट–म–क्र–मम् ।

रगणः ल. गु. रगणः ल. गु.

१. ३. ४. ५. ६. ८. ९. ११. १२. १४. १. २. ४. ६. ७. ८. १०. ११. १३. १४. १६.

।–ऽ–।–।–।–ऽ । ऽ–।–ऽ ।–।–ऽ ऽ–।–।–ऽ–।–ऽ–।–ऽ,

प्र–सा–द–र–हि–तं च ने–ष्य–ते क–वि–भिः का–व्य–मु–दी–च्य–वृ–त्ति–भिः ॥

## आभ्यां युगपत्प्रवृत्तकम् । ४ । ३९ ॥[2]

आभ्यां पूर्वोक्तलक्षणाभ्यां युगपत्प्रवृत्ताभ्यां 'प्रवृत्तकं' नाम वैतालीयम् । युक्पादे पञ्चमेन पूर्वः संगच्छते, अयुक्पादे तृतीयेन द्वितीय इत्यर्थः । तत्रोदाहरणम्—

रगणः ल. गु. रगणः ल. गु.

१. ३. ४. ५. ६. ८. ९. ११. १२. १४. २. ३. ५. ६. ७. ८. १०. ११. १३. १४. १६.

।–ऽ ।–।–।–ऽ–।–ऽ–।–ऽ ऽ–।–ऽ ।–।–।–ऽ–।–ऽ–।–ऽ,

इ–दं भ–र–त–वं–श–भू–भृ–तां श्रू–य–तां श्रु–ति–म–नो–र–सा–य–नम् ।

रगणः ल. गु. रगणः ल. गु.

१. ३. ४. ५. ६. ८. ९. ११. १२. १४. २. ३. ५. ६. ७. ८. १०. ११. १३. १४. १६.

।–ऽ–।–।–।–ऽ ।–ऽ–।–ऽ ऽ–।–ऽ–।–।–।–ऽ ।–ऽ–।–ऽ,

प–वि–त्र–म–धि–कं शु–भो–द–यं व्या–स–व–क्त्र–क–थि–तं प्र–वृ–त्त–कम् ॥

## अयुक्चारुहासिनी । ४ । ४० ॥[3]

यस्य सर्वे पादा अयुग्लक्षणयुक्तास्तद्वैतालीयं 'चारुहासिनी' नाम । किं तल्लक्षणम् ? चतुर्दशमात्रत्वं, तृतीयेन पूर्वस्य योगः । तत्रोदाहरणम्—

---

१. अस्यापि 'वैतालीयोदीच्यवृत्तिः, औपच्छन्दसकोदीच्यवृत्तिः, आपातलिकोदीच्यवृत्तिः' इति भेदत्रयमुपलभ्यते तत्रैव । २. 'वैतालीयप्रवृत्तम्, औपच्छन्दसकप्रवृत्तम्, आपातलिकाप्रवृत्तकम्' एवं त्रिविधं छन्दःकौस्तुभादौ । ३. तथैव चारुहासिन्यपि त्रिविधा ।

रगणः ल. गु. रगणः ल. गु.
१. ३. ४. ५. ६. ८. ९. ११. १२. १४. १. ३. ४. ५. ६. ८. ९. ११. १२. १४.
।–ऽ–।–।–।–ऽ–।–ऽ–।–ऽ ।–ऽ–।–।–।–ऽ–।–ऽ–।–ऽ,
म–ना–क्प्र–सृ–त–द–न्त–दी–धि–तिः स्म–रो–ल्ल–सि–त–ग–ण्ड–म–ण्ड–ला ।

रगणः ल. गु. रगणः ल. गु.
१. ३. ४. ५. ६. ८. ९. ११. १२. १४. १. ३. ४. ५. ६. ८. ९. ११. १२. १४.
।–ऽ–।–।–।–ऽ । ऽ–।–ऽ, ।–ऽ ।–।–। ऽ–।–ऽ–।–ऽ,
क–टा–क्ष–ल–लि–ता तु का–मि–नी म–नो ह–र–ति चा–रु–हा–सि–नी ॥

## युग्मपरान्तिका । ४ । ४१ ॥

युग्लक्षणयुक्तैश्चतुर्भिः पादैः 'अपरान्तिका' नाम वैतालीयम्। किं तल्लक्षणम्? षोडशमात्रत्वम्, पञ्चमेन पूर्वस्य योगः, षण्णां मिश्राणां प्रयोगश्च । तत्रोदाहरणम्—

रगणः ल. गु. रगणः ल. गु.
१. २. ३. ५. ६. ७. ८. १०. ११. १३. १४. १६. १. २. ३. ५. ६. ८. १०. ११. १३. १४. १६.
।–।–।–ऽ–।–।–।–ऽ–।–ऽ–।–ऽ, ।–।–।–ऽ–।–ऽ–ऽ ।–ऽ–।–ऽ,
स्थि[2]–र–वि–ला–स–न–त–मौ–क्ति–का–व–ली क–म–ल–को–म–ला–ङ्गी मृ–गे–क्ष–णा ।

रगणः ल. गु. रगणः ल. गु.
१. २. ३. ५. ६. ७. ८. १०. ११. १३. १४. १६. १. २. ३. ५. ६. ७. ८. १०. ११. १३. १४. १६.
।–।–। ऽ–। ।–।–ऽ । ऽ–।–ऽ, ।–।–।–ऽ–।–।–।–ऽ–।–ऽ– ।–ऽ,
ह–र–ति क–स्य हृ–द–यं न का–मि–नः? सु–र–त–के–लि–कु–श–ला–प–रा–न्ति–का ॥

अपरस्यान्तिके समीपे स्थिता, परकीयेत्यर्थः[3] ॥

### इति वैतालीयाधिकारः[4] ।

## गन्ता द्विर्वसवो मात्रासमकं ल् नवमः । ४ । ४२ ॥

'वैतालीयम्–' (पि० सू० ४।३२) इत्यादिसूत्रात्सप्तम्यन्तं 'पाद'ग्रहणमनुवर्तते। 'ल्' इति च महानधिकारः। तेनायमर्थः—यत्र पादे गन्ताः सन्तः, षोडश लकारा भवन्ति, तत् 'मात्रासमकं' नाम छन्दः। अन्ते द्वाभ्यामेको गुरुः (ऽ) कर्तव्यः। नवमश्च लकार

१. अपरान्तिकापि त्रिधोपलभ्यते तत्रैव. अस्या **एकपादिके**ति संज्ञा **गारुडे** (पृ. २०८।९). २. 'स्मितविलासरसोक्तिपेशला' इति लि. पु. ३. वस्तुतस्तु–'वानवासिका' (४।४३) वत् अपरान्तिका अपरान्तदेशोद्भवा स्त्री इत्येव युक्तम्। ४. छन्दःकौस्तुभवृत्तरत्नकरादिग्रन्थेषु नव वैतालीयभेदा उपलभ्यन्ते, तेष्वेकतमो 'दक्षिणान्तिका' इति नाम्ना भेदोऽत्र नोपलभ्यते। **गरुडपुराणे** तु लक्षितोऽसौ 'ज्ञेयाथो दक्षिणान्तिका। पराश्रितो द्वितीयो लः पादेषु निखिलेष्वपि ॥ (पृ. २०८।७) इति। **इयमपि** पूर्ववत्रिविधैव. ५. 'मात्रासमकं नवमो ल् गोऽन्त्यः' इति वृ० र०.

(।) एव। 'द्विर्वसवः' इति द्विगुणिता वसवः, लकाराः षोडशेत्यर्थः। 'शेषे परेण युङ् न साकम्' (पि० सू० ४।३५) इत्यनुवर्तनीयम्। तत्रोदाहरणम्—

२. ४. ५. ६. ८. ९. १०. १२. १४. १६. २. ४. ६. ८. ९. १०. १२. १४. १६.
ऽ–ऽ–।–।–ऽ ।–।–ऽ–ऽ–ऽ, ऽ–ऽ–ऽ–ऽ ।–।–ऽ–ऽ–ऽ,
अ–श्म–श्रु–मु–खो वि–र–लै–र्द–न्तै र्ग–म्भी–रा–क्षो न–त–ना–सा–ग्रः।
२. ४. ५. ६. ८. ९. १०. १२. १४. १६. २. ४. ५. ६. ८. ९. १०. १२. १४. १६.
ऽ–ऽ–।–।–ऽ ।–।–ऽ ऽ–ऽ, ऽ–ऽ–।–।–ऽ ।–।–ऽ ऽ–ऽ,
नि–र्मा–स–ह–नुः स्फु–टि–तैः के–शै र्मा–त्रा–स–म–कं ल–भ–ते दुः–खम्॥

'गन्त–' (पि० सू० ४।३२) इत्यनेनैवान्तस्य गुरुत्वे सिद्धे पुनर्गन्तग्रहणमातिदेशिकगुरुत्वनिवृत्त्यर्थम्। तेनात्र द्वौ लकारौ (।।) भङ्क्त्वा द्विमात्रिको गुरुः (ऽ) क्रियत इति वाक्यशेषः॥

## द्वादशश्च वानवासिका[2]। ४। ४३॥

यस्य मात्रासमकस्य पादे द्वादशो लकारः (।) स्वरूपेणावतिष्ठते चकारान्नवमश्च, तन्मात्रासमकं 'वानवासिका' नाम। तत्रोदाहरणम्—

२. ३. ४. ६. ८. ९. १०. ११. १२. १४. १६. १. २. ३. ४. ६. ७. ८. ९. १०. ११. १२. १४. १६.
ऽ–।–।–ऽ–ऽ–।–।–।–।–ऽ–ऽ, ।–।–।–।–ऽ–।–।–।–।–।–।–ऽ–ऽ,
म–न्म–थ–चा–प–ध्व–नि–र–म–णी–यः सु–र–त–म–हो–त्स–व–प–ट–ह–नि–ना–दः।
१. २. ४. ६. ८. ९. १०. ११. १२. १४. १६. २. ३. ४. ६. ८. ९. १०. ११. १२. १४. १६.
।–।–ऽ–ऽ–ऽ–।–।–।–।–ऽ–ऽ, ऽ–। । ऽ–ऽ ।–।–।–। ऽ–ऽ,
व–न–वा–सें[3]–स्त्री–स्व–नि–त–वि–शे–षः क–स्य न चि–त्तं र–म–य–ति पुं–सः॥

## विश्लोकः पञ्चमाष्टमौ[4]। ४। ४४॥

द्वादशग्रहणं नवमग्रहणं च निवृत्तम्। यत्र चतुर्षु पादेषु पञ्चमाष्टमौ लकारौ (।) तिष्ठतः, शेषं यथाप्राप्तम्, तन्मात्रासमकं 'विश्लोको' नाम। तत्रोदाहरणम्—

२. ४. ५. ६. ७. ८. १०. १२. १४. १६. २. ३. ४. ५. ६. ७. ८. १०. ११. १२. १४. १६.
ऽ–ऽ–।–।–।–।–ऽ ऽ–ऽ–ऽ ऽ–।–।–।–।–।–।–ऽ–।–।–ऽ–ऽ,
आ–त–र्गु–ण–र–हि–तं वि–श्लो–कं दु–र्न–य–क–र–ण–क–द–र्थि–त–लो–कम्।
२. ४. ५. ६. ७. ८. १०. ११. १२. १४. १६. २. ४. ५. ६. ७. ८. १०. ११. १२. १४. १६.
ऽ–ऽ ।–।–।–।–ऽ– ।–।–ऽ–ऽ, ऽ–ऽ ।–।–।–। ऽ–।–।–ऽ–ऽ,
जा–तं म–हि–त–कु–ले–ऽप्य–वि–नी–तं मि–त्रं प–रि–ह–र सा–धु–वि–गी तम्॥

## चित्रा नवमश्च[5]। ४। ४५॥

---

१. 'अन्त्यस्य' इति लि० पु०. २. 'तद्युगलाद्वानवासिका स्यात्' इति वृ० र०. ३. कोङ्कणदेशात्पूर्वो भागो वनवासदेशः, 'सर्वंसहा मध्यमवेगभाजस्त्रियो रमन्ते वनवासदेश्याः।' (५।१८) इति रतिरहस्ये। ४. 'जो लूनावथाम्बुधेर्विश्लोकः' इति वृ० र०. ५. 'बाणाष्टनवसु यदि लश्चित्रा' इति वृ० र० 'चित्रा नाम च्छन्दश्चित्रं चेत्रयो मा यकारौ' इति च्छन्दोमञ्जर्यादिषूपलब्धं चित्रा चित्रं वा च्छन्दस्त्वन्यत्.

यस्य नवमो लकार (।) एवावशिष्यते चकारात्पञ्चमाष्टमौ च, तन्मात्रासमकं 'चित्रा'-नाम । तत्रोदाहरणम्—

१. २. ४. ५. ६. ७. ८. ९. १०. १२. १४. १६. २. ४. ५. ६. ७. ८. ९. १०. ११. १२. १४. १६.
।–। ऽ– । – । ।–।–।–।–ऽ–ऽ–ऽ, ऽ–ऽ ।–।–।–। ।–। ।– ।–ऽ–ऽ,
य–दि वा–ञ्छ–सि प–र–प–द–मा–रो–ढुं मै–त्रीं प–रि–ह–र स–ह व–नि–ता–भिः ।
२. ३. ४. ५. ६. ७. ८. ९. १०. १२. १४. १६. २. ४. ५. ६. ७. ८. ९. १०. १२. १४. १६.
ऽ–।–। ।–।–।–। ।–।–ऽ–ऽ–ऽ, ऽ–ऽ–।–।–। । ।–।–ऽ ऽ–ऽ,
मु–ह्य–ति मु–नि–र–पि वि–ष–या–स–ङ्गा–चि–त्रा भ–व–ति हि म–न–सो वृ–त्तिः ॥

'नवमः' (पि० सू० ४।४२) इत्यनुवर्तमानेऽपि पुनर्नवमग्रहणमुपचित्राप्रतिप्रसवार्थम् ।

## परयुक्तेनोपचित्रा । ४ । ४६ ॥

परयुक्तेन दशमेन सहैकीभूतेन नवमेन 'उपचित्रा' नाम भवति । पूर्वं लघुनियमेन लक्षणं प्रोक्तम् । इदं तु गुरुनियमेनोच्यते । तत्रोदाहरणम्—

२. ४. ६. ७. ८. १०. ११. १२. १४. १६. २. ४. ६. ७. ८. १०. ११. १२. १४. १६.
ऽ–ऽ–ऽ ।–।–ऽ–।–।–ऽ–ऽ, ऽ–ऽ– ऽ –।–।–ऽ–।–।–ऽ ऽ,
य–चि–त्तं गु–रु–स–क्त–मु–दा–रं वि–द्या–भ्या–स–म–हा–व्य–स–नं च ।
२. ४. ६. ७. ८. १०. ११. १२. १४. १६. २. ३. ४. ६. ७. ८. १०. ११. १२. १४. १६.
ऽ–ऽ ऽ–। ।–ऽ–।–।–ऽ–ऽ, ऽ–।–।–ऽ– ।–। –ऽ–।–।–ऽ–ऽ,
पृ–थ्वी त–स्य गु–णै–रु–प–चि–त्रा च–न्द्र–म–री–चि–नि–भै–र्भ–व–ती–यम् ॥

## एभिः पादाकुलकम् । ४ । ४७ ॥

एषां पञ्चानां मध्ये यैः कैश्चिदपि चतुर्भिः पादैः 'पादाकुलकं' नाम ।

मात्रासमकविश्लोकवानवासिकोपचित्राणां पादैरुदाहरणम्—

१. २. ४. ६. ७. ८. ९. १०. ११. १२. १४. १६. २. ४. ५. ६. ७. ८. १०. ११. १२. १४. १६.
।–।–ऽ– ऽ–।–।–।–। ।–।–।–ऽ–ऽ ऽ–ऽ ।–।–।–।–।–ऽ–।–।–ऽ–ऽ,
अ–लि–वा–चा–लि–त–वि क–सि–त–चू–ते का–ले म–द–न–स–मा–ग–म–दू–ते ।
२. ४. ६. ८. ९. १०. ११. १२. १४. १६. २. ४. ५. ६. ८. १०. ११. १२. १४. १६.
ऽ–ऽ ऽ–ऽ ।–।–।–।–ऽ–ऽ ऽ–ऽ–।–।–ऽ ऽ–।–। ऽ–ऽ,
स्मृ–त्वा का–न्तां प–रि–हृ–त–सा–र्थः पा–दा–कु–ल–कं धा–व–ति पा–न्थः ॥

तथा विश्लोकोपचित्रामात्रासमकोपचित्राणां पादैः 'पादाकुलकम्' । तत्रोदाहरणम्—

२. ४. ५. ६. ७. ८. १०. ११. १२. १४. १६. २. ३. ४. ५. ६. ८. १०. ११. १२. १४. १६.
ऽ– ऽ–।–।–।–।–।–ऽ–।–।–ऽ–ऽ ऽ– ।–।–।–।–ऽ–ऽ–।–।–ऽ–ऽ,
पुं–स्को–कि–ल–कृ–त–शो–भ–न–गी–ते द–क्षि–ण–प–व–न–प्रे–रि–त–शी–ते ।

---

१. '**उपचित्रा** नवमे परयुक्ते' इति वृ० र०. **अर्धसमवृत्तान्तर्गतमुपचित्र**-नामकं छन्दस्त्वितोऽन्यत् । २. 'लहु गुरु एक्क णिम्म णहि जेहा, पअ पअ लेक्खह उत्तमरेहा । सुक्इ फणिंदह कंठहवलअं, सोरहमत्ता **पाआकुलअम्** ॥ इति प्रा० पि० सू० १।१७४ ।

१. २. ३. ४. ६. ८. ९. १०. १२. १४. १६. २. ४. ५. ६. ८. १०. ११. १२. १४. १६.
।–।–।–।–ऽ– ऽ–।–।–ऽ– ऽ–ऽ ऽ–ऽ–।–।–ऽ ऽ–।–। ऽ–ऽ,
म–धु–स–म–ये–ऽस्मि–न्कृ–त–वि–श्लो–कः पा–दा–कु–ल–कं नृ–त्य–ति लो–कः ॥

मात्रासमकस्यैकेन पादेन, द्वाभ्यामुपचित्रायाः, विश्लोकस्यैकेन 'पादाकुलकम्' । तत्रोदाहरणम्—

२. ४. ६. ८. ९. १०. १२. १४. १६. २. ४. ५. ६. ८. १०. ११. १२. १४. १६.
ऽ–ऽ ऽ–ऽ–।–।–ऽ– ऽ–ऽ ऽ–ऽ–।–।–ऽ–ऽ–।–।–ऽ–ऽ,
चि–त्तं भ्रा–म्य–त्य–न–व–स्था–नं पा–दा–कु–ल–क–श्लो–क–स–मा–नम् ।
२. ४. ६. ७. ८. १०. ११. १२. १४. १६. १. २. ३. ४. ५. ६. ७. ८. १०. १२. १४. १६.
ऽ–ऽ ऽ–।–। ऽ–।–। ऽ–ऽ–।–।–।। ।–। ।–।–ऽ–ऽ ऽ–ऽ,
का–यः का–य–ति शा–य–ति श–क्ति–स्त–द–पि न म–म प–र–लो–के भ–क्तिः ॥

यथा पादाकुलकनाम्नः श्लोकस्य पादेष्वस्थिरता तथेत्यर्थः ।

उपचित्रापादेनैकेन, वानवासिकापादेन, पुनरुपचित्रापादाभ्यां पादाकुलकम् । तत्रोदाहरणम्—

१. २. ३. ४. ६. ७. ८. १०. ११. १२. १४. १६.
।–।–।–।–ऽ–।–।–ऽ–।–।–ऽ–ऽ.
प–रि–हृ–त–स–र्व–प–रि–ग्र–ह–लो–कः
१. २. ३. ४. ६. ७. ८. ९. १०. ११. १२. १४. १६.
।–।–।–।–ऽ–।–।–।–।–।–।–ऽ–ऽ,
प्र–ति–दि–न–व–र्धि–त–गु–रु–त–र–शो–कः ।
२. ३. ४. ६. ७. ८. १०. ११. १२. १४. १६.
ऽ–।–।–ऽ–।–।–ऽ–।–।–ऽ–ऽ,
दुः–ख–वि–व–र्धि–त–लो–च–न–वा–रिः
२. ४. ५. ६. ८. १०. ११. १२. १४. १६.
ऽ–ऽ–।–।–ऽ ऽ–। ।–ऽ–ऽ,
पा–दा–कु–ल–कं या–ति त–वा–रिः ॥

**इति मात्रासमकाधिकारः ।**

---

१. 'यदतीतकृतविविधलक्ष्मयुतैर्मात्रासमादिपादैः कलितम् । अनियतवृत्तपरिणामसहितं प्रथितं जगत्सु **पादाकुलकम्** ॥' इति वृ० र०.

२. 'त्यक्त्वा दलयुगनियमं वृत्तानि चतुष्पदानि बहुधा स्युः ।
त्रयमधिकरणं तेषां मात्रासमकं च कुलकमथ तिलकम् ॥ (२।४)
मात्रासमकपद्भेदाः शतोपर्यष्टविंशतिः ।
सर्वेषु योग्येष्वल्पानां निष्फलं नामकल्पनम् ॥
चतुर्धा यदि युक्तोऽङ्घ्रिर्मात्राभिः पञ्चभिर्यदि ।
षड्भिर्वा सप्तभिः पूर्णस्त्रिधा**कुलक**मीश्महे ॥'
मात्रासमकद्वयघटितं यदि । तिलकमिति प्रथयन्तु महान्तः ॥,
—(३।१४,१५,१९) इति **वृत्तमणिकोशे** ।

## गीत्यार्या लः । ४ । ४८ ॥

यत्र पादे द्विर्वसवः षोडश लकारा भवन्ति सा 'गीत्यार्या' नाम जातिः । 'लः' इत्यनुवर्तमाने पुनर्लग्रहणं द्विमात्रिकनिवृत्त्यर्थम् । तत्रोदाहरणम्—

१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६.
।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।
म–द–क–ल–ख–ग–कु–ल–क–ल–र–व–मु–ख–रि–णि

१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६.
।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।
वि–क–सि–त–स–र–सि–ज–प–रि–म–ल–सु–र–भि–णि ।

१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६.
।–।–।–।–।–।–।–।–।–।–।　।–।–।　।–।
गि–रि–व–र–प–रि–स–र–स–र–सि म–ह–ति ख–लु

१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६.
।–।–।–।–।–।–।–।　।–।　।–।　।–।–।–।
र–ति–र–ति–श–य–मि–ह म–म हृ–दि वि–ल–स–ति ॥

सर्वलघुच्छन्दसि गीत्यार्याशब्दस्य प्रवेशयितुमशक्यत्वात्तन्नाम नोक्तम् ॥

## शिखा विपर्यस्तार्धा । ४ । ४९ ॥

सैव गीत्यार्या विपर्यस्तार्धा यदा भवति तदा 'शिखा' इत्याख्यां लभते । अयमर्थः—यत्रार्धं सर्वलघु भवति, अर्धं च सर्वगुरु, इति ।

---

'चतुष्पदानां पादस्तु षोडशारभ्य मातृकाः ।
द्वात्रिंशद्भिः परिमितश्चरितार्थो विभाति नः ॥
यदि द्वात्रिंशतोऽप्यूर्ध्वं मात्राः पादे नियोजिताः ।
ध्वन्यादिसंज्ञं गीतं स्यान्न तद्वृत्तं प्रशस्यते ॥' ( २।६,७ ) इत्यपि तत्रैव ।

१. 'द्विगुणितवसुलघुर**चलधृतिः**' इति नामान्तरं वृ० र०. २. 'चउमत्ता अट्ठगणा पुव्वद्धे, उत्तरद्ध होइ समरूआ । सो **खंधआ** विआणहु पिंगल पभणेइ मुद्धि बहुसंभेआ ॥' इति प्रा० पि० सू० १।६३ इत्यनुसारेण स्कन्धकमित्यपि संज्ञान्तरं भवेत् । ३. 'मत्त अठाइस पढमे, बीए बत्तीस मत्ताइ । पअ पअ अंते लहुआ सुद्धा **सिखा** विहाणेहु ॥' इति प्रा० पि० सू० १।१२७ उक्तशिखाच्छन्दस्त्वन्यत् । **वृत्तमणिकोशे** तु–'दशनगणोपरि गुरुयुतमलघुयुगं वा दलं पुरः परतः । उभयं द्वात्रिंशल्लघु सगुरु नवगणं च सम्मतास्ति शिखा ॥' ( ३।८ ) इत्यन्यथैव शिखा दृश्यते । सा च 'शिखा कलयते चतुर्विधान् भेदान्' ( २।३ ) इति तत्रैव । ४. 'णंदउभद्दउसेससारंगसिवबंभवारणवरुण । णीलुमअणतालंकसेहरुसरुगअणुसरहुविमइरवीर ॥' इति प्रा० पि० सू० १।६४ इति सूत्रोक्तस्कन्धकभेदान्तर्गत**शरभा**ख्यं छन्दोनामान्तरम् ।

एवं तस्या एव विन्यासभेदेन संज्ञाद्वयमाह—

**लः पूर्वश्चेज्ज्योतिः । ४ । ५० ॥**

पूर्वश्चेदर्धभागः सर्वलघुर्द्वात्रिंशल्लकारो ( ३२ ) भवति, उत्तरश्च सर्वगुरुः षोडश ( १६ ) गकारस्तदा 'ज्योतिः' नाम शिखा भवति । तत्रोदाहरणम्—

१. २. ३. ४. ५. ६. ७. ८. ९.१०.११.१२.१३.१४.१५.१६.
।–। ।–।–।–।–।–।–।–।–।–।–।– ।–।–।–।
य–दि सु–ख–म–नु–प–म–म–प–र–म–भि–ल–ष–सि
१७.१८.१९.२०.२१.२२.२३.२४.२५.२६.२७.२८.२९.३०.३१.३२.
।–।–।–। ।–।–।–। ।–।–।–।–।–।–।–।
प–रि–ह–र यु–व–ति–षु र–ति–म–ति–श–य–मि–ह ।
१. २. ३. ४. ५. ६. ७. ८.
ऽ–ऽ– ऽ –ऽ–ऽ–ऽ– ऽ –ऽ,
आ–त्म–ज्यो–ति–र्यो–गा–भ्या–सा-
९.१०. ११. १२. १३.१४.१५.१६.
ऽ–ऽ ऽ–ऽ–ऽ–ऽ ऽ– ऽ
दृ–ष्ट्वा दुः–ख–च्छे–दं कु–र्याः ॥

**गश्चेत्सौम्या । ४ । ५१ ॥**

तस्या एव शिखायाः पूर्वार्धभागः सर्वगुरुः षोडश ( १६ ) गकारश्चेद्भवति, उत्तरश्च द्वात्रिंश ( ३२ ) लकारो भवति, तदा 'सौम्या' नाम शिखा भवति । तत्रोदाहरणम्—

१. २. ३. ४. ५. ६. ७. ८.
ऽ – ऽ ऽ – ऽ ऽ – ऽ ऽ – ऽ
सौ–म्यां दृ–ष्टिं दे–हि स्ने–हा-
९.१०. ११. १२.१३.१४.१५. १६.
ऽ–ऽ– ऽ – ऽ ऽ–ऽ ऽ– ऽ
द्दे–हे–ऽस्मा–कं मा–नं मु–क्त्वा ।
१. २. ३. ४. ५. ६. ७. ८. ९.१०.११.१२.१३.१४.१५.१६.
।–।–।–।–।–। ।–।–।–।–।–। ।–। ।–।,
श–श–ध–र–मु–खि! सु–ख–मु–प–न–य म–म हृ–दि
१७.१८.१९.२०.२१.२२.२३.२४.२५.२६.२७.२८.२९.३०.३१.३२.
।–।–।–।–।–।–।–।–।–। ।–।–।–।–।–।
म–न–सि–ज–रु–ज–म–प–ह–र ल–घु–त–र–मि–ह ॥

**चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग् । ४ । ५२ ॥**

'अर्ध'ग्रहणम् ( पि० सू० ४।४९ ) अनुवर्तते । यत्र प्रथमेऽर्धे एकोनत्रिंश ( २९ )- लकारा भवन्ति, द्वितीये चार्धे एकत्रिंशत् ( ३१ ), तयोश्चान्ते द्वौ (।।) लकारावुन्मूल्य

१. 'अनङ्गक्रीडा' इति नामान्तरमस्य वृ० र०.

प्रत्येकमेको गुरुः (१) क्रियते, तत् 'चूलिका' नाम छन्दः। 'अन्ते ग्' इति विशेषोपादानसामर्थ्यादन्येषां लघुत्वमुक्तं भवति। तेनाद्ये सप्तविंशति (२७) र्लघवः, अन्ते गुरुरेको भवति। द्वितीयेऽप्येकोनत्रिंश (२९) ल्लघवः, अन्ते गुरुश्चैकः। तत्रोदाहरणम्—

१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४.
।-।-।-।-।-।-।-।-।-।　।-।-।-।,
र-ति-क-र-म-ल-य-म-रु-ति शु-भ-श्र-श- (?)
१५. १६. १७. १८. १९. २०. २१. २२. २३. २४. २५. २६. २७. २९.
।-।-।-।-।-।-।-।-।　।-।-।-।-ऽ,
म-भि-ह-त-हि-म-म-ह-सि म-धु-स-म-ये।
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६.
।-।-।-।　।-।-।　।-।-।-।　।-।-।-।।,
प्र-व-स-सि प-थि-क! वि-र-हि-त! क-थ-मि-ह तु
१७. १८. १९. २०. २१. २२. २३. २४. २५. २६. २७. २८. २९. ३१.
।-।-।-।-।-।-।-।-।-।-।-।-।-ऽ,
प-रि-ह-त-यु-व-ति-र-ति-च-प-ल-त-या॥

अन्यैः पुनरन्यथैवेदं सूत्रमधीयते—'चूलिकार्धमेकोनत्रिंशदन्ते ग्' इति। तेषामुभयोश्चाप्यर्धयोरेकोनत्रिंशन्मात्रा गुर्वन्ता भवन्ति। तत्रोदाहरणम्—

१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४.
।-।-।-।-।-।-।-।-।-।-।-।-।-।
घ-न-प-रि-म-ल-मि-ल-द्-लि-कु-ल-मु-ख-
१५. १६. १७. १८. १९. २०. २१. २२. २३. २४. २५. २६. २७. २९.
।-।-।-　।-।-।-।-।-।-।-।-।-।-ऽ,
रि-त-नि-खि-ल-क-म-ल-म-ल-य-प-व-ने।
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४.
।-।-।-।　।-।-।　।-।-।-।　।-।-।
ज-न-य-ति म-न-सि श-शि-मु-खि मु-द-म-
१५. १६. १७. १८. १९. २०. २१. २२. २३. २४. २५. २६. २७. २९.
।-।-।-।-।　।-।　।-।-।-।　।-।-ऽ.
ति-श-य-मि-ह म-म म-धु-र-य म-धु-ना॥

'अर्ध'ग्रहणादत्र पादव्यवस्था नास्ति[२]॥

इदानीं गणमात्राच्छन्दसां गुरुलघुसंख्यापरिज्ञानार्थमिदमाह—

## सा ग् येन न समा लां ग्ल इति। ४। ५३॥

सा गुरुसंख्या वेदितव्या। येन यावद्भिरक्षरैः। लां लघूनां मात्राणाम्। समाः समसंख्या ग्लो न स्युः। अपि तु न्यूनसंख्या एव। 'ग्लः' इत्यक्षराण्यभिधीयन्ते तेषां

१. **'अतिरुचिरा'** इति संज्ञान्तरं वृत्तरत्नाकरादिषु। २. अत एवैतत्प्रकरणं 'द्विपात्प्रकरण'मिति निर्दिष्टं **रत्नाकरे**।

गुरुलघुरूपत्वात्। अयमभिप्रायः—आर्यादिषु शास्त्रे यावत्यो मात्रा उपदिष्टास्तावन्त्यक्षराणि यथासंख्यं न पूर्यन्ते, सा तत्र गुरुसंख्या वेदितव्या। अवशिष्टा लघुसंख्या। तत्रायमुपयोगः—यदा कश्चित्पृच्छति, चत्वारिंशदक्षरायामार्यायां कति गुरवः संपद्यन्ते,? कति वा लघव? इति, तदा सप्तपञ्चाशन्मात्रोपदिष्टायामार्यायां मात्रासंख्यायां चत्वारिंशदक्षरसंख्या (४०) मपनीय तत्र येऽवशिष्यन्ते, तान् गुरूनुपदिशेत्। ते च सप्तदशैव (१७)। शेषांस्तु त्रयोविंशति (२३) लघुरूपानुपदिशेत्। तद्यथा—

१. २. ३. ४. ५–६. ७–८. ९–१०. ११–१२.
। – । – । – । – ऽ – ऽ – ऽ – ऽ,
स्त – न – यु – ग – म – श्रु – स्ना – तं
(१). (२). (३). (४). (५). (६). (७). (८).

१३. १४–१५, १६. १७. १८. १९–२०. २१. २२. २३. २४. २५–२६. २७–२८. २९–३०.
। – ऽ – । – । – । – ऽ – । । – । – । – ऽ – ऽ – ऽ,
स – मी – प – त – र – व – र्ति हृ – द् – य – शो – का – ग्नेः।
(९). (१०). (११). (१२). (१३). (१४). (१५). (१६). (१७). (१८). (१९). (२०). (२१).

३१. ३२. ३३. ३४. ३५–३६. ३७–३८. ३९–४०. ४१–४२.
। – । – । । – ऽ – ऽ – ऽ – ऽ
च – र – ति वि – मु – क्ता – हा – रं
(२२). (२३). (२४). (२५). (२६). (२७). (२८). (२९).

४३. ४४. ४५. ४६. ४७. ४८. ४९–५०. ५१. ५२–५३. ५४–५५. ५६–५७. मात्राङ्काः।
। – । – । – । । – । – ऽ । – ऽ ऽ – ऽ
व्र – त – मि – व भ – व – तो रि – पु – स्त्री – णाम्॥
(३०). (३१). (३२). (३३). (३४). (३५). ३६). (३७). (३८). (३९). (४०). अक्षराङ्काः।

(बाणभट्टस्य)

इति श्रीभट्टहलायुधविरचितायां पिङ्गलच्छन्दोवृत्तौ चतुर्थोऽध्यायः।

---

१. अस्याभिप्रायः स्फुटं प्रकाश्यते—पुरोदर्शितायामार्यायां कति गुरवो लघवश्च वर्तन्ते? इवि पृष्टे सति पूर्वं तावदार्यायां मात्रागणना विधेया। तन्मात्रासंख्यापिण्डीभूताङ्काश्च कुत्रचन पत्रादौ संस्थाप्याः। पुनस्तस्या एव सर्वेषामक्षराणां गणनां विधाय तदक्षरसंख्यापिण्डीभूताङ्का मात्रासंख्यापिण्डीभूताङ्कानां संमुखे संस्थाप्याः। ततो मात्रासंख्यापिण्डीभूताङ्केभ्योऽक्षरसंख्यापिण्डीभूताङ्कानपनयेत्। तत्र ये संख्याङ्का अवशिष्यन्ते, तावत्संख्याकास्तस्यामार्यायां गुरवो भवन्ति। पुनरक्षरसंख्याङ्कत एतदवशिष्टगुरुसंख्याङ्कानपनयेत्। तत्र यावन्तोऽङ्का अवशिष्यन्ते, तावन्तो लघवो जायन्ते। अनयैव रीत्या गणमात्राच्छन्दसां गुरुलघुज्ञानं भवति। तद्रीतिर्यथा—

मा० सं० ङ्कः अ० सं० ङ्कः गु० सं० ङ्कः अ० सं० ङ्कः गु० सं० ङ्कः ल० सं० ङ्कः
" ५७ – ४० = १७ " " ४० – १७ = २३ "

पञ्चमोऽध्यायः ।

## वृत्तम् । ५ । १ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामस्तद् 'वृत्तम्' वेदितव्यम् । तेन प्राक्तनं लौकिकं छन्दोजातं 'जातिः' इत्युच्यते । इत उत्तरं च 'वृत्तम्' । तथा चोक्तम्—

'पद्यं चतुष्पदी[1] तच्च वृत्तं जातिरिति द्विधा ।' ( का० द० १।११ )

गायत्र्यादौ छन्दसि वर्तत इति 'वृत्तम्' । तच्च स्थिरगुरुलघ्वक्षरविन्यासमिष्यते । पादेन संयोगात् 'पद्यम्' । यथा-आर्यादिच्छन्दःस्वपि पादव्यवस्था नास्तीति पादौ संयुक्तौ, वृत्ते पुनः पृथग्भवत इत्यर्थः । पादेन संयोगाभावात् । तथा चोक्तम्—

'एकदेशस्थिता जातिर्वृत्तं गुरुलघुस्थितम्' इति ॥

## सममर्धसमं विषमं च । ५ । २ ॥

समसर्वावयवत्वात् 'समम्' । यस्य चत्वारः पादा एकलक्षणयुक्तास्तत् 'समं' वृत्तम् । शेषं च संज्ञानुरूपमेव । तत्रार्धे समे यस्य तत् 'अर्धसमम्' सर्वावयवेभ्यः । अर्धाभ्यां च विगतं समं यस्य तद् 'विषमम्' । एवं त्रिप्रकारमपि वृत्तजातमुक्तम् ॥

## समं तावत्कृत्वः कृतमर्धसमम् । ५ । ३ ॥

'समम्' इति समवृत्तसंख्योच्यते । तयैव गुणितं 'तावत्कृत्वः कृतम्' उच्यते । एतदुक्तं भवति—समवृत्तसंख्यागुणिते समवृत्तसंख्यायाः पिण्डे या संख्या निष्पद्यते, तावत्संख्यमर्धसमं वेदितव्यम् । तत्र गायत्रे छन्दसि समवृत्तसंख्या चतुःषष्टि (६४) रष्टमाध्यायसिद्धा । तस्यां चतुःषष्टि (६४) संख्यागुणितायामर्धसमवृत्त संख्या संपद्यते—चत्वारि सहस्राणि, षण्णवतिश्च वृत्तानि । अङ्कतोऽपि ( ६४×६४ )=४०९६ ॥

## विषमं च । ५ । ४ ॥

अर्धसमं तावत्कृत्वः कृतं 'विषमं' भवति । एतदुक्तं भवति—अर्धसमवृत्तसंख्या (४०९६) अर्धसमवृत्तसंख्यया(४०९६) एव गुणिता विषमवृत्तसंख्या संपद्यते—एका कोटिः, सप्तषष्टिर्लक्षाणि, सप्तसप्ततिसहस्राणि, द्वे शते, षोडशोत्तरे । अङ्कतोऽपि (४०९६×४०९६)=१६७७७२१६ इति ॥

समसमार्धसमोपचितमर्धसमं विषमं च यथाक्रमं समोपचितं समार्धसमाभ्यां चोपचितं वेदितव्यम् ॥

## राश्यूनम् । ५ । ५ ॥

तद् विषमं वृत्तं (१६७७७२१६) अर्धसमं (४०९६) वा राश्यूनम् (१६७७७२१६

---

१. अत्र पादपर्यायः पदशब्दः । चतुर्णां पदानां समाहारश्चतुष्पदी । चतुष्पदीति पद्यलक्षणं प्रायिकत्वादुक्तम्, द्विपदीपञ्चपदीषट्पदीनामपि दृश्यमानत्वात्-इति **तरुणवाचस्पतिः ।**

−४०९६=१६७७३१२०) कर्तव्यम्। मूलराशिः (४०९६) समुदायात् (१६७७७२१६) अपनेतव्य इति। कोटिरेका, सप्तषष्टिर्लक्षाणि, त्रिसप्ततिसहस्राणि, विंशत्युत्तरं शतं शुद्धविषमवृत्तस्य संख्या। अङ्कतः १६७७३१२०। चत्वारि सहस्राणि, द्वात्रिंशच्चेति शुद्धार्धसमसंख्या। अङ्कतोऽपि−(४०९६−६४)=४०३२ उभयशेषोऽयं राश्यूनमिति॥

## ग्लिति समानी।५।६॥

गकार (ऽ) लकारा (।) भ्यां यद्वृत्तं समाप्यते, तत् 'समानी' नाम। 'पादस्यानुष्टुब्वक्त्रम्' (पि० सू० ५।९) इत्यतः सूत्रात् सिंहावलोकितन्यायेनानुष्टुब्ग्रहणमनुवर्तते। तेनाष्टाक्षरः पादो यावद्भिर्गकारलकारैः पूर्यते, तावतामेव ग्रहणम्। तत्रोदाहरणम्—

ऽ−।−ऽ−। ऽ−।−ऽ−। ऽ−।−ऽ−।−ऽ। ऽ−।
वा−स−वो−ऽपि वि−क्र−मे−ण य−स्स−मा−न−तां न या−ति।
ऽ−। ऽ−।−ऽ−।−ऽ−। ऽ−। ऽ−।−ऽ।−ऽ−।
त−स्य व−ल्ल−भे−श्व−र−स्य के−न तु−ल्य−ता क्रि−ये−त?॥

अपि च।

ऽ−।−ऽ।−ऽ−।−ऽ−। ऽ−।−ऽ−।−ऽ−।−ऽ−।
ओं न−मो ज−ना−र्द−ना−य पा−प−बं−ध−मो−च−ना−य।
ऽ−।−ऽ−।−ऽ−।−ऽ−। ऽ−।−ऽ−।−ऽ−।−ऽ−।
दु−ष्ट−दै−त्य−म−र्द−ना−य पु−ण्ड−री−क−लो−च−ना−य॥

## ल्गिति प्रमाणी[2]।५।७॥

लकार (।) गकारा (ऽ) भ्यां यद्वृत्तं समाप्यते तत् 'प्रमाणी' नाम। 'जरौ लगौ' इत्यपरे। तत्रोदाहरणम्—

।−ऽ−।−ऽ−।−ऽ−।−ऽ ।−ऽ−।−ऽ।−ऽ−।−ऽ
स−रो−ज−यो−नि−र−म्ब−रे र−सा−त−ले त−था−च्यु−तः।
।−ऽ।−ऽ−।−ऽ−।−ऽ ।−ऽ। ऽ।−ऽ−।−ऽ
त−व प्र−मा−ण−मी−क्षि−तुं क्ष−मौ न तौ ब−भू−व−तुः॥

## वितानमन्यत्।५।८॥

आभ्यां समानी-प्रमाणीभ्यामन्यदष्टाक्षरपादं छन्दो 'वितानं' नाम। तत्रोदाहरणम्—

ऽ−ऽ।−। ऽ−ऽ।−। ऽ−ऽ।−।−ऽऽ।−।
तृ−ष्णां त्य−ज ध−र्मं भ−ज पा−पे हृ−द−यं मा कु−रु।

---

१. 'हारगंधबंधुरेण दिट्ठअट्ठअक्खरेण। बारहाहि मत्त जाण मल्लिआसुछंदमाण॥' इति प्रा० पि० सू० २।७१ इत्यनुसारेण मल्लिकाख्यं नामान्तरम्। नव्यमतेऽस्य सूत्रस्य गद्यपरत्वमाह **व्यङ्कटाचलसूरिः**। २. 'लहु गुरू णिरंतरा **पमाणि** अट्ठअक्खरा।' इति प्रा० पि० सू० २।६९. 'द्वितुर्यषष्ठमष्टमं गुरु प्रयोजितं यदा। तदा निवेदयन्ति तां बुधा **नगस्वरूपिणीम्**॥' इति श्रुतबोधानुसारेण नगस्वरूपिणीत्यपि नामान्तरम्। ३. 'नाराचम्' इति कलिकातामुद्रिते. ४. छन्दोमञ्जरीकाराः. ५. प्राकृतपिङ्गलानुसारेणात्र दोहाभेदान्तर्गतकरभच्छन्दः।

ऽ–ऽ ।–। ऽ– ऽ –।–। ऽ–ऽ–।–।–ऽ ऽ–।–।
इ–ष्टा य–दि ल–क्ष्मी–स्त–व शि–ष्टा–न–नि–शं सं–श्र–य ॥

द्वितीयं च—

।–।–ऽ ऽ–। ।–ऽ–ऽ ।–।–ऽ–ऽ–।–।–ऽ–ऽ
हृ–द–यं य–स्य वि–शा–लं ग–ग–ना–भो–ग–स–मा–नम् ।
।–।–ऽ–ऽ ।–।–ऽ–ऽ ।–।–ऽ–ऽ–। ।–ऽ–ऽ
ल–भ–ते–ऽसौ म–णि–चि–त्रं नृ–प–ति–र्मू–र्ध्नि वि–ता–नम् ॥

अन्यच्च—

ऽ–ऽ–।–ऽ–।–ऽ–।–ऽ ऽ–ऽ–।–ऽ–।–ऽ–।–ऽ
कं–क्का–ल–मा–ल–भा–रि–णं कं–द–र्प–द–र्प–हा–रि–णम् ।
ऽ–ऽ–।–ऽ–।–ऽ–।–ऽ ऽ–ऽ–।–ऽ ।–ऽ–।–ऽ
सं–सा–र–ब–न्ध–मो–च–नं व–न्दा–म–हे त्रि–लो–च–नम् ॥

अपि च—

ऽ–ऽ ।–ऽ–। ऽ–।–ऽ ऽ–ऽ–।–ऽ–।–ऽ–।–ऽ
त–स्याः स्म–रा–मि सु–न्द–रं च–न्द्रो–प–मा–न–मा–न–नम् ।
ऽ–ऽ–।–ऽ–।–ऽ–।–ऽ ऽ–ऽ–।–ऽ–।–ऽ–।–ऽ
कं–द–र्प–चा–प–भ–ङ्गु–र– भ्रू–वि–भ्र–मो–प–शो–भि–तम् ॥

[ अपि च ]—

ऽ–।–।–ऽ । ।–ऽ–ऽ ऽ–।–।–ऽ–। ।–ऽ–ऽ
अं–न्य–द–तो हि वि–ता–नं श्वे–त–प–टे–न य–दु–क्तम् ।
ऽ–।–।–ऽ–। । ऽ–ऽ ऽ–। ।–ऽ–।–।–ऽ–ऽ
चि–त्र–प–दा–पि च भौ गौ ते–न ग–ता–र्थ–मि–वै–तत् ॥

किं च 'वितानमन्यत्' इति ब्रुवन् सूत्रकारो वितानस्यानेकप्रकारतां दर्शयति । अन्यथा 'वितानं भौ गौ' इत्येव ब्रूयात् ॥

## पादस्यानुष्टुब्वक्त्रम्[3] । ५ । ९ ॥

'पादस्य' इत्ययमधिकार आसप्तमाध्यायपरिसमाप्तेः । 'अनुष्टुब्वक्त्रम्' इति च प्राक् पदचतुरूर्ध्वात् ( वि० सू० ५।२० ) अधिकृतं वेदितव्यम् ॥

---

१. 'नाराचकं तरौ लगौ' इति छन्दःकौस्तुभानुसारेणात्र नाराचकं छन्दः । २. 'चित्रपदा भौ गौ' इति (६।५) सूत्रानुसारेणात्र चित्रपदाख्यं छन्दः । ३. यद्यपि सभेदमिदमुत्तरत्र षष्ठेऽध्यायेऽनुष्टुबधिकार एव वक्तुमुचितम्; तथापि यथा मात्राछन्दसि लघुगुरुनियमो नास्ति, तथात्रापीति पृथगुक्तम् इति केचित् ।

**न प्रथमात्स्नौ । ५ । १० ॥**

प्रतिषेधार्थमिदं सूत्रम् । अत्र वक्त्रजातौ पादस्य प्रथमादक्षरादूर्ध्वं सगण-(॥ऽ) नगणौ (।।।) न कर्तव्यौ ॥

**द्वितीयचतुर्थयो रश्च । ५ । ११ ॥**

द्वितीयचतुर्थयोश्च पादयोः प्रथमादूर्ध्वं रेफो[1] (ऽ।ऽ) न कर्तव्य इत्युपदेशः ॥

**वान्यत् । ५ । १२ ॥**

[2]अन्येषां षण्णां गणानां मध्ये यत्किंचित् गणान्तरं प्रथमान्तरं कर्तव्यम् ॥

**य[3] चतुर्थात् । ५ । १३ ॥**

'य' इति लुप्तविभक्तिको निर्देशः । पादस्य चतुर्थादक्षरादूर्ध्वं यगणः (।ऽऽ) प्रयोक्तव्यः । सर्वेषामुदाहरणानि—

ल० यगणः यगणः ल० ल० यगणः यगणः गु०
। — ।·ऽ·ऽ — ।·ऽ·ऽ — ।— । — ।·ऽ·ऽ — ।·ऽ·ऽ — ऽ
नै[4](१)वधारा(४)म्बुसंसि–क्त– व(१)सुधाग(४)न्धिनिःश्वा–सम् ।
गु० जगणः यगणः गु० ल० तगणः यगणः गु०
ऽ — ।·ऽ·। — ।·ऽ·ऽ — ऽ । — ऽ· ऽ·। — ।·ऽ· ऽ — ऽ
किं(१)चिदुन्न(४)तघोणा–ग्रं म(१)ही काम(४)यते व–क्त्रम् ॥

अन्यैरप्युक्तम्—

गु० भगणः यगणः ल० ल० मगणः यगणः गु०
ऽ — ऽ·।·। — ।·ऽ·ऽ — । । — ऽ· ऽ· ऽ — ।·ऽ·ऽ — ऽ
नी[5](१)लोत्पल(४)वनेष्व–द्य च(१)रन्त्यश्वा(४)रुसंरा–वाः ।
गु० मगणः यगणः गु० ल० मगणः यगणः गु०
ऽ — ऽ · ऽ·ऽ — ।·ऽ·ऽ — ऽ । — ऽ·ऽ·ऽ – ।· ऽ·ऽ· — ऽ
रा(१)माः कौशे(२)यसंवी –ताः प्र(१)नृत्यन्ती–व(४)काद–म्बाः ॥

---

१. 'रेफोऽपि' इति क. का. मु. पुस्तके. २. कलिकातामुद्रिते तु 'सगण(।।ऽ), नगणाभ्या(।।।)मन्यन्मगणा(ऽऽऽ)दित्रिकषङ्कमध्ये यत्किंचिन्निकान्तरं वा कर्तव्यम् ॥' ३. यश्चतुर्थात्–इत्येव वैदिकपाठः । 'अब्धेर्योऽनुष्टुभि ख्यातम्' इति प्रा० पि० सू० २।३३२. ४. पि० सू० ५।१० सूत्रस्योदाहरणम्. ५. पि० सू० ५।१३ इत्यस्योदाहरणम् । श्लोकोऽयं शबरस्वामिना मीमांसाभाष्ये ( १।१।२४ ) उदाहृतः । तत्र '…चरन्तः…नीलकौशेय…प्रणश्यन्तीव…' इति पाठः ।

तथा—

गु० रगणः यगणः गु० गु० भगणः यगणः गु०

S — S·।·S — ।·S·S—S S — S·।·।—।·S·S—S

दु(१)र्भाषिते(४)ऽपि सौभा-ग्यं प्रा(१)यः प्रकु(४)रुते प्री-तिः ।

गु० रगणः यगणः ल० गु० मगणः यगणः गु०

S — S·।·S — ।·S·S — । S — S·S·S — ।·S·S—S

मा(१)तुर्मनो(४)हरन्त्ये -व दौ(१)र्ललित्यो(४)क्तिभिर्बा-लाः ॥

इत्यादि ॥

## पथ्या युजो ज् । ५ । १४ ॥

'चतुर्थात्' (पि० सू० ५।१३) इति वर्तते । अत्र वक्त्रे युजः (२,४) पादस्य चतुर्थादक्षरादूर्ध्वं जगणः (।ऽ।) प्रयुज्यते, तद्वक्त्रं 'पथ्या' नाम । 'य' (।ऽऽ) स्यापवादः । अत्रोदाहरणम्—

गु० तगणः यगणः ल० गु० मगणः जगणः ल०

S — S· S·। — ।·S·S—। S — S· S·S — ।·S·।—।

नि(१)त्यं नीति(४)निषण्ण-स्य रा(१)ज्ञो राष्ट्रं(४)न सीद-ति ।

ल० यगणः यगणः गु० गु० मगणः जगणः गु०

। — ।·S·S — ।·S·S—S S — S·S·S — ।·S·।—S

न(१)हि पथ्या(४)शिनः का-ये जा(१)यन्ते व्या(४)धिवेद नाः ॥

## विपरीतैकीयम् । ५ । १५ ॥

उक्तलक्षणाद्विपरीता 'पथ्या' भवतीत्येकीयं मतम्. अयुक्पादे चतुर्थादक्षरात् परतो जकारः कर्तव्यः, युक्पादे य एवावतिष्ठते । अत्रोदाहरणम्—

गु० यगणः जगणः गु० गु० मगणः यगणः गु०

S — ।·S·S — ।·S·।—S· S — S· S· S — ।·S· S — S

भ(१)र्तुराज्ञा(४)नुवर्ति- नी या(१)स्त्री स्यात्सा(४) गृहे ल-क्ष्मीः ।

गु० यगणः जगणः गु० ल० यगणः यगणः गु०

S — ।·S·S — ।·S·।—S । — ।·S·S — ।·S·S — S

स्व(१)प्रभुत्वा(४)भिमानि-नी वि(१)परीता(४)परित्या-ज्या ॥

१. पि० सू० ५।११ इत्यस्योदाहरणम्. 'दुर्भाविते' इति लि. पुस्तके । २. 'युजोश्चतुर्थतो जेन **पथ्यावक्त्रं** प्रकीर्तितम्' इति प्रा० पि० सू० २।३२४. 'पथ्यायुजो जः' इति लि. पुस्तके. ३. 'ओजयोर्जेन वारिधेस्तदेव **विपरीता**दि' इति छन्दःकौस्तुभे. ४. कलिकातामुद्रिते तु—'उक्तलक्षणाद्विपरीतलक्षणा एकीयमते 'पथ्या' भवति । यथा—'.

## चपलायुजो न् । ५ । १६ ॥

अयुक् (१,३) पादस्य यदा चतुर्थादक्षरादूर्ध्वं नकारो (।।।) भवति युक्-(२,४) पादे य (।ऽऽ) एवावतिष्ठते, तदा 'चपला' नाम सानुष्टुब् । तत्रोदाहरणम्—

गु० यगणः नगणः गु० गु० यगणः यगणः गु०

ऽ — ।·ऽ·ऽ — ।·।·। — ऽ    ऽ — ।·ऽ·ऽ — ।·ऽ·ऽ — ऽ

क्षी(१)यमाणा(४)प्रदश–ना   व(१)क्रनिर्मां(४)सनासा–ग्रा ।

गु० यगणः नगणः गु० ल० यगणः यगणः गु०

ऽ — ।·ऽ·ऽ — ।·।·। — ऽ    । — ।·ऽ·ऽ — ।·ऽ·ऽ — ऽ

क(१)न्यका वा(४)क्यचप–ला   ल(१)भते धू(४)र्तसौभा–ग्यम् ॥

## विपुला युग्लः सप्तमः । ५ । १७ ॥

अधिकारोऽयम् । 'य चतुर्थात्' ( पि० सू० ५।१३ ) इत्यनेन सर्वत्र यकारे (।ऽऽ) कृते यदा युक् (२,४) पादे सप्तमो वर्णो लघुर्भवति, तदा 'विपुला' नाम सानुष्टुब् ॥

ननु पथ्यालक्षणेऽन्तर्भूतत्वात् पुनरुक्तमेतत् । नैवम्, विपुलावर्गस्येदानीमारभ्यमाणत्वात्तद्विनानुपपत्तेः । युक् (२,४) पादे सप्तमेन लघुनावश्यमेव भवितव्यम् । प्रथमतृतीययोश्चैतावता यकारस्यापवादः । तथा च वक्ष्यति—'सैर्वतः सैतवस्य' ( पि० सू० ५।१८ ) इत्यादिना । पथ्यायां तु यकारं (।ऽऽ) एवावतिष्ठते ॥

## सैर्वतः सैतवस्य । ५ । १८ ॥

सैतवस्याचार्यस्य मतेन युक् (२,४)पादे अयुक् (१,३) पादे च सप्तमो लकार (।) एव कर्तव्यः । अत्रोदाहरणम्—

गु० जगणः जगणः गु० गु० भगणः जगणः गु०

ऽ — ।·ऽ·। — ।·ऽ·। — ऽ    ऽ — ऽ·।·। — ।·ऽ·। — ऽ

सै(१)तवेन(४)पथार्ण(७)वं   ती(१)र्णो दश(४)रथात्म(७)जः ।

गु० भगणः जगणः गु० ल० भगणः जगणः गु०

ऽ — ऽ·।·। — ।·ऽ·। — ऽ    । — ऽ·ऽ· ऽ — ।·ऽ·। — ऽ

र(१)क्षः क्षय(४)करीं पु(७)नः   प्र(१)तिज्ञां स्वे(४)न बाहु(७)ना ॥

## भ्रौ न्तौ च । ५ । १९ ॥

'सर्वतः सैतवस्य' ( पि० सू० ५।१८ ) इति निवृत्तम् । 'चपलायुजो न्' ( पि० सू० ५।१६ ) इत्येतस्मादयुग्ग्रहणमनुवर्तते । 'विपुला युग्लः सप्तमः' (पि० सू० ५।१७) इति

१. 'चपलावक्त्रमयुजोर्नकारश्चेत्पयोराशेः' इति छन्दःकौस्तुभे. २. 'यस्यां तसप्तमो युग्मे सा युग्मविपुला' इति छन्दःकौस्तुभे युग्मविपुलेति नामान्तरम्. ३. लिखितपुस्तके सूत्रमत्रैतन्नास्ति. ४. 'सैतवस्याखिलेष्वपि' इति छन्दःकौस्तुभे.

सर्वमनुवर्तनीयम् । अयुक् (१,३) पादे यदा चतुर्थादक्षरात्परतो यकारं (।ऽऽ) बाधित्वा भकार (ऽ।।) रेफ (ऽ।ऽ) नकार (।।।) तकारा (ऽऽ।) विकल्पेन भवन्ति, तदासौ 'विपुला' नाम । तत्र भकारेण विपुलोदाहरणम्—

ल० रगणः भगणः गु० ल० मगणः जगणः गु०
। — ऽ·।·ऽ — ऽ·।·। — ऽ   । — ऽ·ऽ·ऽ — ।·ऽ·। — ऽ
इ(१)यं सखे(४)चन्द्रमु(७)खी   स्मि(१)तज्योत्स्ना(४)च मानि(७)नी ।

गु० रगणः भगणः गु० गु० जगणः जगणः गु०
ऽ — ऽ·।·ऽ — ऽ·।·। — ऽ   ऽ — ।·ऽ·। — ।·ऽ·। — ऽ
इ(१)न्दीवरा(४)क्षी हृद(७)यं   द(१)न्दहीति(४)तथापि(७)मे ॥

'अयुजः' ( पि० सू० ५।१६ ) इति जातिपक्षे द्वयोरपि पादयोर्ग्रहणम् । व्यक्तिपक्षे पुनरेकस्य । एकपक्षे पुनः प्रथमस्य तृतीयस्य वा । तथा च महाकवीनां प्रयोगाः—

ल० रगणः भगणः गु० गु० यगणः जगणः गु०
। — ऽ·।·ऽ — ऽ·।·। — ऽ   ऽ — ।·ऽ·ऽ — ।·ऽ·। — ऽ
व(१)टे वटे(४)वैश्रव(७)णैः   च(१)त्वरे च(४)त्वरे शि(७)वैः ।

गु० यगणः यगणः गु० गु० भगणः जगणः गु०
ऽ — ।·ऽ·ऽ — ।·ऽ·ऽ — ऽ   ऽ — ऽ·।·। — ।·ऽ·। — ऽ
प(१)र्वते प(४)र्वते रा(७)मैः   स(१)र्वत्र म(४)धुसूद(७)नैः[2] ॥

( अग्निपु० ३०५।१४ )

गु० भगणः यगणः गु० गु० यगणः जगणः गु०
ऽ — ऽ·।·। — ।·ऽ·ऽ — ऽ   ऽ — ।·ऽ·ऽ — ।·ऽ·। — ऽ
दे(१)वः स ज(४)यति श्री(७)मान्   द(१)ण्डधारो[3](४)महाम(७)तिः ।

गु० रगणः भगणः गु० गु० जगणः जगणः ल०
ऽ — ऽ·।·ऽ — ऽ·।·। — ऽ   ऽ — ।·ऽ·। — ।·ऽ·। — ।
य(१)स्य प्रसा(४)दाद्भुव(७)नं   शा(१)श्वते प(४)थि तिष्ठ(७)ति ॥

ल० रगणः भगणः गु० ल० तगणः जगणः गु०
। — ऽ·।·ऽ — ऽ·।·। — ऽ   । — ऽ·ऽ·। — ।·ऽ·। — ऽ
उ(१)पस्थितं(४)प्राञ्जलि(७)ना   वि(१)नीतेन(४)गरुत्म(७)ता ।

---

१. 'भेनाऽब्धितो भाद्विपुला' इति छन्दःकौस्तुभे. २. सूले त्वेतद् द्वितीयान्तं दृश्यते, तत्र 'संस्मरन् भुक्तिमुक्तिभाक् ।' (३०५।१५) इत्युत्तरेण सम्बन्धः । ३. 'दण्डधारी महीपतिः' इति क. पुस्तके.

गु० रगणः मगणः गु० गु० तगणः जगणः गु०

ऽ — ऽ·।·ऽ — ऽ·।·। — ऽ ऽ — ऽ·ऽ·। — ।·ऽ·। — ऽ

ना(१)रायणं(४)स्तौमि स(७)दा भ(१)क्तानां भ(४)यनाश(७)नम् ॥

इत्यादि ॥

इदानीं रेफ[1](ऽ।ऽ)विपुलोदाहरणम्—

गु० रगणः रगणः गु० ल० भगणः जगणः गु०

ऽ — ऽ·।·ऽ — ऽ·।·ऽ — ऽ । — ऽ·।·। — ।·ऽ·। — ऽ

ल(१)क्ष्मीपतिं(४)लोकना(७)थं र(१)थाङ्गध(४)रमच्यु[2](७)तम् ।

गु० रगणः रगणः गु० ल० जगणः जगणः गु०

ऽ — ऽ·।·ऽ — ऽ·।·ऽ — ऽ । — ।·ऽ·। — ।·ऽ·। — ऽ

य(१)ज्ञेश्वरं(४)शार्ङ्गपा(७)णिं प्र(१)णमामि(४)त्रयीत(७)नुम् ॥

व्यक्तिपक्षे प्रथमे पादे—

ल० रगणः रगणः गु० गु० मगणः जगणः गु०

। — ऽ·।·ऽ — ऽ·।·ऽ — ऽ ऽ — ऽ·ऽ·ऽ — ।·ऽ·। — ऽ

म(१)हाकविं(४)कालिदा(७)सं व(१)न्दे वाग्दे(४)वतां गु(७)रुम् ।

गु० मगणः यगणः ल० गु० जगणः जगणः गु०

ऽ — ऽ·ऽ·ऽ — ।·ऽ·ऽ — । ऽ — ।·ऽ·। — ।·ऽ·। — ऽ

य(१)ज्ज्ञाने वि(४)श्वमाभा(७)ति द(१)र्पणे प्र(४)तिबिम्ब(७)वत् ॥

तृतीये पादे—

गु० यगणः सगणः गु० गु० तगणः जगणः गु०

ऽ — ।·ऽ·ऽ — ।·।·ऽ — ऽ ऽ — ऽ·ऽ·। — ।·ऽ·। — ऽ

का(१)मिनीभिः(४)सह प्री(७)तिः क(१)स्मै नाम(४)न रोच(७)ते ।

ल० यगणः रगणः ल० गु० जगणः जगणः गु०

। — ।·ऽ·ऽ — ऽ·।·ऽ — । ऽ — ।·ऽ·। — ।·ऽ·। — ऽ

य(१)दि न स्या(४)द्वारिवी(७)चि च(१)ञ्चलं ह(४)तजीवि(७)तम् ॥

इदानीं नकार[3](।।।)विपुलोदाहरणम्—

गु० रगणः नगणः गु० गु० यगणः जगणः गु०

ऽ — ऽ·।·ऽ — ।·।·। — ऽ ऽ — ।·ऽ·ऽ — ।·ऽ·। — ऽ

य(१)स्या विभा(४)ति विपु(७)ला म(१)न्मथस्था(४)नपिण्ड(७)का ।

---

१. 'इत्थमन्या रश्चतुर्थात्' इति छ. कौ०. २. 'ईश्वरम्' इति क. पुस्तके. ३. 'नोऽम्बुधेश्चेन्नविपुला' इति छन्दःकौस्तुभकारः.

गु० यगणः नगणः गु० गु० तगणः जगणः गु०

ऽ — ।·ऽ·ऽ — ।·।·। — ऽ   ऽ — ऽ · ऽ· । — ।·ऽ·। — ऽ

या(१)चतुःष(४)ष्टिचतु(७)रा   सा(१)स्त्री स्यान्नृ(४)पवल्ल(७)भा ॥

तथैव **भारविः**—

ल० रगणः नगणः गु० ल० तगणः जगणः गु०

। — ऽ·।·ऽ — ।·।·। — ऽ   । — ऽ·ऽ· । — ।·ऽ· । — ऽ

युं(१)युत्सुने(४)व कव(७)चं   कि(१)मामुक्त(४)मिदं त्व(७)या ? ।

ल० रगणः नगणः गु० गु० जगणः जगणः गु०

। — ऽ·।· ऽ — ।· ।·। — ऽ   ऽ — ।·ऽ·। — ।·ऽ·।·— ऽ

त(१)पस्विनो(४)हि वस(७)ने[3]   के(१)वलाजि(४)नवल्क(७)ले ॥

(कि० ११।१५)

व्यक्तिपक्षे **कालिदासः**—

ल० मगणः नगणः गु० गु० मगणः जगणः गु०

। — ऽ·ऽ·ऽ — ।· ।·। — ऽ   ऽ — ऽ·ऽ· ऽ — ।·ऽ·। — ऽ

अं(१)नाकृष्ट(४)स्य विष(७)यैर्   वि(१)द्यानां पा(४)रदृश्व(७)नः ।

गु० जगणः यगणः गु० गु० तगणः जगणः गु०

ऽ — ।· ऽ·। — ।·ऽ·ऽ — ऽ   ऽ — ऽ·ऽ·। — ।·ऽ· । — ऽ

त(१)स्य धर्म(४)रतेरा(७)सीद्   वृ(१)द्धत्वं ज(४)रसा वि(७)ना ॥

(र० वं० १।२३)

तथा च—

ल० जगणः यगणः गु० गु० तगणः जगणः गु०

। — ।·ऽ·। — ।·ऽ·ऽ — ऽ   ऽ — ऽ·ऽ·। — ।·ऽ·। — ऽ

तें(१)व मन्त्र(४)कृतो म(७)न्त्रैर्   दू(१)रात्संश(४)मितारि(७)भिः ।

गु० मगणः नगणः गु० गु० जगणः जगणः गु०

ऽ — ऽ·ऽ·ऽ — ।· ।·। — ऽ   ऽ — ।·ऽ·। — ।·ऽ·। — ऽ

प्र(१)त्यादिश्य(४)न्त इव(७)मे   दृ(१)ष्टलक्ष्य(४)भिदः श(७)राः ॥

(र० वं० १।६१)

---

१. 'चतुःषष्टिरङ्गविद्याः कामसूत्रस्यावयविन्यः' **वात्स्यायनसूत्रे** (१।३।१६) द्रष्टव्याः । २. नकार**विपुलो**दाहरणानि । ३. 'वसते' इति मूले ।

इदानीं तकार (ऽऽ।) विपुलोदाहरणम्—

जातिपक्षे—

गु० मगणः तगणः गु० ल० भगणः जगणः गु०

ऽ — ऽ·ऽ·ऽ — ऽ·ऽ·। — ऽ । — ऽ·।·। — ।·ऽ·। — ऽ

व(१)न्दे देवं(४)सोमेश्व(७)रं ज(१)टामुकु(४)टमण्डि(७)तम् ।

गु० भगणः तगणः गु० ल० भगणः भगणः गु०

ऽ — ऽ·।·। — ऽ·ऽ·। — ऽ । — ऽ·।·। — ।·ऽ·। — ऽ

ख(१)ट्वाङ्गध(४)रं चन्द्र(७)मः शि(१)खामणि(४)विभूषि(७)तम् ॥

व्यक्तिपक्षे—

गु० रगणः तगणः गु० गु० जगणः जगणः गु०

ऽ — ऽ·।·ऽ — ऽ·ऽ·। — ऽ ऽ — ।·ऽ·। — ।·ऽ·। — ऽ

व(१)न्दे कविं(४)श्रीभार(७)विं लो(१)कसंत(४)मसच्छि(७)दम् ।

ल० मगणः यगणः ल० गु० तगणः जगणः गु०

। — ऽ·ऽ·ऽ — ।·ऽ·ऽ — । ऽ — ऽ·ऽ·। — ।·ऽ·। — ऽ

दि(१)वा दीपा(४)इवाभा(७)न्ति य(१)स्याग्रे क(४)वयोऽप(७)रे ॥

तथान्येषामपि प्रयोगाः—

गु० जगणः यगणः गु० गु० यगणः जगणः गु०

ऽ — ।·ऽ·। — ।·ऽ·ऽ — ऽ ऽ — ।·ऽ·ऽ — ।·ऽ·। — ऽ

लो(१)कव्यत्य(४)तिपत्त(७)व्यो लौ(१)किकोऽर्थः(४)परीक्ष(७)कैः ।

गु० भगणः तगणः ल० ल० यगणः जगणः गु०

ऽ — ऽ·।·। — ऽ·ऽ·। — । । — ।·ऽ·ऽ — ।·ऽ·। — ऽ

लो(१)कव्यव(४)हारं प्र(७)ति स(१)दृशौ बा(४)लपण्डि(७)तौ ॥

इदानीं चकाराकृष्टं मकार (ऽऽऽ) विपुलोदाहरणम्—

गु० रगणः मगणः गु० गु० यगणः जगणः गु०

ऽ — ऽ·।·ऽ — ऽ·ऽ·ऽ — ऽ ऽ — ।·ऽ·ऽ — ।·ऽ·। — ऽ

स(१)र्वातिरि(४)क्तं लाव(७)ण्यं बि(१)भ्रती चा(४)रुविभ्र(७)मा ।

गु० रगणः मगणः ल० गु० मगणः जगणः गु०

ऽ — ऽ·।·ऽ — ऽ·ऽ·ऽ — । ऽ — ऽ·ऽ·ऽ — ।·ऽ·। — ऽ

स्त्री(१)लोकसृ(४)ष्टिस्त्वन्यै(७)व निः(१)सामान्य(४)स्य वेध(७)सः ॥

१. 'शंकरं चन्द्ररेखाशिवाननम्' इति लि. पुस्तके। २. एते विपुलाभेदाश्छन्दःकौस्तुभादौ नोपलभ्यन्ते।

व्यक्तिपक्षे श्रीकालिदासः—

ल० रगणः मगणः गु० ल० यगणः जगणः गु०

I — S · I · S — S · S · S — S I — I · S · S — I · S · I — S

म(१)नोभिरा(४)माः शृण्व(७)न्तौ र(१)थनेमि(४)स्वनोन्मु(७)खैः ।

गु० यगणः यगणः गु० ल० मगणः जगणः गु०

S — I · S · S — I · S · S — S I — S · S · S — I · S · I — S

ष(१)ड्जसंवा(४)दिनीः के(७)का द्वि(१)धा भिन्नाः(४)शिखण्डि(७)भिः ॥

( र० वं० १।३९ )

ल० रगणः मगणः गु० गु० तगणः जगणः गु०

I — S · I · S — S · S · S — S S — S · S · I — I · S · I — S

अ(१)थ प्रदो(४)षे दोष(७)ज्ञः सं(१)वेशाय(४)विशांप(७)तिम् ।

गु० तगणः यगणः गु० ल० यगणः जगणः गु०

S — S · S · I — I · S · S — S I — I · S · S — I · S · I — S

सू(१)नुः सूनृ(४)तवाक्स्र(७)ष्टु—र्वि(१)ससर्जो(४)र्जितश्रि(७)यम् ॥

( र० वं० १।९३ )

तृतीयपादे—

ल० रगणः यगणः गु० गु० भगणः जगणः गु०

I — S · I · S — I · S · S — S S — S · I · I — I · S · I — S

अ(१)दूरव(४)र्तिनीं सि(७)द्धिं रा(१)जन्विग(४)णयात्म(७)नः ।

ल० रगणः मगणः गु० गु० जगणः जगणः गु०

I — S · I · S — S · S · S — S S — I · S · I — I · S · I — S

उ(१)पस्थिते(४)यं कल्या(७)णी ना(१)म्नि कीर्ति(४)त एव(७)यत् ॥

( र० वं० १।८७ )

गु० मगणः यगणः गु० गु० मगणः जगणः गु०

S — S · S · S — I · S · S — S S — S · S · S — I · S · I — S

श्ला(१)घ्यस्त्यागो(४)ऽपि वैदे(७)ह्याः प(१)त्युः प्राग्वं(४)शवासि(७)नः ।

ल० रगणः मगणः गु० गु० यगणः जगणः गु०

I — S · I · S — S · S · S — S S — I · S · S — I · S · I — S

अ(१)नन्यजा(४)नेस्तस्या[1](७)सीत् सै(१)व जाया(४)हिरण्म(७)यी ॥

( र० वं० १५।६१ )

---

१. 'अनन्यजानेर्यस्यासीत्' इति लि. पुस्तके । 'अनन्यजानेः सैवासीद् यस्माज्जाया' इति मुद्रिते रघुवंशे ।

सैकारेणा(॥ऽ)पि क्वचिद्विपुला दृश्यते । यथा—

ल० भगणः यगणः गु० ल० तगणः जगणः गु०

। — ऽ·।·। — ।·ऽ·ऽ — ऽ  । — ऽ·ऽ·। — ।·ऽ·। — ऽ

जि(१)ते न ल(४)भते ल(७)क्ष्मीं  मृ(१)तेनापि(४)सुराङ्ग(७)नाः ।

ल० यगणः सगणः गु० गु० तगणः जगणः गु०

। — ।·ऽ·ऽ — ।·।·ऽ — ऽ  ऽ — ऽ·ऽ·। — ।·ऽ·। — ऽ

क्ष(१)णविध्वं(४)सिनि का(७)ये  का(१)चिन्ता म(४)रणे र(७)णे ? ॥[२]

(परा० स्मृ० ३।३८)

संकीर्णाश्च विपुलाप्रकारा दृश्यन्ते । तथा च भामहेनोक्तम्—

ल० मगणः नगणः गु० ल० यगणः जगणः गु०

। — ऽ·ऽ·ऽ — ।·।·। — ऽ  । — ।·ऽ·ऽ — ।·ऽ·। — ऽ

क्व(१)चित्काले(४)प्रसर(७)ता  क्व(१)चिदाप(४)त्य निम्न(७)ता ।

ल० रगणः भगणः गु० ल० मगणः जगणः गु०

। — ऽ·।·ऽ — ऽ·।·। — ऽ  । — ऽ·ऽ·ऽ — ।·ऽ·। — ऽ

शु(१)नेव सा(४)रङ्गकु(७)लं  त्व(१)या भिन्नं(४)द्विषां ब(७)लम् ॥

(का० लं० २।५४)

इत्यादयो विपुलाविकल्पाः संकीर्णाश्च कोटिशः[३] काव्येषु दृश्यन्ते । सर्वासां विपुलानां चतुर्थो वर्णः प्रायेण गुरुर्भवतीत्याम्नायः ॥

---

अतः परं विषमवृत्तान्याह—

## प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्ध्वम्[४] । ५ । २० ॥

चतुर्णामक्षराणां वृद्धिश्चतुर्वृद्धिः । अनुष्टुभः पादादूर्ध्वं प्रतिपादं चतुरक्षरवृद्ध्या यद्वृत्तं निष्पद्यते, तत् 'पदचतुरूर्ध्वं' नाम । तत्रोदाहरणम्—

१. २. ३. ४. ५. ६. ७. ८.

त–स्याः क–टा–क्ष–वि–क्षे–पैः

१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२.

कं–म्पि–त–त–नु–कु–टि–लै–र–ति–दी–र्घैः ।

---

१. 'यकारेण' इति लि. पुस्तके । एते विपुलाभेदाश्छन्दःकौस्तुभादौ नोपलभ्यन्ते ।

२. 'क्षणध्वंसिनि कायेऽस्मिन्' इति मूले पाठः ।

३. 'विषमसमाङ्घ्र्योर्भेदैराविरभूवन्ननुष्टुभि श्लोकाः ।
षोडशलक्षाण्यष्टात्रिंशत्साहस्रसागरशतानि ॥' (वृ० म० को० ५।१)

४. 'आद्यः पादोऽष्टभिर्वर्णैस्ततोऽन्ये चतुरक्षरैः क्रमाद्वृद्धाः । पादा यस्य द्वितीयाद्याः षट्पञ्चाशद्वर्णा यत्र तदिह विबुधजनैरुक्तं पदचतुरूर्ध्वं नाम वृत्तम् ॥' इति छन्दःकौस्तुभे ।

१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६.
त–क्ष–क–द–ष्ट इ–वे–न्द्रि–य–शू–न्यः क्ष–त–चै–त–न्यः
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६. १७. १८. १९. २०.
प–द–च–तु–रू–र्ध्वं न च–ल–ति पु–रु–षः प–त–ति स–ह–सै–व ॥

अत्र गुरुलघुविभागो नेष्यते ॥

## गावन्त आपीडः[1] । ५ । २१ ॥

गकारौ (ऽऽ) द्वावन्ते चेद्भवतश्चतुर्णामपि पादानां तत् पदचतुरूर्ध्वं 'आपीड'संज्ञकं भवति । अन्ते गुरुद्वयग्रहणादत्र शेषाणां लघुत्वमभ्यनुज्ञातं सूत्रकारेणेति मन्यामहे[2] । तत्रोदाहरणम्—

१. २. ३. ४. ५. ६. ७. ८.
।–।–।–।–।–।–ऽ–ऽ
कु–सु–मि–त–स–ह–का–रे
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२.
।–।–।–।–।–।–।–।–।–।–ऽ–ऽ
ह–त–हि–म–म–हि–म–शु–चि–श–शा–ङ्के ।
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६.
।–।–।–।–।–।–।–।–।–।–।–।–।–।–ऽ– ऽ
वि–क–सि–त–क–म–ल–स–र–सि म–धु–स–म–ये–ऽस्मिन्
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६. १७. १८. १९. २०.
।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–ऽ–ऽ
प्र–व–स–सि–प–थि–क–ह–त–क! य–दि भ–व–ति त–व–वि–प–त्तिः ॥

## गावादौ चेत्प्रत्यापीडः[3] । ५ । २२ ॥

गकारौ (ऽऽ) द्वावादौ चेद्भवतश्चतुर्णामपि पादानां, तदा तत् पदचतुरूर्ध्वं 'प्रत्यापीड'-संज्ञं भवति । अत्रापि पूर्ववच्छेषाणां लघुत्वमेव । तत्रोदाहरणम्—

१. २. ३. ४. ५. ६. ७. ८.
ऽ–ऽ ।–। ।–।–।–।
चि–त्तं म–म र–म–य–ति
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२.
ऽ–ऽ ।–।–।–।–।–।–।–।–।–।
का–न्तं व–न–मि–द–मु–प–गि–रि–न–दि ।

---

१. '**आपीड** इदमेवान्त्यौ वर्णौ चेद्गौ' इति छन्दःकौस्तुभे । २. 'आपीडः सर्वलः प्रोक्तः पूर्वपादान्तगद्वयः' (ग० पु० पू० खं० २११।२) ३. अयं भेदश्छन्दःकौस्तुभ-वृत्तरत्नाकरादिषु नोपलभ्यते । मन्दारमरन्दे त्वस्ति ।

१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११.१२.१३.१४.१५.१६.
ऽ–ऽ–।–।–।–।–।–।–।–।–।–।–।–।–।–।
कू–ज–न्म–धु–क–र–कै–ल–र–व–कृ–त–ज–न–धु–ति
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६. १७. १८. १९. २०.
ऽ–ऽ–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।
पुं-स्को-कि-ल-मु–ख-रि–त–सु–र–भि-कु–सु–म–चि–त–त–रु–त–ति ॥

## [२]प्रत्यापीडो गावादौ च । ५ । २३ ॥

चकारोऽन्त इति समुच्चयार्थः । तस्यैव पदचतुरूर्ध्वस्यान्ते आदौ च यदि गकारौ(ऽऽ) भवतस्तदापि 'प्रत्यापीड' एव भवति । तत्रोदाहरणम्—

१. २. ३. ४. ५. ६. ७. ८.
ऽ – ऽ –।–।–।–।–।–ऽ–ऽ
का–न्ता–व–द–न–स–रो–जं
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२.
ऽ–ऽ–।–।–।–।–।–।–।–।–ऽ–ऽ
हृ–द्यं घ–न–सु–र–भि–म–धु–र–सा–स्यम् ।
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११.१२.१३.१४.१५.१६.
ऽ–ऽ ।–।–। ।–।–।–।–।–।–।–।–। ।–ऽ ऽ
पा–तुं र–ह–सि स–त–त–म–भि–ल–ष–ति म–नो मे
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२. १३. १४. १५. १६. १७. १८. १९. २०.
ऽ–ऽ–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–।–ऽ–ऽ
किं-चि-न्मु-कु-लि-त-न–य-न–म–वि–र–त–म–णि–त–र–म-णी–यम् ॥

तदेवं द्विप्रकारः प्रत्यापीडो भवति ॥

## प्रथमस्य विपर्यासे म[३]ञ्जरीलवल्यमृतधाराः । ५ । २४ ॥

आपीडग्रहणं निवृत्तम् । तेनैव समं लघ्वक्षराभ्यनुज्ञानं च । तदेव पदचतुरूर्ध्वं प्रथमस्य विपर्यासे मञ्जरी–लवली–अमृतधाराभिधानं भवति । प्रथमस्य पादस्य द्वितीयेन

---

१. 'कुलकलरवकृतयति' इति लि. पुस्तके. २. अयं भेदश्छन्दःकौस्तुभ–वृत्तरत्नाकरादिषु नोपलभ्यते, **नाग्नेये** ( ३३२ ) ऽस्य सूत्रस्यानुवादो दृश्यते, न च वृत्तिकृदुक्तार्थसूचनार्थमेतावद्गुरुसूत्रकरणापेक्षास्ति, नापि नाम्नः पुनरुपादाने प्रयोजनमस्तीति पूर्वसूत्रस्यैव पाठान्तरमिदं लेखकप्रमादान्मूले प्रविष्टं वृत्तिकृता 'स्थितस्य गतिश्चिन्तनीये'ति न्यायमनुसृत्य व्याख्यातमिति सम्भाव्यते । 'अत्यापीड' इति पाठः कैश्चिदूह्यते । वैदिकैस्तु यथावस्थितमधीयत एवेत्यत्र तत्त्वे सुधिय एव प्रमाणम् । ३. **'कलिका'** इति नामान्तरं गारुड-छन्दःकौस्तुभ-वृत्तरत्नाकरादौ । **'मञ्जरी'**त्यपि **कृष्णीये** । 'अथादिना । क्रमात्पादेन चेत्पादा द्वितीयाद्यास्त्रयस्तदा । **कलिका लवली** प्रोक्ताऽ**मृतधारा** च सूरिभिः ॥' इति **छन्दःकौस्तुभे** ।

विपर्यासे 'मञ्जरी' । प्रथमस्य तृतीयेन विपर्यासे 'लवली' । प्रथमस्य चतुर्थेन विपर्यासे 'अमृतधारा'[1] ॥

तत्र मञ्जर्युदाहरणम्—

१. २. ३. ४. ५. ६. ७. ८. ९. १०.११.१२.
ज–न–य–ति म–ह–तीं प्री–तिं हृ–द–ये
१. २. ३. ४. ५. ६. ७. ८.
का–मि–नां चू–त–म–ञ्ज–री ।
१. २. ३. ४. ५. ६. ७. ८. ९. १०.११. १२. १३.१४.१५.१६.
मि–ल–द–लि–च–क्र–च–म्बु–प–रि–चु–म्बि–त–के–स–रा
१. २. ३. ४. ५. ६. ७. ८.९.१०.११.१२.१३.१४.१५.१६.१७.१८.१९.२०.
को–म–ल–म–ल–य–वा–त–प–रि–न–र्ति–त–त–रु–शि–र–सि स्थि–ता ॥

लवल्युदाहरणम्—

१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११.१२.१३.१४.१५.१६.
वि–र–ह–वि–धु–र–हू–ण–का–मि–नी–क–पो–लो–प–मं
१. २. ३. ४. ५. ६. ७. ८. ९. १०. ११. १२.
प–रि–ण–ति–ध–रं पी–त–पा–ण्डु–च्छ–वि ।[2]
१. २. ३. ४. ५. ६. ७. ८.
ल–व–ली–फ–लं नि–दा–घे
१.२. ३. ४.५. ६. ७.८.९.१०.११. १२.१३.१४.१५. १६.१७.१८.१९.२०.
भ–व–ति ज–ग–ति हि–म–क–र–शी–त–ल–म–ति–स्वा–दू–ष्ण–हृ–रम् ॥[3]

अमृतधारोदाहरणम्—

१.२. ३. ४. ५. ६. ७. ८. ९.१०.११.१२.१३.१४.१५.१६.१७.१८.१९.२०.
य–दि वा–ञ्छ–सि क–र्ण–र–सा–य–नं स–त–त–म–मृ–त–धा–रा–भिः
१. २. ३. ४. ५. ६. ७. ८. ९. १०.११.१२.
य–दि हृ–दि वा प–र–मा–न–न्द–र–सम् ।
१. २. ३. ४. ५. ६. ७. ८. ९. १०.११.१२.१३.१४.१५.१६.
चे–तः! शृ–णु ध–र–णी–ध–र–वा–णी–म–मृ–त–म–यीं
१. २. ३. ४. ५. ६. ७. ८.
त–त्का–व्य–गु–ण–भू–ष–णम् ॥

केचिदापीडादिष्वपि पादविपर्यासे सति मञ्जर्यादिनामानीच्छन्ति ॥

इति पदचतुरूर्ध्वाधिकारः ।

---

१. 'आपीडस्यादिमस्तुर्यस्तुरीयश्चेत्तृतीयकः । तृतीयोऽपि द्वितीयोऽङ्घ्रिर्द्वितीयः प्रथमो यदि । उक्ता साऽमृतधारेति मञ्जरीत्यपि केचन ॥' इति म० म० । २. 'कपोलवल्लतपरिणति आपीतपाण्डुच्छवि' इति लि. पुस्तके. ३. 'जयति हिमशीतलं खण्डवत्स्वादु तृष्णाहरं सुन्दरम्' इति लि. पुस्तके.

उद्गतामेकतः सजौ सलौ, न्सौ जगौ, भ्नौ जलौ ग्, सजौ सजौ ग् । ५ । २५ ॥

'पाद-' ( पि० सू० ५।९ ) इति प्रकृतमनुवर्तते । यत्र प्रथमे पादे सकार (॥ऽ)जकार(।ऽ।)सकार(॥ऽ)ल(।)कारैर्दशाक्षराणि भवन्ति, द्वितीये पादे नकार(।।।)सकार(॥ऽ)जकार(।ऽ।)ग(ऽ)कारैर्दशैव, तृतीये पादे भकार(ऽ॥)नकार(।।।)जकार(।ऽ।)लकार(।)ग(ऽ)कारैरेकादशैव, चतुर्थे पादे सकार(॥ऽ)जकार(।ऽ।)सकार(॥ऽ)जकार(।ऽ।)ग(ऽ)कारैस्त्रयोदश तद्वृत्तम् 'उद्गता' नाम । तत्रोदाहरणम्—

सगणः जगणः सगणः ल०
। । ऽ — । ऽ । — । । ऽ ।
मृ–ग–लो–च–ना श–शि–मु–खी च
(१).(२).(३).(४).(५).(६).(७).(८).(९).(१०).

नगणः सगणः जगणः गु०
। । । — । । ऽ । ऽ । — ऽ
रु–चि–र–द–श–ना नि–त–म्बि–नी ।
(१).(२).(३).(४).(५).(६). (७).(८).(९).(१०).

भगणः नगणः जगणः ल० गु०
ऽ । । — । । । — । ऽ । — । — ऽ
हं–स–ल—लि–त–ग—म–ना ल—ल–ना
(१).(२).(३). (४). (५).(६). (७).(८).(९).(१०).(११).

सगणः जगणः सगणः जगणः गु०
। । ऽ — । ऽ । — । । ऽ — । ऽ । — ऽ
प–रि–णी—य–ते य—दि भ–वे—त्कु–लो–द्ग—ता ॥
(१).(२).(३). (४).(५).(६).(७).(८).(९).(१०).(११).(१२).(१३).

यत्र सूत्रे गकारो(ऽ) लकारो(।) वा श्रूयते, तत्र तेनैव वृत्तस्य पादः परिसमाप्यते । 'उद्गताम्' इति कर्मविभक्तिश्रवणात् पठेदित्यध्याहार्यम् । 'एकतः' इति प्रथमं पादं द्वितीयेन सहाविलम्बेन पठेदित्यर्थः । 'उपस्थितप्रचुपितं पृथगाद्यम्' ( पि० सू० ५।२८ )

---

१. 'प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरे । यद्यथ भनजलगाः स्युरथो सजसा जगौ प्रभवतीयमुद्गता ॥', 'प्रथमे सजौ यदि सलौ च नसजगुरुकाण्यनन्तरे । यद्यथ च भनभगाः स्युरथो सजसा जगौ भवतीयमुद्गता ॥' इति प्रा० पि० सू० २।३२४, ३२२ एवं च प्राकृतपिङ्गले लक्षणद्वयमुक्तमुद्गतायाः.

इत्यतः सिंहावलोकितन्यायेन 'आद्य'ग्रहणमनुवर्तनीयम् । तेनाद्यमेव पादमेकतः पठेत्[1] । 'एकतः' इति ल्यब्लोपे पञ्चमी ॥

## तृतीयस्य सौरभकं[2] र्नौ भ्गौ । ५ । २६ ॥

'तृतीयस्य' इति ग्रहणात्तस्या उद्गताया एवान्ये त्रयः पादा गृह्यन्ते । तृतीयपादे तु विशेषः । तृतीये पादे रेफ(ऽ।ऽ)नकार(।।।)भकार(ऽ।।)ग(ऽ)कारैर्दशाक्षराणि भवन्ति तत् 'सौरभकं' नाम । तत्रोदाहरणम्—

सगणः　जगणः　सगणः　ल०　नगणः　सगणः　जगणः　गु०

।·।·ऽ—।·ऽ·।।·।·ऽ—।　।·।·।　।·।·ऽ—।·ऽ·।—ऽ

वि–नि–वा–रि–तोऽपि न–य–ने–न　त–द–पि कि–मि–हा–ग–तो भ–वान्? ।

(१).(२).(३).(४).(५).(६).(७).(८).(९).(१०).　(१).(२).(३).(४).(५).(६).(७).(८).(९).(१०).

रगणः　नगणः　भगणः　गु०　सगणः　जगणः　सगणः　जगणः　गु०

ऽ·।·ऽ—।·।·।　ऽ·।·।·ऽ　।·।·ऽ—।·ऽ·।—।·।·ऽ—।·ऽ·।—ऽ

ए–त–दे–व त–व सौ–र–भ–कं　य–दु–दी–रि–ता–र्थ–म–पि ना–व–बु–ध्य–ते ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)　(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)

## ललितं[3] नौ सौ । ५ । २७ ॥

तस्या एव उद्गतायास्तृतीयपादस्थाने यदा नौ(।।।.।।।)सौ(।।ऽ.।।ऽ) भवतस्तदा 'ललितं' नाम वृत्तम् । तत्रोदाहरणम्—

सगणः　जगणः　सगणः　ल०

।·।·ऽ　।·ऽ·।—।·।·ऽ—।

स–त–तं　प्रि–यं–व–द–मु–दा—र-

(१).(२).(३).　(४).(५).(६).(७).(८).(९).(१०).

नगणः　सगणः　जगणः　गु०

।·।·।—।·।·ऽ　।·ऽ　।—ऽ

म–म–ल—हृ–द–यं गु–णो–त्त–रैम्[4] ।

(१).(२).(३).(४).(५).(६).(७).(८).(९).(१०).

---

१. 'एकतः पठे'दिति—अर्धद्वयमप्येकीकृत्य एकत उच्चारयेत् । द्वितीयपादस्तृतीयपादश्च सन्धिसमासवशादेकीभवतीत्यर्थः । उक्तं च **जयदेवेन**—'तरसोदिता सजसलेष्वि'त्यादि । तत्र च तरसोदिता वेगेनोच्चारिता—अर्धान्ते विराममन्तरेणार्धद्वयमेकीकृत्य पठितेत्यर्थः—इति **वृत्तरत्नाकरपञ्चिका** ( ५।६ )। २. 'त्रयमुद्गतासदृशमेव पदमिह तृतीयमन्यथा । जायते रनभगैर्ग्रथितं कथयन्ति **सौरभक**मेतदीदृशम् ॥' इति प्रा० पि० सू० २।३२७. । 'अन्ये **सौरलक**मूचिरे ।' इति **कृष्णीये** । ३. 'नयुगं सकारयुगलं च भवति चरणे तृतीयके । तदुदितमुरुमतिभि**र्ललितं** यदि शेषमस्य सकलं यथोद्गता ॥' इति प्रा० पि० सू० २।३२९। ४, 'गुणोन्नतं' इति लि. पुस्तके.

मगणः नगणः सगणः जगणः

।·।· ।—।·।· ।—।·।· ऽ—।·।·ऽ

सु—ल—लि—त—म—ति—क—म—नी—य—नं—मुं

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

सगणः जगणः सगणः जगणः गु०

।·।·ऽ ।·ऽ·। ।·।·ऽ—।·ऽ·।—ऽ

पु—रु—षं त्य—ज—न्ति न—तु—जा—तु यो—षि—तः॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)

**उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ, स्नौ ज्रौ ग्, नौ स्, नौ न् ज्यौ। ५। २८॥**

यत्र प्रथमे पादे मकार(ऽऽऽ) सकार(।।ऽ) जकार(।ऽ।) भकारा(ऽ।।) गकारौ (ऽऽ) च भवतः, द्वितीये पादे सकार(।।ऽ) नकार(।।।) जकार(।ऽ।) रेफा(ऽ।ऽ) गकार(ऽ)श्च, तृतीये नकारौ(।।।.।।।) सकार(।।ऽ)श्च, चतुर्थे त्रयो नकारा(।।।.।।।.।।।) जकार(।ऽ।) यकारौ(।ऽऽ) च, तत् 'उपस्थितप्रचुपितं' नाम वृत्तं भवति। तत्रोदाहरणम्—

मगणः सगणः जगणः भगणः गु० गु०

ऽ·ऽ·ऽ—।·।·ऽ—।·ऽ·।—ऽ·।।—ऽ—ऽ

रा—मा का—म—क—रे—णु—का मृ—गा—य—त—ने—त्रा

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)

सगणः नगणः जगणः रगणः गु०

।·।·ऽ ।·।·। ।·ऽ·।—ऽ·।·ऽ—ऽ

हृ—द—यं ह—र—ति प—यो—ध—रा—व—न—म्रा।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)

नगणः नगणः सगणः

।·।·।—।·।·।—।·।·ऽ

इ—य—म—ति—श—य—सु—भ—गा

(१)(२)(३)(४)(५)(६)(७)(८)(९)

नगणः नगणः नगणः जगणः यगणः

।·।·।—।·।·।—।·।·।—।·ऽ·।—।·ऽ·ऽ

ब—हु—वि—ध—नि—धु—व—न—कु—श—ला ल—लि—ता—श्री॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)

---

१. 'म्सौ ज्भौ गौ प्रथमाङ्घ्रिरीक्ष्यते खलु यस्मिन्नितयं सनजरगास्तथा ननौ सः। अथ नननयुतजयं प्रचुपितमिदमुदितमुपस्थितपूर्वम्॥' इति छन्दःकौस्तुभे। कृष्णीये तूद्गतायाः सरलाख्योऽन्योऽपि भेद उपलभ्यते—'उद्गतायाश्चतुर्थोऽङ्घ्रिर्ननन्गैः सरलं मतम्।' इति। 'उपस्थितप्रकुपित'मिति—कृष्णीये।

'पृथगायम्' इति 'उद्गतामेकतः पठेत्' ( पि० सू० ५।२५ ) इत्यनुवृत्तिनिरासार्थम्[1]। अत्र तृतीयपादव्यवस्था सकारस्य विभज्य पाठलिङ्गात् ॥

## वर्द्धमानं[3] नौ स्नौ[2] न्सौ । ५ । २९ ॥

'तृतीयस्य' ( पि० सू० ५।२६ ) इत्यनुवर्तते । तस्मिन्नुपस्थितप्रचुपिते तृतीयस्य पादस्य स्थाने यदा नकारौ (।।।.।।।) सकार(।।ऽ) नकारौ(।।।) पुनर्नकार(।।।) सकारौ(ऽ।।) च भवतस्तदा 'वर्द्धमानं' नाम वृत्तं भवति । तत्रोदाहरणम्—

मगणः सगणः जगणः भगणः गु० गु०

ऽ ऽ ऽ । । ऽ — । ऽ । — ऽ । । — ऽ ऽ

बि-म्बो-ष्ठी क-ठि-नो—न्न-त-स्त—ना-व-न—ता-ङ्गी

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०)(११)(१२)(१३)(१४)

सगणः नगणः जगणः रगणः गु०

। । ऽ — । । । — । ऽ । — ऽ । ऽ — ऽ

ह-रि-णी—शि-शु-न—य-ना नि-त-म्ब-गु—र्वी ।

(१) (२) (३) (४) (५) (६) (७) (८) (९)(१०)(११)(१२)(१३)

नगणः[4] नगणः सगणः नगणः नगणः सगणः

। । ।—। । ।— । । ऽ । । ।— । । ।— । । ऽ

म-द-क-ल-क-रि—ग-म-ना प-रि-ण—त-श-शि-व-द-ना

(१)(२)(३)(४)(५)(६) (७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)

नगणः नगणः नगणः जगणः यगणः

। । ।— । । । । । । । ऽ ।— । ऽ ऽ

ज-न-य—ति म-म म-न-सि मु-दं म—दि-रा-क्षी ॥

(१)(२)(३) (४) (५)(६) (७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)

## शुद्धविराडृषभं तज्राः । ५ । ३० ॥[5]

तस्मिन्नेव उपस्थितप्रचुपिते यदा तृतीयस्य पादस्य स्थाने तकार(ऽऽ।) जकार(।ऽ।)- रेफा(ऽ।ऽ) भवन्ति, तदा 'शुद्धविराडृषभं' नाम वृत्तं भवति । तत्रोदाहरणम्—

मगणः सगणः जगणः भगणः गु० गु०

ऽ ऽ ऽ । । ऽ — । ऽ । — ऽ । । — ऽ ऽ

क-न्ये-यं क-न-को-ज्ज्व-ला म—नो-ह-र—श्री-भिः

(१) (२) (३)(४)(५) (६) (७) (८) (९) (१०)(११)(१२)(१३)(१४)

---

१. 'शङ्कानिरासार्थम्' इति लि. पुस्तके. २. 'स्नौ' इति सूत्रस्थपाठदेहे नकारात्सकारं दूरीकृत्येत्यर्थः । ३. 'वर्धमानं तृतीये नौ–' इत्येव वैदिकपाठः । 'वर्द्धमानं तृतीयकेऽत्रनसैर्नसैरिह' इति छन्दःकौस्तुभे । ४. लिखितपुस्तके सर्वत्रापि 'नगणौ सगणनगणौ' इत्यादि । ५. 'तजरैस्तु शुद्धविराजर्षभम्' इति छन्दःकौस्तुभे ।

सगणः नगणः जगणः रगणः गु०

।·।·ऽ—।·।·।—।·ऽ·।—ऽ·।·ऽ—ऽ

श–शि–नि—र्म–ल–व—द्–ना वि—शा–ल–ने–त्रा ।

(१) (२) (३) (४)(५)(६) (७)(८)(९) (१०)(११)(१२)(१३)

तगणः जगणः रगणः

ऽ·ऽ·।—।·ऽ·।—ऽ·।·ऽ

पी–नो–रु—नि–त–म्ब—शा–लि–नी

(१) (२) (३) (४) (५) (६) (७) (८) (९)

नगणः नगणः नगणः जगणः यगणः

।·।·।—।·।·।—।·।·।—।·ऽ·।—।·ऽ·ऽ

सु–ख–य—ति हृ–द—य–म–ति—श–यं त—रु–णा–नाम् ॥

(१)(२)(३) (४) (५)(६) (७)(८)(९) (१०)(११)(१२)(१३)(१४)(१५)

उपस्थितप्रचुपितादीनामस्मिन्प्रवेशयितुं न शक्यन्ते संज्ञाः, इति नोक्ताः ॥

---

## अर्द्धे । ५ । ३१ ॥

पूर्वमुच्चावचानि छन्दांस्युक्तानि । इदानीं नियमेनोच्यन्ते । 'अर्द्धे' इत्यधिकारोऽयमाध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामः, अर्द्ध एव तद्वेदितव्यम् ॥

## उपचित्रकं सौ सलौ ग्, भौ भगौ ग् । ५ । ३२ ॥[1]

यस्य प्रथमे पादे सकारास्त्रयः(॥ऽ.॥ऽ.॥ऽ), लकार(।) गकारौ(ऽ) च क्रमेण, द्वितीये भकारास्त्रयो(ऽ॥.ऽ॥.ऽ॥) गकारौ(ऽऽ) च भवतः, तत् 'उपचित्रकं' नाम वृत्तम् । अर्द्धशब्दस्य समप्रविभागवचनत्वाद्द्वितीयमप्यर्द्धं तादृशमेव । तत्रोदाहरणम्—

सगणः सगणः सगणः ल० गु०

।·।·ऽ—।·।·ऽ—।·।·ऽ—।—ऽ

उ–प–चि—त्र–क–म—त्र वि–रा—ज–ते

(१)(२)(३) (४)(५)(६) (७) (८)(९)(१०)(११)

भगणः भगणः भगणः गु० गु०

ऽ·।·।—ऽ·।·।—ऽ·।·।—ऽ ऽ

चू–त–व—नं कु–सु—मै–र्वि–क–स–द्भिः ।

(१) (२) (३) (४) (५) (६) (७) (८) (९)(१०)(११)

---

१. 'विषमे यदि सौ सलगा दले भौ युजि भाद्गुरुकावुपचित्रम्' इति प्रा० पि० सू० २।३११।

सगणः सगणः सगणः ल० गु०

।·।· ऽ—।·।· ऽ—।·।· ऽ—।—ऽ

प–र–पु–ष्ट–वि–घु–ष्ट–म–नो–ह–रं

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

भगणः भगणः भगणः गु० गु०

ऽ· ।· ।—ऽ· ।· ।—ऽ· ।· ।—ऽ—ऽ

म–न्म–थ–के–लि–नि–के–त–न–मे–तत् ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

**द्रुतमध्या भौ भ्गौ ग्, न्जौ ज्यौ । ५ । ३३ ॥**

यस्य प्रथमे पादे त्रयो भकारा (ऽ॥.ऽ॥.ऽ॥) गकारौ (ऽ.ऽ) च, द्वितीये नकार (।।।)-जकारौ (।ऽ।) जकार (।ऽ।) यकारौ (।ऽऽ) च, तद् 'द्रुतमध्या' नाम वृत्तम् । अत्रापि प्रथमद्वितीयाविव तृतीयचतुर्थौ पादौ । तत्रोदाहरणम्—

भगणः भगणः भगणः गु० गु०

ऽ· ।· । ऽ· ।· ।—ऽ· ।· ।—ऽ—ऽ

य–द्य–पि शी–घ्र–ग–ति–र्मृ–दु–गा–मी

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

नगणः जगणः जगणः यगणः

।·।· ।—।· ऽ· ।—।· ऽ· ।—।· ऽ· ऽ

ब–हु–ध–न–वा–न–पि दुः–ख–मु–पै–ति ।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

भगणः भगणः भगणः गु० गु०

ऽ· ।· ।—ऽ· ।· ।—ऽ· ।· ।—ऽ—ऽ

ना–ति–श–य–त्व–रि–ता न च मृ–द्वी

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

नगणः जगणः जगणः यगणः

।·।· ।—।· ऽ· ।—।· ऽ· ।—।· ऽ· ऽ

नृ–प–ति–ग–तिः क–थि–ता द्रु–त–म–ध्या ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

**वेगवती सौ स्गौ, भौ भ्गौ ग् । ५ । ३४ ॥**

---

१. 'भत्रयमोजगतं गुरुकौ चेत् युजि च नजौ ज्ययुतौ **द्रुतमध्या**' इति छन्दःकौस्तुभे । २. 'विषमे प्रथमाक्षररहीनं दोधकवृत्तमेव **वेगवती** स्यात्' इति प्रा० पि० सू० २।३१३.

यस्य प्रथमे पादे त्रयः सकारा (॥ऽ.॥ऽ.॥ऽ) गकार(ऽ)श्चैकः, द्वितीये भकारास्त्रयो (ऽ॥.ऽ॥.ऽ॥) गकारौ(ऽऽ) च भवतः, तत् 'वेगवती' नाम वृत्तम्। तत्रोदाहरणम्—

सगणः सगणः सगणः गु०

।•।• ऽ—।•।• ऽ—।•।• ऽ—ऽ

त–व मु–ञ्च न–रा–धि–प! से–नां

(१)(२) (३) (४) (५) (६) (७) (८) (९)(१०)

भगणः भगणः भगणः गु० गु०

ऽ•।•।—ऽ•।•।—ऽ•।•।—ऽ—ऽ

वे–ग–व–तीं स–ह–ते स–म–रे–षु।

(१) (२)(३) (४) (५)(६)(७) (८)(९)(१०)(११)

सगणः सगणः सगणः गु०

।•।• ऽ—।•।• ऽ—।•।• ऽ—ऽ

प्र–ल–यो–र्मि–मि–वा–भि–मु–खीं तां

(१)(२) (३) (४) (५) (६) (७) (८) (९)(१०)

भगणः भगणः भगणः गु० गु०

ऽ•।•।—ऽ•।•।—ऽ•।•।—ऽ—ऽ

कः स–क–ल–क्षि–ति–भृ–न्नि–व–हे–षु? ॥

(१) (२)(३)(४) (५) (६) (७) (८)(९)(१०)(११)

## भद्रविराट् तजौ र्गौ, म्सौ ज्गौ ग्। ५। ३५॥

यस्य प्रथमे पादे तकार (ऽऽ।) जकारौ(।ऽ।) रेफ(ऽ।ऽ) गकारौ(ऽ) च, द्वितीये मकार-(ऽऽऽ) सकार (॥ऽ) जकारा (।ऽ।) गकारौ (ऽऽ) च, तद् वृत्तं 'भद्रविराट्' नाम। तत्रोदाहरणम्—

तगणः जगणः रगणः गु०

ऽ• ऽ• ।—।• ऽ• ।—ऽ• ।• ऽ—ऽ

य–त्पा–द–त–ले च–का–स्ति च–क्रं

(१) (२) (३)(४)(५) (६)(७) (८) (९)(१०)

मगणः सगणः जगणः गु० गु०

ऽ• ऽ• ऽ ।•।• ऽ ।• ऽ• ।—ऽ ऽ

ह–स्ते वा कु–लि–शं स–रो–रु–हं वा।

(१) (२) (३) (४) (५) (६) (७)(८)(९)(१०)(११)

---

१. 'ओजे तपरौ जरौ गुरुश्चेत् म्सौ ज्गौ ग् भद्रविराड् भवेदनोजे' इति छन्दःकौस्तुभे।

तगणः जगणः रगणः गु०

ऽ॰ ऽ॰ ।—।॰ ऽ॰ ।—ऽ॰ ।॰ ऽ—ऽ

रा–जा ज–ग–दे–क–च–क्र–व–र्ती

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०)

मगणः सगणः जगणः गु० गु०

ऽ॰ ऽ॰ ऽ—।॰ ।॰ ऽ ।॰ ऽ॰ ।—ऽ ऽ

स्या–च्छं भ–द्र–वि–राट् स–म–श्नु–ते ऽसौ ॥

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (११)

अस्यौपच्छन्दसिकान्तःपातित्वेऽपि विशेषसंज्ञार्थमर्द्धसमाधिकारे पाठः ॥

## केतुमती सजौ सगौ, भरौ नगौ ग् । ५ । ३६ ॥

यस्य प्रथमे पादे सकार (।।ऽ) जकारौ (।ऽ।) सकार (।।ऽ) गकारौ (ऽ) च, द्वितीये भकार (ऽ।।) रेभ (ऽ।ऽ) नकारा (।।।) गकारौ (ऽऽ) च, तत् 'केतुमती' नाम वृत्तं भवति । तत्रोदाहरणम्—

सगणः जगणः सगणः गु०

।॰ ।॰ ऽ—।॰ ऽ॰ ।—।॰ ।॰ ऽ—ऽ

हु–त–भू–रि–भू–मि–प–ति–चि–ह्नां

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०)

भगणः रगणः नगणः गु० गु०

ऽ॰ ।॰ ।—ऽ॰ ।॰ ऽ—।॰ ।॰ ।—ऽ—ऽ

यु–द्ध–स–ह–स्र–ल–ब्ध–ज–य–ल–क्ष्मीम् ।

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०) (११)

सगणः जगणः सगणः गु०

।॰ ।॰ ऽ—।॰ ऽ॰ ।—।॰ ।॰ ऽ—ऽ

स–ह–ते न–कोऽ–पि व–सु–धा–यां

(१) (२) (३) (४) (५) (६) (७) (८) (९) (१०)

---

१. अत्र केषाञ्चिद्वृद्धविराडादीनामौपच्छन्दसिकादिभ्यो वैतालीयभेदेभ्योऽभेदेऽपि गणनियमानियमरूपोपाधिभेदाद्भेदो बोध्यः । अत एव केदारोऽपि औपच्छन्दसिकं विराड्वृत्तमप्याह स्म–'वदन्त्यपरवक्त्राख्यं वैतालीयं विपश्चितः । पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा ॥' ( वृ० र० ४।१२ ) इति माधुर्यरञ्जनी । २. 'विषमे सजौ सगुरुयुक्तौ केतुमती समे भरनगाद्गः' इति छन्दःकौस्तुभे ।

भगणः रगणः नगणः गु० गु०

ऽ। । ऽ। ऽ । । । ऽ ऽ

के-तु-म-तीं न-रे-न्द्र! त-व से-नाम् ॥

(१)(२)(३)(४)(५)(६)(७) (८)(९)(१०)(११)

**आख्यानकी तौ जगौ ग्, जतौ जगौ ग् । ५ । ३७ ॥**

यस्य प्रथमे पादे तकारौ (ऽऽ।.ऽऽ।) जकारो (।ऽ।) गकारौ (ऽऽ) च, द्वितीये जकार-(।ऽ।) तकारौ (ऽऽ।) जकार (।ऽ।) गकारौ (ऽऽ) च, तत् 'आख्यानकी' नाम वृत्तम् । तत्रोदाहरणम्—

तगणः तगणः जगणः गु० गु०

ऽऽ। ऽऽ। ।ऽ। ऽ ऽ

भृ-ङ्गा-व-ली म-ङ्ग-ल-गी-त-ना-दै-

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

जगणः तगणः जगणः गु० गु०

।ऽ। ऽऽ। ।ऽ। ऽ ऽ

र्ज-न-स्य चि-त्ते मु-द-मा-द-धा-ति ।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

तगणः तगणः जगणः गु० गु०

ऽऽ। ऽऽ। ।ऽ। ऽ ऽ

आ-ख्या-न-की-व स्म-र-ज-न्म-वा-र्ता-

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

जगणः तगणः जगणः गु० गु०

।ऽ। ऽऽ। ।ऽ। ऽ ऽ

म-हो-त्स-व-स्या-म्र-व-णे क्व-ण-न्ती ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

आख्यानकी वार्ताहारिकोच्यते ॥

**विपरीताख्यानकी[३] जतौ जगौ ग्, तौ जगौ ग् । ५ । ३८ ॥**

---

१. 'अख्यानिकी' इति कलिकातामुद्रितपुस्तके पाठः । एवं वृत्तावपि तत्र । 'आख्यातकी'ति **रत्नाकरे** । '**आख्यानकी** तौ जगुरू गमोजे जतावनोजे जगुरू गुरुश्चेत्' इति छन्दःकौस्तुभे । उपजातिचतुर्दशभेदान्तर्गतप्राकृतपिङ्गलोक्त**भद्रा**ख्यदशमभेदरूपत्वात् '**भद्रा**' इत्यपरं नाम. २. 'यात्रामहोत्सवस्य श्रवणे क्वणन्ती' इति लिखितोदाहरणपुस्तके. ३. 'विपरीताख्यानिकी इति क. मु. पु. 'जतौ जगौ गो विषमे समे तौ जगौ ग एषा **विपरीत**पूर्वा' इति छन्दःकौस्तुभे । प्राकृतपिङ्गलोक्तोपजातिचतुर्दशभेदान्तर्गत**हंसी**नामकपञ्चमभेदरूपत्वात्पञ्चमोऽयं भेद उपजातेः, अतो '**हंसी**' इति नामान्तरम्.

यस्य प्रथमे पादे जकार (ISI) तकारौ (SSI) जकारो (ISI) गकारौ (SS) च, द्वितीये तकारौ (SSI.SSI) जकारो (ISI) गकारौ (SS) च, तद् 'विपरीताख्यानकी' नाम वृत्तम्। तत्रोदाहरणम्—

जगणः तगणः जगणः गु० गु०

I· S· I—S·S· I—I·S· I—S—S

अ–लं त–वा–ली–क–व–चो–भि–रे–भिः

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

तगणः तगणः जगणः गु० गु०

S· S· I—S· S·I—I·S· I—S—S

स्वा–र्थं प्रि–ये! सा–ध–य का–र्य–म–न्यत्।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

जगणः तगणः जगणः गु० गु०

I· S· I—S·S· I—I·S· I—S—S

क–थं क–था–क–र्ण–न–कौ–तु–कं स्या-

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

तगणः तगणः जगणः गु० गु०

S· S · I—S·S· I—I·S· I—S—S

दा–ख्या–न–की चे–द्वि–प–री–त–वृ–त्तिः? ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

एतयोश्च वक्ष्यमाणोपजात्यन्तर्गतत्वेऽपि विशेषसंज्ञार्थमर्द्धसमाधिकारे पाठः।

## हरिणप्लुता सौ स्लौ ग्, न्भौ भ्रौ । ५ । ३९ ॥

यस्य प्रथमे पादे सकारास्त्रयो (IIS.IIS.IIS) लकार (I) गकारौ (S) च, द्वितीये नकार (III) भकारौ (SII) भकार (SII) रेफौ (SIS) च, तद् वृत्तं 'हरिणप्लुता' नाम। तत्रोदाहरणम्—

सगणः सगणः सगणः ल० गु०

I·I·S—I·I·S—I·I· S—I—S

त–व–मु–ञ्ज–न–रा–धि–प! वि–द्वि–षां

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

---

१. 'अयुजि प्रथमेन विवर्जितो द्रुतविलम्बिततो हरिणप्लुता' इति प्रा० पि० सू० २।३१५.

नगणः भगणः भगणः रगणः

। · । · ।—ऽ · । · ।—ऽ · । · ।—ऽ · । · ऽ

[1]भ-य-वि-व-र्जि-त-के-तु-ल-घी-य-साम् ।

(१) (२) (३) (४) (५) (६) (७) (८) (९)(१०)(११)(१२)

सगणः सगणः सगणः ल० गु०

। · । · ऽ—। · । · ऽ—। · । · ऽ—।—ऽ

र-ण-भू-मि-प-रा-ङ्मु-ख-व-र्म-नां

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

नगणः भगणः भगणः रगणः

। · । · ।—ऽ · । · ।—ऽ · । · ।—ऽ · । · ऽ

भ-व-ति शी-घ्र-ग-ति-र्ह-रि-ण-प्लु-ता ॥

(१)(२)(३) (४) (५) (६) (७) (८)(९)(१०)(११)(१२)

## [2]अपरवक्त्रं नौ र्लौ ग्, न्जौ ज्रौ । ५ । ४० ॥

यस्य प्रथमे पादे नकारौ (।।।,।।।) रेफ (ऽ।ऽ) लकार (।) गकारा (ऽ) श्च, द्वितीये नकार (।।।) जकारौ (।ऽ।) जकार (।ऽ।) रेफौ (ऽ।ऽ) च, तद्वृत्तम् 'अपरवक्त्रं' नाम । तत्रोदाहरणम्—

नगणः नगणः रगणः ल० गु०

। · । · ।—। · । · ।—ऽ · । · ऽ—।—ऽ

स-कृ-द-पि कृ-प-णे-न च-क्षु-षा

(१)(२)(३)(४) (५)(६)(७)(८)(९)(१०)(११)

नगणः जगणः जगणः रगणः

। · । · ।—। · ऽ · ।—। · ऽ · ।—ऽ · । · ऽ

न-र-व-र! प-श्य-ति-य-स्त-वा-न-नम् ।

(१)(२)(३)(४) (५)(६) (७)(८)(९)(१०)(११)(१२)

नगणः नगणः रगणः ल० गु०

। · । · ।—। · । · ।—ऽ · । · ऽ—।—ऽ

न-पु-न-र-प-र-व-क्त्र-मी-क्ष-ते

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)

---

१. 'भयविसर्जितहेतिलघीयसाम्' इति लि. पुस्तके. २. 'अयुजि ननरला गुरुः समे यद्परवक्त्रमिदं नजौ जरौ' इति प्रा० पि० सू० २।३।१८ अस्यैव 'पल्लविताग्र'मिति नामान्तरं वृ० म० को० ।

नगणः जगणः जगणः रगणः

।·।·।—।·ऽ· ।—।·ऽ·।—ऽ·।·ऽ

स हि सु–खि–तो–ऽर्थि–ज–न–स्त–था–वि–धः ॥

(१)(२) (३)(४) (५) (६) (७) (८) (९)(१०)(११)(१२)

अस्य वैतालीयान्तर्गतत्वेऽपि विशेषसंज्ञार्थमिहोपन्यासः ॥

## पुष्पिताग्रा नौ र्यौ, न्जौ जरौ ग् । ५ । ४१ ॥

यस्य प्रथमे पादे नकारौ (।।।.।।।) रेफ (ऽ।ऽ) यकारौ (।ऽऽ) च, द्वितीये नकार-(।।।) जकारौ (।ऽ।) जकार (।ऽ।) रेफौ (ऽ।ऽ) गकार (ऽ) श्च, तद्वृत्तं 'पुष्पिताग्रा' नाम । तत्रोदाहरणम्—

नगणः नगणः रगणः यगणः

।·।·।—।·।·।—ऽ·।·ऽ—।·ऽ·ऽ

स–म–सि–त–द–श–ना मृ–गा–य–ता–क्षी

(१)(२)(३)(४)(५)(६)(७) (८)(९)(१०)(११)(१२)

नगणः जगणः जगणः रगणः गु०

।·।·।—।·ऽ·।—।·ऽ·।—ऽ·।·ऽ—ऽ

स्मि–त–सु–भ–गा प्रि–य–वा–दि–नी वि–द–ग्धा ।

(१) (२) (३)(४)(५) (६)(७)(८)(९)(१०)(११)(१२)(१३)

नगणः नगणः रगणः यगणः

।·।·।—।·।·।—ऽ·।·ऽ—।·ऽ—ऽ

अ–प–ह–र–ति नृ–णां म–नां–सि रा–मा

(१)(२)(३)(४)(५) (६)(७) (८)(९)(१०)(११)(१२)

नगणः जगणः जगणः रगणः गु०

।·।·। ।·ऽ·। ।·ऽ·। ऽ·।·ऽ—ऽ

भ्र–म–र–कु–ला–नि ल–ते–व पु–ष्पि–ता–ग्रा ॥

(१) (२)(३) (४) (५) (६) (७) (८)(९)(१०)(११)(१२)(१३)

इयमप्यौपच्छन्दसकान्तर्गता विशेषसंज्ञापनार्थमत्रोच्यते ॥

## [२]यवमती जौ जौ, ज्रौ ज्रौ ग् । ५ । ४२ ॥

यस्य प्रथमे पादे रेफ(ऽ।ऽ)जकारौ (।ऽ।) भूयोऽपि रेफ(ऽ।ऽ)जकारौ (।ऽ।) भवतः, द्वितीये जकार(।ऽ।)रेफौ (ऽ।ऽ) पुनर्जकार(।ऽ।)रेफौ (ऽ।ऽ) गुरु (ऽ) श्च, तद्वृत्तं 'यवमती' नाम । अत्र संप्रदायात्पादव्यवस्था । तत्रोदाहरणम्—

---

१. 'अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा' इति प्रा० पि० सू० २।३०८. २. 'परावती' इत्यपि नामान्तरं श्रीकृष्णमते.

रगणः जगणः रगणः जगणः

ऽ । ऽ — । ऽ । — ऽ । ऽ — । ऽ ।

प–द्म–क–न्तु को–म–ले क–रे वि–भा–ति

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

जगणः रगणः जगणः रगणः गु०

। ऽ । — ऽ । ऽ — । ऽ । — ऽ । ऽ — ऽ

प्र–श–स्त–म–त्स्य–ला–ञ्छ–नं पै–दे च य–स्याः ।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)

रगणः जगणः रगणः जगणः

ऽ । ऽ — । ऽ । — ऽ । ऽ — । ऽ ।

सा य–वा–न्वि–ता भ–वे–द्ध–ना–धि–का च

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)

जगणः रगणः जगणः रगणः गु०

। ऽ । — ऽ । ऽ — । ऽ । — ऽ । ऽ — ऽ

स–म–स्त–ब–न्धु–पू–जि–ता प्रि–या च प–त्युः ॥

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)

यवान्विता यवमतीत्यर्थः ॥

## शि[2]खैकोनत्रिंदशदेकत्रिंदशदन्ते ग् । ५ । ४३ ॥

यस्य प्रथमे पादे एकोनत्रिंशद् (२९) अक्षराणि, द्वितीये च एकत्रिंशत् (३१), द्वयोरपि (१. २) पादयोरन्ते च प्रत्येकं गुरुः (ऽ), तद्वृत्तं 'शिखा' नाम। 'अर्धे' (पि० सू० ५।३१) इत्यधिकाराद्द्वितीयमप्यर्धं तादृशमेव। 'अन्ते ग्' इति नियमार्थमेतत्। अन्ते एव गुरुर्नान्यत्र। तेन अयुक् (१,३) पादे अष्टाविंशति(२८)रक्षराणि लघूनि, अन्ते गुरु (१) रेकः। युक् (२, ४) पादे त्रिंश(३०)ल्लघवः, अन्ते गुरु (१) श्च। तत्रोदाहरणम्—

गु०

ऽ

[3]अभिमतबकुलकुसुमघनपरिमलमिलदलिमुखरितहरिति मधौ

(२९).

---

१. 'तथा च यस्याः' इति लि. पु०. २. 'शिखैकान्नत्रिंश–'दिति वैदिकपाठः। पिङ्गलसूत्र(४।४९)प्राकृतपिङ्गलसूत्र(१।१२६)बोधित'**शिखा**'छन्दस्त्वस्माद्भिन्नमेव। ३. 'अभिनव' इति लि. पुस्तके.

गु०
ऽ
सहचरमलयपवनरयतरलितसरसिजरजसि शयतरणिवितते[1] ।
(३१).

गु०
ऽ
विकसितविविधकुसुमसुलभसुरभिशरमदननिहतसकलजने
(२९).

गु०
ऽ
ज्वलयति मम हृदयमविरतमिह सुतनु ! तव विरहदहनविषमशिखा ॥
(३१).

## [2]खञ्जा महत्ययुजीति । ५ । ४४ ॥

इयमेव शिखा पूर्वोक्ते महति बह्वक्षरे पादे अयुजि (१, ३) सति, पारिशेष्यादितरस्मिंश्च युजि (२, ४) सति 'खञ्जा' नाम च्छन्दो भवति । अयमर्थः—एकत्रिंशदक्षरो विषमः पादः कर्तव्यः; एकोनत्रिंशद(२९)क्षरश्च समः पादः । शेषं यथाप्राप्तमेव । तत्रोदाहरणम्—

गु०
ऽ
अपगतघनविशददशदिशि हृतजनदृशि परिणतकणकपिलकलमे
(३१).

गु०
ऽ
प्रविकसदसमकुसुमघनपरिमलसुरभितमरुति शरदि समये ।
(२९).

गु०
ऽ
शुचिशशिमहसि विवृतसरसिरुहि मुदितमधुलिहि विमलितधरणितले
(३१).

---

१. 'मनसि शयवितते'ति लि. पुस्तके, लिखितोदाहरणपुस्तके च. २. 'प्राकृतपिङ्गलसूत्र(१।१२४)बोधित'**खञ्जा**'छन्दस्त्वस्माद्भिन्नमेव । '**खजा**' इति नामान्तरमस्याः क्वचित् । 'शिखाखञ्जे दण्डकभेदौ । अत्र दर्शिते मात्रासमकप्रस्तावात्'—इति **वृ० र० पञ्चिका** ।

गु॰
—
ऽ

किमपरमिह कमलमुखि! सुखमनुभवसि मम हृदयकमलमधुना ॥
(२९).

अर्धसमवृत्ताधिकारो निवृत्तः ।

इति भट्टहलायुधविरचितायां छन्दोवृत्तौ पञ्चमोऽध्यायः ।

---

षष्ठोऽध्यायः ।

## यतिर्विच्छेदः । ६ । १ ॥

विच्छिद्यते विभज्यते पदपाठोऽस्मिन्निति विच्छेदो विश्रामस्थानं, स च यतिरित्युच्यते। नन्वत्र शास्त्रे यतिशब्देन व्यवहारादर्शनान्निरर्थकं संज्ञाकरणम्।। नैष दोषः, यतिरित्यागमादिष्वाचार्यपारम्पर्यागता संज्ञेयं 'तनुमध्यादि'वत्। तस्याः शिष्यव्युत्पत्त्यर्थमर्थकथनम् 'यतिर्विच्छेदः' इति। अस्ति च लोके शास्त्रान्तरेषु च यतिसंज्ञाव्यवहारः। अपि च 'यतिः' इत्यधिकार आसप्तमाध्यायपरिसमाप्तेः समुद्रेन्द्रियरसादिनिर्देशेषूपतिष्ठते। समुद्रादिशब्दाः साकाङ्क्षत्वात् 'यतिः' इत्यनेनैव संबध्यन्ते। यतिशब्दस्याधिकरणव्युत्पत्त्या समुद्राद्यवच्छिन्नेष्वक्षरेषु यतिः कर्तव्येत्यर्थः सिध्यति। तत्रैषा यत्युपदेशोपनिषद्भवति[2]—

'यतिः सर्वत्र पादान्ते श्लोकार्धे तु विशेषतः।
समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके ॥
क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत्।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥
पूर्वान्तवत्स्वरः संधौ क्वचिदेव परादिवत्।
द्रष्टव्यो यतिचिन्तायां यणादेशः परादिवत् ॥
नित्यं प्राक्पदसंबन्धाश्चादयः प्राक्पदान्तवत्।
परेण नित्यसंबन्धाः प्रादयश्च परादिवत् ॥'

'यतिः सर्वत्र पादान्ते' इत्यस्योदाहरणम्—'विशुद्धज्ञानदेहाय' (मी. श्लो. वा. १।१) इत्यादि। तस्यैव प्रत्युदाहरणम्—

'नमस्तस्मै महादेवा,-य शशाङ्कार्धधारिणे' इत्यादि।

---

१. यतिश्छन्दोऽधिरूढानां शब्दानां या विधारणा।' (का. लं. ४।२४) इति **भामहः**। २. 'पादान्त एव केचिच्च पादमध्येऽपि केचन। यतिं वदन्ति तत्रापि विशेषः स्फुटमुच्यते ॥ धातुनामस्वभिन्नेषु यतिर्भवति नान्यथा। उपसर्गान्ततश्छेदः प्रत्ययादौ तयोः क्वचित् ॥ स्वरसन्धौ तु सम्प्राप्तसौन्दर्याद्यतिरिष्यते। तु चादयो न प्रयोज्या विच्छेदात्परतस्तथा ॥ प्रत्ययादौ यतिर्नाम्नां षष्ठ्यामेवेति केचन।'—इति **मन्दारमरन्दे** (शे. बि.)।

'श्लोकार्धे तु विशेषतः' इत्यत्र संधिकार्याभावः स्पष्टविभक्तिकत्वं च विशेषः। तत्रोदाहरणं यथा—

'नमस्यामि सदोद्भूतमिन्धनीकृतमन्मथम् ।
ईश्वराख्यं परं ज्योतिरज्ञानतिमिरापहम् ॥'

अत्र 'ईश्वराख्यम्' इत्यस्य पूर्वमकारेण संयोगो न कर्तव्यः। समासे प्रत्युदाहरणं [ यथा—]

'सुरासुरशिरोरत्नस्फुरत्किरणमञ्जरी- ।
पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दामहे शिवम् ॥'

'समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके' तत्र श्रूयमाणविभक्त्यन्तं व्यक्तविभक्तिकम्, समासान्तर्भूतविभक्त्यन्तमव्यक्तविभक्तिकम् । तत्रोदाहरणं [ यथा—]

'यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु' ( मे. सं. १।१ ) इत्यादि ।

'व्यक्ताव्यक्तविभक्तिके' इति 'यतिः सर्वत्र पादान्ते' इत्यनेन संबध्यते। तत्रोदाहरणम्—

'वशीकृतजगत्कालं कण्ठेकालं नमाम्यहम् ।
महाकालं कलाशेषशशिलेखाशिखामणिम् ॥'

अपि च ।

'नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥'

'क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् । यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥' तत्रोदाहरणम्—

'पर्याप्तं तप्तचामी,—करकटकतटे श्लिष्टशीतेतरांशौ' इत्यादि । तथा—'कूजत्कोयष्टिकोला,—हलमुखरभुवः प्रान्तकान्तारदेशाः' इत्यादि । तथा—'हासो हस्ताग्रसंवा,—हनमपि तुलिता,—द्रीन्द्रसारद्विषोऽसौ' इत्यादि । तथा—'वैरिञ्चानां तथोच्चा,—रितरुचिरऋचां चाननानां चतुर्णाम्' इत्यादि । तथा—'खड्गे पानीयमाह्ला,—दयति च महिषं पक्षपाती पृथक्कः' इत्यादि । समुद्रादाविति किम् ? । पदमध्ये यतिः पादान्ते मा भूत् । तद्यथा—'प्रणमत भवबन्धक्लेशनाशाय नारा,—यणचरणसरोजद्वन्द्वमानन्दहेतुम्' इत्यादि ।

पूर्वोत्तरभागयोरेकाक्षरत्वे तु यतिर्दुष्यति । तत्रोदाहरणम्—

'एतस्या ग,—ण्डतलममलं गाहते चन्द्रकक्षाम्' इत्यादि । 'एतस्या रा,—जति सुमुखमिदं पूर्णचन्द्रप्रकाशम् ।' इत्यादि । तथा—'सुरासुरशिरोनिघृ,—ष्टचरणारविन्दः शिवः' इत्यादि ।

'पूर्वान्तवत्स्वरः संधौ क्वचिदेव परादिवत्' । अस्यार्थः—योऽयं पूर्वपरयोरेकादेशः स्वरसंधौ विधीयते, स क्वचित्पूर्वस्यान्तवद्भवति क्वचित्परस्यादिवत् । तथा च पाणिनेः

स्वरणम्—'अन्तादिवच्च' (पा० सू० ६।१।८५)। तत्र पूर्वान्तवद्भावे उदाहरणम्—'स्यादस्थानो—पगतयमुनासंगमेवाभिरामा' (मे. सं. १।५१)। 'जम्भारातीभकुम्भो,—द्भवमिव दधतः' इत्यादि।

तथा—

'दिक्कालाद्यनवच्छिन्ना—नन्तचिन्मात्रमूर्तये।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे॥' (नी. श. १) इत्यादि।

परादिवद्भावे उदाहरणम्—

'स्कन्धं विन्ध्याद्रिबुद्ध्या, निकषति महिष—स्याहितोऽसूनहार्षीत्' इत्यादि।

'शूलं शूलं तु गाढं प्रहर हर! हृषीकेश! केशोऽपि वक्र—श्चक्रेणाकारि किं ते' इत्यादि।

तत्र हि स्वरस्य परादिवद्भावे व्यञ्जनमपि तद्भक्तत्वात्तदादिवद्भवति।

'यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ' इत्यन्तादिवद्भावविधावपि संबध्यते। तेन 'अस्या वक्त्रा—ब्जमवजितपू—र्णेन्दुशोभं विभाति' इत्येवंविधा यतिर्न भवति।

'यणादेशः परादिवत्' इत्यस्योदाहरणम्—

'विततघनतुषारक्षोदशुभ्रांशुपूर्वा-
स्वविरलपदमालां श्यामलामुल्लिखन्तः' इत्यादि।

'नित्यं प्राक्पदसंबन्धाश्चादयः प्राक्पदान्तवत्'। तेभ्यः पूर्वा यतिर्न कर्तव्येत्यर्थः। तत्रोदाहरणम्—

'स्वादु स्वच्छं च हिमसलिलं प्रीतये कस्य न स्यात्'? इत्यादि।

नित्यं प्राक्पदसंबन्धा इति किम्?। अन्येषां पूर्वपदान्तवद्भावो मा भूत्। तद् यथा—

'मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः' (मे. सं. १।३८)

तथा—'इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे' (मे. सं. १।५) इत्यादि।

'परेण नित्यसंबन्धाः प्रादयश्च परादिवत्'। तेभ्यः परा यतिर्न भवतीत्यर्थः। तत्रोदाहरणम्—

'दुःखं मे प्र—क्षिपति हृदये दुःसहस्त्वद्वियोगः' इत्यादि।

परेण नित्यसंबन्धा इति किम्?। कर्मप्रवचनीयेभ्यः परापि यतिर्यथा स्यात् इति, तत्रोदाहरणम्—

'प्रियं प्रतिस्फुरत्पादे मन्दायन्ते नखत्विषः।'
'श्रेयांसि बहुविघ्नानि भवन्ति महतामपि' इत्यादि।

अयं तु चादीनां प्रादीनां चैकाक्षरत्वेनैकाक्षराणामेव पादान्ते यतावन्तादिवद्भाव इष्यते, न त्वनेकाक्षराणां पदमध्ये यतौ। तत्र हि पदमध्येऽपि चामीकरादिष्विव यतेरभ्यनुज्ञातत्वात्। तत्र चादीनामुदाहरणम्—

'प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्' (मे. सं. २।२८) इति।

प्रादीनामुदाहरणम्—

'द्वारारूढप्रमोदं हसितमिव परिस्पष्टमासां सखीभिः' इत्यादि ।

न पर्यन्तोऽस्ति वृत्तानां प्रस्तारगणनाविधौ[2] ।
पूर्वाचार्यकृतैर्[3]ाभिख्याचिह्नं किंचिदिहोच्यते ॥

( उक्थायाम् ) एकाक्षरायाम्—

**श्रीच्छन्दः (१।१)—श्री** सा ।
जं गो ॥ प्रा० पिं० सू० २।१ ॥

( अत्युक्थायाम् ) द्व्यक्षरायाम्—

**कामच्छन्दः (२।१)**—दीहा वीहा ।
**कामो** रामो ॥ प्रा० पिं० सू० २।४ ॥
( '**स्त्री**' इति नामान्तरं **कामस्य** च्छन्दःकौस्तुभादौ ।)

**महीच्छन्दः (२।२)**—लगो जहीं ।
**मही** कही ॥ प्रा० पिं० सू० २।८ ॥

**सारुच्छन्दः (२।३)—सारु** एह ।
गो वि रेह ॥ प्रा० पिं० सू० २।१० ॥
( **चारु**—वृत्तचन्द्रिकायाम् )

**मधुच्छन्दः (२।४)**—लहु जुअ ।
**महु** धुअ ॥ प्रा० पिं० सू० २।६ ॥

( मध्यायाम्[4] ) त्र्यक्षरायाम्—

**तालीच्छन्दः (३।१)—ताली** ए जाणीए ।
गो कण्णो तिब्बण्णो ॥ प्रा० पिं० सू० २।१२ ॥
( 'नारी'—वृ० र० )

**शशीच्छन्दः (३।२)—ससी** यो जणीयो ।
फणींदो भणीओ ॥ प्रा० पिं० सू० २।१६ ॥
( 'केसा'—वृ० र० )

---

१. 'परिस्पष्टमाशासखीभिः' इति क. मु. पुस्तके । २. प्रस्तारगणना त्वष्टमाध्याये प्रपञ्चयिष्यते । अत्र तु श्रीमता भगवता पिङ्गलाचार्येण गायत्र्याद्युत्कृतिपर्यन्तच्छन्दोऽनुसारीणि वृत्तानि, दण्डकजातयश्च प्रदर्शिताः, न तूक्थादिच्छन्दःपञ्चकानुसारीणि वृत्तानि । तानि च्छन्दांसि प्राकृतपिङ्गलच्छन्दःकौस्तुभप्रभृतिग्रन्थोपलब्धानि प्रदर्श्यन्ते । यथा—
३. 'पूर्वाचार्यकृतं वृत्तचिह्नं' इति क. मु. पुस्तके । ४. 'प्राकृतेष्वष्टभिर्मायै**र्गोकर्णा**' च '**शशिप्रभा**' । '**रमणं**' चैव '**पाञ्चालं**' '**मृगेन्द्र**'श्चैव '**मन्दरः**' ॥ '**कमलं**' चैव '**संज्ञाख्यं**' वृत्ताष्टकमुदीरितम् ॥

**प्रियाच्छन्दः (३।३)**—हे **पिए** लेक्खिए ।
अक्खरे तिण्णि रे ॥ प्रा० पिं० सू० २।१४ ॥
( **'मृगी'** इति छन्दःकौस्तुभादौ ।)

**रमणच्छन्दः (३।४)**—सगणो **रमणो** ।
सहिओ कहिओ ॥ प्रा० पिं० सू० २।१८ ॥

**पञ्चालच्छन्दः (३।५)**—तक्कार जं दिट्ठ ।
**पंचाल** उक्किट्ठ ॥ प्रा० पिं० सू० २।२० ॥

**मृगेन्द्रच्छन्दः (३।६)**—णरेंद ठवेहु ।
**मिएंद** करेहु ॥ प्रा० पिं० सू० २।२२ ॥

**मन्दरच्छन्दः (३।७)**—भो जहि सो सहि ।
**मंदर** सुंदर ॥ प्रा० पिं० सू० २।२४ ॥

**कमलच्छन्दः (३।८)**—**कमल** पभण ।
सुमुहि णगण ॥ प्रा० पिं० सू० २।२६ ॥

( प्रतिष्ठायाम् ) चतुरक्षरायाम्—

**तीर्णाच्छन्दः (४।१)**—चारी हारा इट्ठा कारा ।
वीए कण्णा जाणे **तिण्णा** ॥ प्रा० पिं० सू० २।२८ ॥

**व्रीडाच्छन्दः (४।२)**—यगौ **व्रीडा** । वृ० र० ३।७

**समृद्धिच्छन्दः (४।३)**—गौं **समृद्धिः** । वृ० र० ३।११

**सुमतिच्छन्दः (४।४)**—**सुमतिः** स्गौ । वृ० र० ३।१०

**लासिनीच्छन्दः (४।६)**—ज्ग **लासिनी** । वृ० र० ३।८
( 'नगाणिका'–प्रा० पिं० सू० २।३२ )

**सुमुखीच्छन्दः (४।७)**—भ्गौ **सुमुखी** । वृ० र० ३।९

**धारीच्छन्दः (४।११)**—वण्ण चारि मुद्धि **धारि** ।
विण्णि हार दो स सार ॥ प्रा० पिं० सू० २।३० ॥
( 'धारि'–वा० भू० )

( सुप्रतिष्ठायाम् ) पञ्चाक्षरायाम्—

**संमोहाच्छन्दः (५।१)**—**संमोहा**रूअं दिट्ठो सो भूअं ।
बे कण्णा हारा भूअत्तासारा ॥ प्रा० पिं० सू० २।३४ ॥
( **'पङ्क्तिः'** इति नामान्तरं **संमोहा**ख्यच्छन्दसः )
( 'कन्या'–ग० पु०, वृ० र० । 'कीर्णा'–वृ० चं० )

तत्र गायत्रे छन्दसि वृत्तम्—

## तनुमध्या त्यौ ॥ ६ । २ ॥

यस्य पादे तकार (ऽऽ।) यकारौ (।ऽऽ), तत् 'तनुमध्या' नाम वृत्तम्। तत्रोदाहरणम्—

तगणः　यगणः　तगणः　यगणः

ऽ · ऽ · ।—। · ऽ · ऽ　ऽ · ऽ · ।—। · ऽ · ऽ

ध—न्या त्रि—षु नी—चा; क—न्या त—नु—म—ध्या ।

---

**हारीच्छन्दः** (५।५)—आईहि अंते हारे सुजुत्ते ।
मज्झेक्कगंधो हारी अछंदो ॥ प्रा० पिं० सू० २।३६॥

('**हारीतबन्ध**' इति नामान्तरं **हारी**च्छन्दसः)

**हंसच्छन्दः** (५।७)—पिंगलदिट्ठो भ हइ सिट्ठो ।
कण्णइ दिज्जो **हंस** मुणिज्जो ॥ प्रा० पिं० सू० २।३८ ॥

('**पङ्क्तिः**' इति नामान्तरं **हंसस्य** छन्दःकौस्तुभादौ, छन्दोमञ्जर्यां न.)

**विदग्धकच्छन्दः** (५।११)—'रो लगौ यदा स्याद्विदग्धकः' ।

**प्रियाच्छन्दः** (५।१२)—'सलगैः **प्रिया**' इत्यधिकं छन्दःकौस्तुभवृत्तरत्नाकरादावुपलभ्यते, न प्राकृतपिङ्गले ॥

**यमकच्छन्दः** (५।३२)—सुपिअगण सरसुगुण ।
सरह गण **जमअ** भण ॥ प्रा० पिं० सू० २।४० ॥

१. षडक्षरचतुष्पादार्षगायत्रीच्छन्दसः प्रस्तारे क्रियमाणे चतुःषष्टिभेदा जायन्ते तत्र त्रयोदशोऽयं भेदः, प्राकृतपिङ्गले नायं वर्णितः.

अत्र त्वेकमेव वृत्तं दर्शितम्, प्राकृतपिङ्गलच्छन्दःकौस्तुभादावुपलब्धानि वृत्तानि प्रदर्श्यन्ते । यथा—

**शेषाच्छन्दः** (६।१)—'बाराहा मत्ता जं कण्णा तीआ होतं ।
हारा छक्का बंधो **सेसा** राआ छंदो' ॥
प्रा० पिं० सू० २।४२ ॥

('**शेषराज**' इत्यपि नामान्तरं रविदासमते, '**विद्युल्लेखा**' इति च नामान्तरं वृत्तरत्नाकरादौ **शेषाख्य**च्छन्दसः) ।

**शङ्खनारीच्छन्दः** (६।१०)—'खडावण्णबद्धो भुअंगापअद्धो ।
पआ पाअ चारी कही **संखणारी** ॥'
प्रा० पिं० सू० २।५३ ॥

('**सोमराजी, शङ्खधारी**' इति नामान्तरे छन्दःकौस्तुभादौ **शङ्खनार्याख्य**च्छन्दसः) ।

तगणः — यगणः — तगणः — यगणः

ऽ ऽ । — । ऽ ऽ ऽ ऽ । — । ऽ ऽ
श्रो–णी–स्त—न–गु–र्वी[1]; उ–र्वी–प–ति–भो–ग्या ॥

**अत्र तु पादान्ते विशेषेण विश्रामः कर्तव्य इत्याम्नायः ॥**

( उँष्णिहि )

---

**चतुरंसाच्छन्दः (६।१६)**—'ठउ **चउरंसा** फणिवइभासा ।
दिअवरकण्णो फुल रसवण्णो ॥'
प्रा० पिं० सू० २।४८ ॥

(**'शशिवदना, चण्डरसा, चतुर्वर्णा'** इति नामान्तराणि छन्दःकौस्तुभादौ **चतुरंसा**ख्यच्छन्दसः । गारुडे ( पू० खं० २०९।२ ) तु **'बालललिता'** इति ।

**विज्जोहाच्छन्दः (६।१९)**—'अक्खरा जे छआ पाअ पाअ ट्ठिआ ।
मत्त पंच दुणा विण्णि **जोहा**गणा' ॥
प्रा० पिं० सू० २।४६ ॥

( **'विमोहा'** इति नामान्तरं वाणीभूषणे, **'वल्लरी'** इति छन्दःकौस्तुभादौ **विज्जोहा**ख्यच्छन्दसः ) ।

**अनघच्छन्दः (६।२५)**—'मो सश्चेदनघः ॥' अ० वृ० र०

**तिलकाच्छन्दः (६।२८)**—'पिअ **तिल्ल** धुअं सगणेण जुअं ।
छअ वण्ण पओ कल अट्ठ धओ ॥'
प्रा० पिं० सू० २।४४ ॥

( रविदासमते **'डिल्ला, भद्र'** इति नामान्तरे **तिलका**च्छन्दसः ) ।

**वसुमतीच्छन्दः (६।२९)**—'त्सौ चे**द्वसुमती'** इत्यधिकं छन्दःकौस्तुभादौ ।

**मन्थानच्छन्दः (६।३७)**—'कामावआरेण अद्धेण पाएण ।
मत्ता दहा सुद्ध **मंथाण** सो मुद्ध ॥'
प्रा० पिं० सू० २।५१ ॥

**मालतीच्छन्दः (६।४६)**—'धअं सरवीअ मणीगुण तीय ।
दई लहु अंत स **मालइ** कंत ॥'
प्रा० पिं० सू० २।५५ ॥

( **'सुमालतिका'** इति नामान्तरं वाणीभूषणे **मालत्याख्य**च्छन्दसः ) ।

**दमनकच्छन्दः (६।६४)**—'दिअवर किअ भणहि सुपिअ ।
**दमणअ** गुणि फणिवइ भणि ॥'
प्रा० पिं० सू० २।५७ ॥

१. 'इकोऽसवर्णे—' ( पा० सू० ६।१।१२७ ) इति प्रकृतिभावः । 'भूयात् पतिभोग्या' इति पाठः. २. 'अत्र त्वेकमेव वृत्तं दर्शितम्, प्राकृतपिङ्गलच्छन्दःकौस्तुभप्रभृतिग्रन्थोपलब्धानि वृत्तानि प्रदर्श्यन्ते यथा—

## कुमारललिता ज्सौ ग् ॥ ६ । ३ ॥

यस्य पादे जकार (।ऽ।) सकारौ (।।ऽ) गकार (ऽ) श्च तद्वृत्तं 'कुमारललिता' नाम। त्रिभिश्चतुर्भिश्च यत्युपदेशं वर्णयन्ति। तत्रोदाहरणम्—

जगणः सगणः गु० जगणः सगणः गु०
।· ऽ· ।—।· ।· ऽ—ऽ ।· ऽ· ।—।· ।· ऽ—ऽ
(३) (४) (३) (४)
य–दी–य,–र–ति–भू–मौ वि–भा–ति,–ति–ल–का–ङ्कः ।

जगणः सगणः गु० जगणः सगणः गु०
।· ऽ· ।—।· ।· ऽ—ऽ ।· ऽ· ।—।· ।· ऽ—ऽ
(३) (४) (३) (४)
कु–मा–र,–ल–लि–ता–सौ कु–ला–न्य,–ट–ति ना–री ॥

अत्र केचिद् द्वाभ्यां(२) पञ्चभि(५) श्च यतिमिच्छन्ति। तत्रोदाहरणम्—

जगणः सगणः गु० जगणः सगणः गु०
।·ऽ · ।—।·।·ऽ—ऽ ।· ऽ · ।—।·।· ऽ ऽ
इ–दं(२),व–द–न–प–द्मं(५) प्रि–ये(२),त–व वि–भा–ति(५) ।

जगणः सगणः गु० जगणः सगणः गु०
।·ऽ · ।—।·।·ऽ—ऽ ।· ऽ · ।—।·।· ऽ ऽ
इ–ह(२),व्र–ज–ति मु–ग्धे(५) म–नो(२),भ्र–म–र–तां मे(५) ॥

---

१. उक्त सप्ताक्षरप्रस्तारस्य त्रिंशत्तमो (३०) भेदः **'कुमारललिता'** इति प्रसिद्धः।
**शीर्षाच्छन्दः (७।१)**—'सत्ता दीहा जाणेही कण्णा ती गो माणेही।
चाउद्दाहा मत्ताणा **सीसारूअं** छंदाणा ॥'
प्रा० पिं० सू० २।६५ ॥
**हंसमालाच्छन्दः (७।२०)**—'सरगा **हंसमाला** ॥'
**मदलेखाच्छन्दः (७।२५)**—'म्सौ गः स्यात् **मदलेखा** ॥'
**समानिकाच्छन्दः (७।४३)**—'चारि हार किज्जही तिण्णि गंध दिज्जही।
सत्त अक्खरा ठिआ सा **समाणिआ पिआ**' ॥
प्रा० पिं० सू० २।५९ ॥
**चूडामणिच्छन्दः (७।५३)**—'**चूडामणि**स्तभगाः ॥'
**मधुमतीच्छन्दः (७।६०)**—'ननगा **मधुमती** ॥'
**करहञ्चीच्छन्दः (७।९६)**—'चरण गण विप्प पढम लइ थप्प।
जगण तसु अंत मुणइ **करहंच** ॥'
प्रा० पिं० सू० २।६३ ॥

( अनुष्टुभि )

## माणवकाक्रीडितकं भ्तौ ल्गौ ॥ ६ । ४ ॥

यस्य पादे भकार(ऽ।।)तकारौ (ऽऽ।) लकार(।)गकारौ (ऽ) च, तत् 'माणवकाक्रीडितकं' नाम वृत्तम् ॥ तत्रोदाहरणम्—

भगणः तगणः ल० गु० भगणः तगणः ल० गु०

ऽ·।·।—ऽ · ऽ·।—।—ऽ ऽ· ।·।—ऽ — ऽ·।—।—ऽ

माणव–का(४),क्रीडि–त–कं(४) यः कुरु–ते(४),वृद्ध–व–याः ।

भगणः तगणः ल० गु० भगणः तगणः ल० गु०

ऽ·।·।—ऽ · ऽ·।—।·ऽ ऽ·।·।—ऽ · ऽ·।—।—ऽ

हास्यम–सौ(४),याति ज–ने(४) भिक्षुरि–व(४),क्षीच–प–लः ॥

अत्र चतुर्भि(४)श्चतुर्भिश्च यतिरित्याम्नायः ॥

---

**सुवासच्छन्दः (७।११२)**—'भणउ **सुवासउ** लहु सुविसेसउ ।
रचि चतुमत्तह भगणइ अंतह ॥'
प्रा० पिं० सू० २।६१ ॥

१. 'अत्र तु चत्वार्येव वृत्तानि दर्शितानि, परंतु प्राकृतपिङ्गलच्छन्दःकौस्तुभप्रभृतिच्छन्दोग्रन्थेष्वन्यान्यपि छन्दांस्युपलभ्यन्ते ।' यथा—

**पद्ममालाच्छन्दः (८।१९)**—'**पद्ममाला** च रौ गौ' ( छन्दःकौस्तुभादौ ॥)

**मोदच्छन्दः (८।५२)**—'स भगा गो यदि **मोदः** ।' अ० वृ० र०

**तुङ्गाच्छन्दः (८।६४)**—'तरलणअणि **तुंगो** पढमगणसुरंगो ।
णगणजुअलबद्धो गुरुजुअलपसिद्धो ॥'
प्रा० पिं० सू० २।७३ ॥

**मृत्युञ्जयच्छन्दः (८।६९)**—'तो मोगला **मृत्युञ्जयः** ।' अ० वृ० र०

**लताच्छन्दः (८।७५)**—'रौ यलौ गुरुः स्याल्लता' ( क्वचित् )

**कमलच्छन्दः (८।९६)**—'पढम गण विप्पओ विहु तह णरेंदओ ।
गुरुसहित अंतिणा **कमल** एम भत्तिणा ॥'
प्रा० पिं० सू० २।७५ ॥

**गजगतिच्छन्दः (८।१२०)**—'नभलगा **गजगतिः**' ( छन्दोमञ्जर्याम् ॥ )

**सुविलासाच्छन्दः (८।१३२)**—'**सुविलासा** सरौ ग्लौ हि(छन्दःकौस्तुभादौ ॥)

**सुचन्द्राभाच्छन्दः (८।१४६)**—'**सुचन्द्राभा** य्रौ ग्लौ'(छन्दःकौस्तुभादौ ॥)

**अचलच्छन्दः (८।२५६)**—'वसुलमचलमिति' ( क्वचित् )

२. उक्ताष्टाक्षरप्रस्तारस्य त्र्यधिकशततमोऽयं (१०३) भेदो **'माणवकाक्रीडितकं'** इति प्रसिद्धः । ३. **'माणवकम्'** इति नामान्तरं छन्दःकौस्तुभवृत्तरत्नाकरादौ ॥

## चित्रपदा भौ गौ ॥ ६ । ५ ॥

यस्य पादे भकारौ (ऽ॥.ऽ॥) गकारौ (ऽ.ऽ) च भवतस्तत् 'चित्रपदा' नाम वृत्तम् ।
तत्रोदाहरणम्—

भगणः भगणः गु० गु० भगणः भगणः गु० गु०
ऽ·।·।—ऽ·।·।—ऽ·ऽ ऽ·।·।—ऽ·।·।—ऽ—ऽ
यस्य मु—खे प्रिय—वा—णी चेतसि सज्जन—ता च ।
भगणः भगणः गु० गु० भगणः भगणः गु० गु०
ऽ·।·।—ऽ·।·।—ऽ—ऽ ऽ·।·।—ऽ·।·।—ऽ—ऽ
चित्रप—दापि च लक्ष्मी—स्तं पुरु—षं न ज—हा—ति ॥

अत्र पादान्ते यतिः ॥

## विद्युन्माला मौ गौ ॥ ६ । ६ ॥

यस्य पादे मकारौ (ऽऽऽ.ऽऽऽ) गकारौ (ऽ.ऽ) च तद् 'विद्युन्माला' नाम वृत्तम् ॥
तत्रोदाहरणम्—

मगणः मगणः गु० गु०
ऽ·ऽ·ऽ—ऽ·ऽ·ऽ ऽ—ऽ
विद्युन्मा—ला(४),लोलान् भो—मान्
मगणः मगणः गु० गु०
ऽ·ऽ·ऽ—ऽ·ऽ·ऽ—ऽ—ऽ
मुक्त्वा मु—क्तौ(४), यत्नं कु—र्यात् ।
मगणः मगणः गु० गु०
ऽ·ऽ·ऽ—ऽ·ऽ·ऽ—ऽ—ऽ
ध्यानोत्प—न्नं(४), निःसा—मा—न्यं

---

१. उक्ताष्टाक्षरप्रस्तारभेदानां मध्ये पञ्चपञ्चाशत्तमो (५५) भेदश्चित्रपदेति नाम्ना प्रसिद्धः । **'वितानम्'** इति नामान्तरं **चित्रपदायाः** 'वितानमन्यत्' पिं० सू० ५।८ इति रीत्या । २. उक्ताष्टाक्षरप्रस्तारे सर्वगुर्वात्मक आद्यो भेदो **'विद्युन्माला'** इति नाम्ना प्रसिद्धः । **'विज्जूमाला** मत्ता सोला पाए कण्णा चारी लोला । एअंरूअं चारी पाआ भत्ती खत्ती विज्जू राआ ॥' (प्रा० पिं० सू० २।६७) **विद्युल्लेखा** इति नामान्तरम् । एतदतिरिक्तानि **'समानिका-प्रमाणिका-वितान-नाराचक'**-प्रभृतीनि च्छन्दांसि पञ्चमाध्याये समालोच्यानि ।

मगणः मगणः गु० गु०

ऽ॰ऽ॰ऽ ऽ॰ऽ॰ऽ—ऽ—ऽ

सौख्यं भो-(४), कुं यद्या-का-ङ्क्षेत् ॥

अत्र चतुर्भि (४) श्चतुर्भिश्च यतिरित्याम्नायः ॥

## [हंसरुतं म्नौ गौ ॥ ६ । ७ ॥]

यस्य पादे मगण (ऽऽऽ) नगणौ (।।।) गकारौ (ऽ.ऽ) च भवतस्तद् 'हंसरुतं' नाम ॥ तत्रोदाहरणम्—

मगणः नगणः गु० गु० मगणः नगणः गु० गु०

ऽ॰ऽ॰ऽ—।॰।॰।—ऽ—ऽ ऽ॰ऽ॰ऽ—।॰।॰।—ऽ—ऽ

लावण्यं वपुषि का—न्ते लोकाती—तमति—सौ—ख्यम् ।

मगणः नगणः गु० गु० मगणः नगणः गु० गु०

ऽ॰ऽ॰ऽ—।॰।॰।—ऽ—ऽ ऽ॰ऽ॰ऽ—।॰।॰।—ऽ—ऽ

नैष्ठुर्यं मनसि य—त्ते द्वैविध्यं किमिति ध—त्से ? ॥

(वृहत्याम्)

---

१. उक्ताष्टाक्षरप्रस्तारभेदेषु सप्तपञ्चाशत्तमो भेदो (५७) '**हंसरुतं**' इति नाम्ना प्रसिद्धः- लिखितपुस्तकेऽस्य सूत्रस्य नवमत्वेन, भुजगशिशुसृतालक्षणात्मकस्याग्रिमसूत्रस्य चाष्टमत्वेन निर्देशः। २. अत्र तु द्वावेव भेदौ संदर्शितौ, परन्तु **प्राकृतपिङ्गलच्छन्दःकौस्तुभ**प्रभृतिग्रन्थेषूपलब्धा भेदाः प्रकाश्यन्ते यथा—

**रूपामालीच्छन्दः (९।१)**—'णाआराआ जप्पे सारा ए चारी कण्णा हंते हारा ए।
अट्ठादाहा मत्ता पाआए **रूआमाली** छंदा जंपीए ॥
प्रा० २।८९ ॥

'**रूपामाला**' '**कर्पूरम्**' इति नामान्तरे **रूपामाल्याः** क्वचित् ॥

**स्निग्धाच्छन्दः (९।७)**—'**स्निग्धा** स्याद्ममा यत्र हराननयुगैर्यतिः।' (श्रीकृष्णः)

**बिम्बच्छन्दः (९।९६)**—'रइअ फणि **बिंब** एसो गुरुजुअल सव्वसेसो।
सिरहि दिअ मज्झ राओ गुणह गुणि एसहाओ ॥'
प्रा० २।८५ ॥

'**बिम्बा**' इति नामान्तरं क्वचित्। **वाणीभूषणे** तु गणभेदेन **बिम्बलक्षणमुक्तम्**।

**महालक्ष्मीच्छन्दः (९।१४७)**—
'दिट्ठ जोहा गणा तिण्णिआ णाअराएण जा विण्णिआ।
मासअद्धेण पाअ ट्ठिअं जाण मुद्धे **महालच्छिअं** ॥'
प्रा० २।७७ ॥ '**वीरलक्ष्मी**' नामान्तरमस्य।

## भुजगशिशुसृता नौ मः ॥ ६ । ७ ॥

यस्य पादे नकारौ (।।।.।।।) मकार (ऽऽऽ) श्च भवति, तत् 'भुजगशिशुसृता' नाम वृत्तम् ॥ तत्रोदाहरणम्—

नगणः नगणः मगणः नगणः नगणः मगणः

।·।·।—।·।·।—ऽ · ऽ · ऽ ।·।·।—।·।·।—ऽ · ऽ · ऽ

इयम–धिकत–र(७),रम्या विकच—कुवल—य(७),–श्यामा ।

---

**कुसुमिताच्छन्दः (९।१५२)—'कुसुमिता** नरौ रो यदा ।' क्वचित् ।

**भुजङ्गसंगताच्छन्दः (९।१७२)**—'सजरैर्**भुजङ्गसंगता** ।' छन्दःकौस्तुभे ।

**भद्रिकाच्छन्दः (९।१८७)—'भद्रिका** भवति रो नरौ' वृत्तरत्नाकरे.

**मणिमध्यच्छन्दः (९।१९९)**—'स्यान्**मणिमध्यं** चेद्भमसाः ।' छन्दःकौस्तुभे । '**मणिबन्ध**' इति श्रुतबोधे ।

**सारङ्गिकाच्छन्दः (९।२०८)**—

'दिअवर कण्णो सअणं पअ पअ मत्तागणणं ।
सुरमुणिमत्ता लहिअं सहि **सरगिक्का** कहिअं ॥'
प्रा० २।७९ ॥

'**सारसा, शार्ङ्गिका**' इत्यपि नामान्तरे **सारङ्गिकायाः** क्वचित् ।

**पाइत्ताच्छन्दः (९।२४१)**—'कुंतीपुत्ताजुअ लहिअं तीए विप्पो धुअ कहिअं ।
अंते हारो जह जणिअं **पाइत्ता**रू फणिभणिअं ॥
प्रा० २।८१ ॥

'**कुसुमवती, 'पवित्रा,' 'पारन्तीयम्**' इति नामान्तराणि **पाइत्ता**ख्यस्य ।

**तोमरच्छन्दः (९।३४४)**—'जसु आइ हत्थ विआण तह ब पओहर जाण ।
पभणेइ णाअणरिंद इम माणु **तोमर**छंद ॥'
प्रा० २।८७ ॥

**कमलच्छन्दः (९।५१२)**—'सरसगणरमणिआ दिअगणजुअ पलिआ ।
गुरु धरिअ पइपउ दहकलअ **कमलउ** ॥'
प्रा० २।८३ ॥

'**कमला**' इत्यपि नामान्तरं **कमलस्य** क्वचित् ।

१. चतुष्पादार्ष**बृहती**पादघटकीभूतानां नवाक्षराणां प्रस्तारे क्रियमाणे द्वादशाधिकपञ्चशतभेदा (५१२) भवन्ति । तत्र (६४) चतुःषष्ठितमोऽयं भेदो '**भुजगशिशुसृता**' इति नाम्ना प्रसिद्धः, अस्या एव '**भुजगशिशुभृता**', '**भुजगशिशुयुता**', '**भुजगशिशुवृता**', '**भुजगशिशुसुता**' इति नामान्तराणि छन्दःकौस्तुभादौ लभ्यन्ते । गारुडे तु '**शिशुभृता**' इत्येव, 'नौ मः **शिशुभृता** भवेत् ।' (१।२०९।५) इति ।

नगणः नगणः मगणः नगणः नगणः मगणः

।·।·।—।·।·।—ऽ · ऽ·ऽ ।·।·।—।·।·।—ऽ · ऽ·ऽ

रमय—ति हृद—यं(७),यूनां भुजग—शिशुसृ—ता(७),नारी ॥

वक्रगतिरित्यर्थः ॥ शिशुशब्दस्य सार्थकत्वात् । अन्यैरप्युक्तम्—

'अभ्यस्यता नु तरणीगतिवक्रभावा-

नुन्मूलिताः फणिशिशोर्भवतापराधाः ।' इति

**सप्तभिर्द्वाभ्यां च यतिरित्याम्नायः ॥**

## हलमुखीर्नौ स् ॥ ६ । ८ ॥

यस्य पादे रेफ (ऽ।ऽ) नकार (।।।) सकारा (।।ऽ) भवन्ति तद्वृत्तं 'हलमुखी' । तत्रोदाहरणम्—

रगणः नगणः सगणः रगणः नगणः सगणः

ऽ·।·ऽ — ।·।·।—।·।·ऽ ऽ·।·ऽ ।·।·। ।·।·ऽ

गण्डयो(३),-रतिश-यकृशं(६) यन्मुखं(३), प्रकट-दशनम् (६) ॥

रगणः नगणः सगणः रगणः नगणः सगणः

ऽ·।·ऽ — ।·।·।—।·।·ऽ ऽ·।·ऽ — ।·।·।—।·।·ऽ

आयतं(३), कलह-निरतं(६) तां स्त्रियं(३), त्यज ह-लमुखीम् (६) ॥

**त्रिभिः षड्भिश्च यतिरित्याम्नायः ।**

( पङ्क्तौ )

---

१. उक्तनवाक्षरप्रस्तारस्यैकपञ्चाशदधिकद्विशततमोऽयं भेदो (२५१) **'हलमुखी'**ति नाम्ना ख्यातः । कलिकातामुद्रिते प्राचीनपुस्तके हंसरुतलक्षणसूत्रस्यास्मात् सूत्रात् प्रथमं निर्देशः । "हलमुखीति संज्ञात्वेऽपि पिप्पल्यादेराकृतिगणत्वात् ङीप् भवतीति 'नखमुखात् संज्ञायाम्-' (पा० सू० ४।१।५८) इत्यस्य न प्रवृत्तिः ।"-इति वेङ्कटाचलसूरिः । २.—**पङ्क्तिच्छन्दः**पादघटकीभूतानां दशाक्षराणां प्रस्तारे क्रियमाणे चतुर्विंशत्यधिकसहस्रभेदा (१०२४) जायन्ते । तेष्वत्र षडेव भेदाः प्रदर्शिताः सन्ति, परंतु प्राकृतपिङ्गलच्छन्दःकौस्तुभादिग्रन्थेषूपलभ्यमाना भेदा अपि प्रदर्श्यन्ते । यथा—

**कलगीतच्छन्दः (१०।१००)—'कलगीतं** सतयगाः शरैर्बाणैर्यतिर्भवेत् ।' मं० म० ।

**आन्दोलिकाच्छन्दः (१०।१२९)—'आन्दोलिका** ततरगाः सायकैः सायकैर्यतिः ।' मं० म० ॥

**त्रयीच्छन्दः (१०।१४७)—'रत्नयश्चेत्त्रयी**नामकं गः ।' अ० वृ० र० ॥

**दीपकमालाच्छन्दः (१०।३२७)—'दीपकमाला** भो मजौ गुरुः ।' क्वचित् ।

## शुद्धविराड् म्सौ ज्गौ ॥ ६ । ९ ॥

यस्य पादे मकार (ऽऽऽ) सकार (॥ऽ) जकार (।ऽ।) गकारा (ऽ) भवन्ति तद्वृत्तं 'शुद्धविराड्' नाम ॥ तत्रोदाहरणम्—

---

**पथ्याच्छन्दः (१०।३३१)**—'रो यजौ च **पथ्या** गुरूत्तरा ।' **'लोचनं'** इति क्वचित् । **'मरालिका'** इति नामान्तरं 'शिवाननशरैर्यतिः' इति विशेषश्च कृष्णीये ।

**मनोरमाच्छन्दः (१०।३४४)**—'नरजगैर्भवेन्मनोरमा ।' छन्दःकौस्तुभे । 'शास्त्रसागरैः ।' इति यतिरप्युक्तः कृष्णीये ।

**कमलाच्छन्दः (१०।३६४)**—'**कमला** स्यात्सज्ञगगा विच्छिन्ना सायकैः शरैः ।' मं० म० ॥

कमलाया एव **'संयुता'** इति नाम प्राकृतपिङ्गले ।

**सुषमाच्छन्दः (१०।३९७)**—

'कण्णो पढमो हत्थो जुअलो कण्णो तिअलो हत्थो पअलो ।
सोला कलआ छक्का वलआ एसा **सुसमा** दिट्ठासुसमा ॥'
प्रा० २।९७ ॥

**माणिक्यमालाच्छन्दः (१०।४००)**—'न्यभा **माणिक्यमाला** गान्तुभिः सायकैर्यतिः ।' मं० म० ॥

**सारवतीच्छन्दः (१०।४३९)**—

'दीह लहूजुअ दीहलहू **सारवई** धुअ छंद कहू ।
अंत पओहर ठानु धआ चोदहमत्तविरामकआ ॥'
प्रा० २।९५ ॥

**'हारवती'** इत्यपि नामान्तरं **सारवत्याः** ।

**अमृतगतिच्छन्दः (१०।४९६)**—

'दिअवर हार पअलिआ पुण वि तह ट्ठिअ करिआ ।
वसुलहु वे गुरुसहिआ **अमिअगइ**, धुअ कहिआ ॥'
प्रा० २।९९ ॥

**'त्वरितगतिः, अमृततिलका, अमृतगतिका'** इति नामान्तराणि **अमृतगतेः** । **'कुलटा'** इति कृष्णीये । 'कुलटा स्यान्नजनगाः पञ्चभिः पञ्चभिर्यतिः ।' इति विशेषश्च तत्र ।

**हंसीच्छन्दः (१०।४९७)**—'**हंसी** मभनगैः प्रोक्ता यतिर्वेदैर्गुहाननैः ।' कृष्णीये ।

**रञ्जिताच्छन्दः (१०।७४७)**—'**रञ्जिता** रजसा लो गो विरामः सायकर्तुभिः ।' मं० म० ॥

१. उक्तदशाक्षरप्रस्तारस्य पञ्चचत्वारिंशदुत्तरत्रिशततमोऽयं भेदः (३४५) **'शुद्धविराट्'** नाम्ना प्रसिद्धः । **'विराट्'** इत्यपि नामान्तरं क्वचित् ।

मगणः सगणः जगणः गु० मगणः सगणः जगणः गु०

ऽ·ऽ·ऽ—।·।·ऽ—।·ऽ·।—ऽ ऽ·ऽ·ऽ—।·।·ऽ—।·ऽ·।—ऽ

विश्वं ति–ष्ठति कु–क्षिकोट–रे वक्त्रे य–स्य सर–स्वती स–दा ।

मगणः सगणः जगणः गु० मगणः सगणः जगणः गु०

ऽ·ऽ·ऽ—।·।·ऽ—।·ऽ·।—ऽ ऽ·ऽ·ऽ—।·।·ऽ—।·ऽ·।—ऽ

अस्मद्वं–शपिता–महो गु–रुर् ब्रह्मा शु–द्धविराड् पुनातु नः ॥

अत्र पादान्ते यतिः ॥

## पणवो म्नौ यूगौ ॥ ६ । १० ॥

यस्य पादे मकार(ऽऽऽ)नकार(।।।)यकार(।ऽऽ)गकारा (ऽ) भवन्ति तद्वृत्तं 'पणवो' नाम ॥ तत्रोदाहरणम्—

मगणः नगणः यगणः गु० मगणः नगणः यगणः गु०

ऽ·ऽ·ऽ—।·।·।—।·ऽ·ऽ—ऽ ऽ·ऽ·ऽ—।·।·।—।·ऽ·ऽ—ऽ

मीमांसा–रस(५),–म–मृतं पी–त्वा शास्त्रोक्तिः कटु(५),–रि–तरा भा–ति ।

मगणः नगणः यगणः गु० मगणः नगणः यगणः गु०

ऽ·ऽ·ऽ—।·।·।—।·ऽ·ऽ—ऽ ऽ·ऽ·ऽ—।·।·।—।·ऽ·ऽ—ऽ

एवं सं–सदि(५),–वि–दुषां म–ध्ये जल्पामो जय(५),–प–णबन्ध–त्वात् ॥

अत्र पञ्चभिः पञ्चभिर्यतिरित्याम्नायः ॥

## रुक्मवती भ्मौ स्गौ ॥ ६ । ११ ॥

यस्य पादे भकार(ऽ।।)मकार(ऽऽऽ)सकार (।।ऽ)गकारा (ऽ) भवन्ति तद्वृत्तं 'रुक्मवती' नाम ॥ तत्रोदाहरणम्—

भगणः मगणः सगणः गु० भगणः मगणः सगणः गु०

ऽ·।·।—ऽ·ऽ·ऽ—।·।·ऽ—ऽ ऽ·।·।—ऽ·ऽ·ऽ—।·।·ऽ—ऽ

पादत–ले पद्मो–दरगौ–रे राजति यस्या ऊ–र्ध्वगरे–खा ।

---

१. उक्तदशाक्षरप्रस्तारस्यैकविंशत्यधिकशततमोऽयं भेदः (१२१) **'पणव'** नाम्ना ख्यातः । **'प्रणव'** इत्यपि नामान्तरम् । २. उक्तदशाक्षरप्रस्तारस्य नवनवत्यधिकशततमोऽयं भेदो (१९९) **'रुक्मवती'** नाम्ना प्रसिद्धः । अस्या नामान्तराणि यथा—**'रूपवती'** इति छन्दोमञ्जरी, **'विलास'** क्वचित्, **'चम्पकमाला'** प्राकृतपिङ्गले । तल्लक्षणं यथा—

'हार ठवीजे काहलदुज्जे कुंतिअपुत्ता एगुरुजुत्ता ।

हत्थ करीजे हार ठवीजे चंपकमाला छंद कहीजे ॥' प्रा० २।९३ ॥

पादान्ते यतिः । 'शरैर्बाणैर्यतिर्भवेत्' । इति मन्दारमरन्दे ।

मगणः　भगणः　सगणः　गु०　मगणः　भगणः　सगणः　गु०

S·I·I—S·S·S—I·I·S—S　S·I·I—S·S·S—I·I·S—S

सा भव–ति स्त्री ल–क्षणयु—क्ता　रुक्मव–ती सौभा–ग्यवती　च ॥

## मयूरसारिणी जौ गौ ॥ ६ । १२ ॥

यस्य पादे रेफ (SIS) जकारौ (ISI) रेफ (SIS) गकारौ (S) च, तद्वृत्तं 'मयूरसारिणी' नाम ॥ तत्रोदाहरणम्—

रगणः　जगणः　रगणः　गु०　रगणः　जगणः　रगणः　गु०

S·I·S—I·S·I—S·I·S—S　S·I·S—I·S·I—S·I·S—S

या वना–न्तराण्यु–पै–ति र–न्तुं　या भुज–ङ्गभोग–सक्तचि–त्ता ।

रगणः　जगणः　रगणः　गु०　रगणः　जगणः　रगणः　गु०

S·I·S—I·S·I—S·I·S—S　S·I·S—I·S·I—S·I·S—S

या द्रुतं प्रयाति सन्नतां–सा　तां मयू–रसारि–णीं विज–ह्यात् ॥

अत्र पादान्ते यतिः ॥

## मत्ता म्भौ स्गौ ॥ ६ । १३ ॥

यस्य पादे मकार (SSS) भकार (SII) सकार (IIS) गकाराः (S), तद्वृत्तं 'मत्ता' नाम । तत्रोदाहरणम्—

मगणः　भगणः　सगणः　गु०　मगणः　भगणः　सगणः　गु०

S·S·S—S·I·I—I·I·S—S　S·S·S—S·I·I—I·I·S—S

स्वैरोल्ला–पैः(४),श्रुति–पटुपे–यैर्(६) गीतक्री–डा(४),सुर–तविशे–षैः(६) ।

मगणः　भगणः　सगणः　गु०　मगणः　भगणः　सगणः　गु०

S·S·S—S·I·I—I·I·S—S　S·S·S—S·I·I—I·I·S—S

वासागा–रे(४),कृत–सुरता–नां(६) मत्ता ना–री(४),रम–यति चे–तः(६) ॥

चतुर्भिः षड्भिश्च यतिरित्याम्नायः ॥

## उपस्थिता त्जौ ज्गौ ॥ ६ । १४ ॥

यस्य पादे तकार (SSI) जकारौ (ISI), जकार (ISI) गकारौ (S) च, तद्वृत्तं 'उपस्थिता' नाम । तत्रोदाहरणम्—

तगणः　जगणः　जगणः　गु०　तगणः　जगणः　जगणः　गु०

S·S·I—I·S·I—I·S·I—S　S·S·I—I·S·I—I·S·I—S

एषा(२),ज–गदेक–मनोह–रा(८) कन्या(२),क–नकोज्ज्व–लदीधि–तिः(८) ।

---

१. उक्तदशाक्षरप्रस्तारस्यैकसप्तत्यधिकशततमोऽयं भेदो 'मयूरसारिणीनाम्ना' प्रसिद्धः । २. उक्तदशाक्षरप्रस्तारस्यैकचत्वारिंशाधिकद्विशततमोऽयं भेदो (२४१) 'मत्ता' नाम्ना प्रसिद्धः । ३. उक्तदशाक्षरप्रस्तारस्य पञ्चषष्ठ्यधिकत्रिशततमोऽयं भेदः (३६५) 'उपस्थिता' नाम्ना प्रसिद्धः ।

तगणः जगणः जगणः गु० तगणः जगणः जगणः गु०

ऽ ऽ । । ऽ । । ऽ । ऽ ऽ ऽ । । ऽ । । ऽ । ऽ

लक्ष्मी(२),-रि-व दान-वसूद-नं(८) पुण्यै(२),-र्न-रनाथ-मुपस्थि-ता(८) ॥

अत्र द्वाभ्यामष्टाभिश्च यतिरित्याम्नायः ॥

(त्रिष्टुभि)

## इन्द्रवज्रा तौ जगौ ग् ॥ ६ । १५ ॥

१. त्रिष्टुप्पादघटकीभूतानामेकादशाक्षराणां प्रस्तारे कृतेऽष्टचत्वारिंशाधिका द्विसहस्रभेदा (२०४८) जायन्ते। तेषु द्वादश भेदा एवात्र निर्दिष्टाः, परं प्राकृतपिङ्गलच्छन्दःकौस्तुभप्रभृतिग्रन्थेषूपलब्धा बहुशो भेदाः प्रकाश्यन्ते यथा— २. उक्तैकादशाक्षरप्रस्तारस्य सप्तपञ्चाशदधिकत्रिशततमोऽयं (३५७) भेदः '**इन्द्रवज्रा**' इति नाम्ना प्रसिद्धः। एतल्लक्षणं प्राकृतपिङ्गले यथा—

'दिज्जे तआराजुअला पएसु अंते णरेंदो गुरुजुग्ग सेसं।
जंपे फणिंदा धुअ '**इंदवज्जा**' मत्ता दहा अट्ठ समा सुसज्जा ॥' (२।११५)

'हरास्यर्तुभिर्यतिः।' इति विशेषः कृष्णीये।

**मालतीच्छन्दः (११।१)**—'कुंतीपुत्ता पंचा दिण्णा जाणीआ
अंते कंता एक्का हारा माणीआ।
पाआ पाआ मत्ता दिट्ठा बाईसा
**मालत्ती**छंदा जंपंता णाएसा ॥'
प्रा० २।११३ ॥

**राजहंसीच्छन्दः (११।१५२)**—'**राजहंसी** नरौ रो गौ यतिः स्यादृतुसायकैः ॥' कृष्णीये.

**कुपुरुषजनिताच्छन्दः (११।१९२)**—'**कुपुरुषजनिता** ननौगौ गः ॥' वृ० र० परि०.

**उपस्थितच्छन्दः (११।२८६)**—'**उपस्थित**मिदं जः सस्तगौ गः ॥' वृत्तसारप्रभृतिषु.

'**शिखण्डितम्**' इति नामान्तरम् **उपस्थित**च्छन्दसः छन्दःकौस्तुभादौ.

**विध्वङ्कमालाच्छन्दः (११।२९३)**—'**विध्वङ्कमाला** भवेत्तौ तगौ गः ॥' वृ० र० परि०.

**चन्द्रिकाच्छन्दः (११।३२०)**—'ननगगलगगैश्चन्द्रिका स्यात् ॥' वृत्तसारे.

**मेरुरूपाच्छन्दः (११।३४५)**—'मः सो जो गुरुयुग्ममेरुरूपा।' वृत्तसारे.

**गुणाङ्गीच्छन्दः (११।३५३)**—'म्तौ ज्गौ गः स्यादब्धिनगैर्गुणाङ्गी ॥' अ०वृ०र०

**वन्दिताच्छन्दः (११।३६३)**—'नरगजा गुरुर्वन्दिता मता ॥' वृत्तसारे. '**कामिनी**', '**भद्रिका**' इति नामान्तरे।

यस्य पादे तकारौ (ऽऽ।.ऽऽ।) जकार (।ऽ।) गकारौ (ऽ) गकार (ऽ) श्च, तद्वृत्तं 'इन्द्रवंज्रा' नाम । तत्रोदाहरणम्—

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

ऽ ऽ । — ऽ ऽ । — । ऽ । — ऽ ऽ ऽ ऽ । — ऽ ऽ । — । ऽ । — ऽ — ऽ

यस्यां त्रि–षट्सप्त–ममक्ष–रं स्याद् ह्रस्वं सु–जङ्के ! न–वमं च त–द्वत् ।

---

**अनवसिताच्छन्दः (११।४००)—'अनवसिता** न्यौ भ्गौ गुरुरन्ते ॥' वृत्तरत्नाकरे.

**बन्धुच्छन्दः (११।४३९)—**

'णीलसरूअह एक करीजे तिण्णि भआगण तत्थ भणीजे ।
सोलह मत्तह पाअ ठवीजे दुग्गुरु अंतहि **बंधु** कहीजे ॥'
प्रा० २।१०१ ॥

**अनुकूलाच्छन्दः (११।४८७)—'स्यादनुकूला** भतनगगाश्चेत् ।'

अस्या एवानुकूलायाः **'मौक्तिकमाला'** इति वृत्तरत्नाकरे, **'श्रीः'** इति वृत्तसारे गारुडे च नामान्तरे । 'पञ्चभिः षड्भिरेव च' इति यतिरप्युक्ता गारुडे पू० २०९।१० ॥

**मन्दाकिनीच्छन्दः (११।५८६)**—'त्रिभिर्यैर्लगाभ्यां च **मन्दाकिनी** ॥' अ० वृ० र० ॥

**सुभद्रिकाच्छन्दः(११।७०४)**—'ननरलगुरुभिः **सुभद्रिका** ॥' छन्दःकौस्तुभादौ.

**उपचित्रच्छन्दः (११।७३२)—'उपचित्र**मिदं सससा लगौ ॥' वृत्तरत्नाकरे.

**नन्दिनीच्छन्दः (११।७४८)—'नन्दिनी** सजसैर्लगाभ्यां युक्ता बाणर्तुभेदिनी ॥' कृष्णीये.

**धारावलिकाच्छन्दः (११।७८९)**—'तोरस्तलौ गुरु**र्धारावलिका** ॥' वृत्तसारे

**मोटनकच्छन्दः (११।८७७)—'स्यान्मोटनकं** तजजाश्च लगौ ॥'

**सुमुखीच्छन्दः (११।८८०)—**

'दिअवर हार लहूजुअला वलअ परिट्ठिअ हत्थअला ।
पअ कल चोदह जंप अही कइवर जाणइ सो **सुमुही** ॥'
प्रा० २।१०३ ॥

अस्यां 'पृषत्कऋतुभिर्यतिः ।' इति कृष्णः ।

**दमनकच्छन्दः (११।१०२४)—**

'दिअवरजुअ लहुजुअलं पअ पअ पअलिअवलअं ।
चउपद चउवसुकलअं **दमणअ** फणि भण ललिअं ॥'
प्रा० २।१०९ ॥

**सान्द्रपदच्छन्दः (११।१५११)—'सान्द्रपदं** भ्तौ नगलघुभिश्च ॥' छन्दःकौस्तुभादौ.

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

S·S·I—S·S·I—I·S·I—S—S S·S·I—S·S·I—I·S·I—S—S

गत्या वि–लक्षीकृ–तहंस—का–न्ते! तामिन्द्र–वज्रां ब्रु–वते क–वी–न्द्राः ॥

(श्रु० बो० २१)

अपि च—

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

S·S·I—S·S·I—I·S·I—S—S S·S·I—S·S·I—I·S·I—S—S

ये दुष्ट–दैत्या इ–ह भूमि–लो–के द्वेषं व्य–धुर्गोद्वि—जदेव–स–ङ्घे।

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

S·S·I—S·S·I—I·S·I—S—S S·S·I—S·S·I—I·S·I—S—S

तानिन्द्र–वज्राद–पि दारु–णा–ज्ञान् व्याजीव[1]–यद्यः स–ततं न–म–स्ते ॥

तथा—

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

S·S·I—S·S·I—I·S·I—S—S S·S·I—S·S·I—I·S·I—S—S

[2]गोब्राह्म–णस्त्रीव्र–तिभिर्वि–रु–द्धं मोहात्क–रोत्यल्प–मतिर्नृ–पो यः।

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

S·S·I—S·S·I—I·S·I—S—S S·S·I—S·S·I—I·S·I—S—S

तस्येन्द्र–वज्राभि–हतस्य पा–तः क्षोणीध–रस्येव भवत्य–व–श्यम् ॥

पादान्ते यतिः ॥

## उपेन्द्रवज्रा[3] जतौ जगौ ग् ॥ ६ । १६ ॥

यस्य पादे जकार (ISI) तकार (SSI) जकारा (ISI) गकारौ (S.S) च, तद्वृत्तम् 'उपेन्द्रवज्रा' नाम ॥ तत्रोदाहरणम्—

जगणः तगणः जगणः गु० गु० जगणः तगणः जगणः गु० गु०

I·S·I—S·S·I—I·S·I—S—S I·S·I—S·S·I—I·S·I—S—S

भवन्न–खाः कुन्द–दलश्रि–यो ये नमन्ति लक्ष्मीस्त–नलेख–ने–ऽपि।

---

१. 'प्राजीजपत्' इति स्यात्। 'जि अभिभवे' (धा० पा० १।९४६) इत्यस्माण्णिजन्तात्लुङ्। २. 'गोब्राह्मणस्त्री' इत्यादि पद्यमेकमेवोदाहृतं लि. पुस्तके. ३. उक्तैकादशाक्षरप्रस्तारस्याष्टपञ्चाशदधिकत्रिशततमोऽयं (३५८) भेदः **'उपेन्द्रवज्रा'** इति नाम्ना प्रसिद्धः। एतल्लक्षणं प्राकृतपिङ्गले यथा—

'णरेंद एक्का तअणा सुसज्जा पओहरा कण्णगणा मुणिज्जा।

**उविंदवज्जा** फणिराअदिट्ठा पढंति छेआ सुहवण्णसट्ठा ॥' (२।११७)

'बाणऋतुभिर्यतिः।' इति मन्दारमरन्दे। **'उपेन्द्रमाला'** इति नामान्तरमुपजातेः कृष्णीये।

जगणः　तगणः　जगणः गु० गु०　जगणः　तगणः　जगणः गु० गु०

।·S·।—S·S·।—।·S·।—S—S　।·S·।—S·S·।—।·S·।—S—S

उपेन्द्र!—वज्राधि—कर्कश—श—त्वं　कथं ग—तास्ते रि—पुदार—णा—याम्? ॥

अत्र पादान्ते यतिः ॥

## आद्यन्तावुपजातयः ॥ ६ । १७ ॥

'आद्यन्तौ'—इति अनन्तरोक्तौ इन्द्रवज्रोपेन्द्रवज्रयोः पादावाह । तौ यदा विकल्पेन यथेष्टं भवतस्तदा 'उपजातयः' प्रस्तारवशाच्चतुर्दशप्रकारा जायन्ते ॥ तत्रोदाहरणम्—

इन्द्रवज्रा

तगणः　तगणः　जगणः　गु० गु०

S·S·।—S·S·।—।·S·।—S—S

अत्रोप—जातिर्वि—विधा वि—द—ग्धैः

इन्द्रवज्रा

तगणः　तगणः　जगणः　गु० गु०

S·S·।—S·S·।—।·S·।—S—S

संयोज्य—ते तु व्य—वहार—का—ले ।

उपेन्द्रवज्रा

जगणः　तगणः　जगणः　गु० गु०

।·S·।—S·S·।—।·S·।—S—S

अतः प्र—यत्नः प्र—थमं वि—धे—यो

उपेन्द्रवज्रा

जगणः　तगणः　जगणः　गु० गु०

।·S·।—S·S·।—।·S·।—S—S

नृपेण पुंरत्न—परीक्ष—णा—य ॥

---

१. उपजायतश्च प्रस्तारगत्या चतुर्दश भवन्ति. तन्नामलक्षणोदाहरणादीनि प्रदर्श्यन्ते यथा— २. 'प्रयोज्यते तद्व्यवहारकाले' इति पाठः ।

**'कीर्ति (१) वाणी (२) माला (३) शाला (४) हंसी (५) माया (६) जाया (७) बाला (८) । आर्द्रा (९) भद्रा (१०) प्रेमा (११) रामा (१२) ऋद्धि (१३) बुद्धि (१४)** स्तासां नामानि ( प्रा० पि० सू० २।१२२ )

**(१) कीर्तिः—**

यथा—

'उपेन्द्रवज्रा'

जगणः　तगणः　जगणः　गु० गु०

।·S·।—S·S·।—।·S·।—S—S

स भानु—र्भी मेरु—सखः पि—तॄ—णां

'इन्द्रवज्रा'

तगणः　तगणः　जगणः　गु० गु०

S·S·।—S·S·।—।·S·।—S—S

कन्यां कु—लस्य स्थि—तये स्थि—ति—ज्ञः ।

'इन्द्रवज्रा' 'इन्द्रवज्रा'

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

S·S·I—S·S·I—I·S·I—S—S S·S·I—S·S·I—I·S·I—S—S

मेनां मु–नीनाम–पि मान–नी–या– मात्मानु–रूपां वि–धिनोप–ये–मे ॥

( कुमारसं० १।१८ )

(२) वाणी—

यथा—

इन्द्रवज्रा उपेन्द्रवज्रा

तगणः तगणः जगणः गु० गु० जगणः तगणः जगणः गु० गु०

S·S·I—S·S·I—I·S·I—S—S I·S·I—S·S·I—I·S·I—S—S

यः पूर–यन्कीच–करन्ध्र–भा–गान् दरीमु–खोत्थेन समीर–णे–न ।

इन्द्रवज्रा इन्द्रवज्रा

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

S·S·I—S·S·I—I·S·I—S—S S·S·I—S·S·I—I·S·I—S—S

उद्गास्य–तामिच्छ–ति किन्न–रा–णां तानप्र–दायित्व–मिवोप–ग–न्तुम् ॥

( कुमारसं० १।८ )

(३) माला—

यथा—

उपेन्द्रवज्रा उपेन्द्रवज्रा

जगणः तगणः जगणः गु० गु० जगणः तगणः जगणः गु० गु०

I·S·I—S·S·I—I·S·I—S—S I·S·I—S·S·I—I·S·I—S—S

कपोल–कण्डूः क–रिभिर्वि–ने–तुं विघट्टि–तानां स–रलद्रु–मा–णाम् ।

इन्द्रवज्रा इन्द्रवज्रा

तगणः तगणः जगणः गु० गु० तगणः तगणः जगणः गु० गु०

S·S·I—S·S·I—I·S·I—S—S S·S·I—S·S·I—I·S·I—S—S

यत्र स्नु–तक्षीर–तया प्र–सू–तः सानूनि गन्धः सु–रभीक–रो–ति ॥

( कुमारसं० १।९ )

(४) शाला—

यथा—

इन्द्रवज्रा　　इन्द्रवज्रा

तगणः तगणः जगणः गु० गु०　　तगणः तगणः जगणः गु० गु०

ऽ·ऽ·।—ऽ·ऽ·।—।·ऽ· ।—ऽ—ऽ　　ऽ·ऽ· ।—ऽ·ऽ·।—।·ऽ· ।—ऽ—ऽ

उद्वेज–यत्यङ्गु–लिपार्ष्णि–भा–गान्　मार्गे शि–लीभूत–हिमेऽपि य–त्र ।

उपेन्द्रवज्रा　　इन्द्रवज्रा

जगणः तगणः जगणः गु० गु०　　तगणः तगणः जगणः गु० गु०

।·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ—ऽ　　ऽ·ऽ· ।—ऽ·ऽ· ।—।·ऽ·।—ऽ—ऽ

न दुर्व–हश्रोणि–पयोध–रा–र्ता　भिन्दन्ति मन्दां ग–तिमश्व–मु–ख्यः ।

(कुमारसं० १।११)

(५) हंसी—

यथा—

उपेन्द्रवज्रा　　इन्द्रवज्रा

जगणः तगणः जगणः गु० गु०　　तगणः तगणः जगणः गु० गु०

।·ऽ· ।—ऽ·ऽ·।—।·ऽ·।—ऽ—ऽ　　ऽ·ऽ·।—ऽ·ऽ· ।—।·ऽ·।—ऽ—ऽ

पदं तु–षारस्नु–तिधौत–र–क्तं　यस्मिन्न–दृष्ट्वापि हतद्वि–पा–नाम् ।

उपेन्द्रवज्रा　　इन्द्रवज्रा

जगणः तगणः जगणः गु० गु०　　तगणः तगणः जगणः गु० गु०

।·ऽ· ।—ऽ·ऽ· ।—।·ऽ· ।—ऽ—ऽ　　ऽ·ऽ·।—ऽ· ऽ·।—।·ऽ· ।—ऽ—ऽ

विदन्ति मार्गं न खरन्ध्र–मु–क्तै–　मुक्ताफ–लैः केस–रिणां कि–रा–ताः ॥

(कुमारसं० १।६)

'विपरीताख्यानिकी—' (पिं० सू० ५।४८) इत्यनुसारेण **'विपरीताख्यानिकी'** इति नामान्तरं **हंसी**च्छन्दसः ।

(६) माया—

यथा—

उपेन्द्रवज्रा　　उपेन्द्रवज्रा

जगणः तगणः जगणः गु० गु०　　जगणः तगणः जगणः गु० गु०

।·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ—ऽ　　।·ऽ·।—ऽ·ऽ· ।—।·ऽ· ।—ऽ—ऽ

प्रसीद विश्राम्य–तु वीर! व–ज्रं　शरैर्म–दीयैः क–तमः सु–रा–रिः ? ।

छ० शा० ११

| उपेन्द्रवज्रा | | | | | इन्द्रवज्रा | | | | |
|---|---|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | गु० | गु० | तगणः | तगणः | जगणः | गु० | गु० |
| ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ | ऽ | ऽ·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ | ऽ |
| बिभेतु | मोघीकृ | तबाहु | वी | र्यः | स्त्रीभ्योऽपि | कोपस्फु | रिताध | रा | भ्यः ॥ |

( कुमारसं० ३।९ )

(७) जाया—

यथा—

| इन्द्रवज्रा | | | | | उपेन्द्रवज्रा | | | | |
|---|---|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | गु० | गु० | जगणः | तगणः | जगणः | गु० | गु० |
| ऽ·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ | ऽ | ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ | ऽ |
| कालक्र | मेणाथ | तयोः प्र | वृ | त्ते | स्वरूप | योग्ये सु | रतप्र | स | ङ्गे । |

| उपेन्द्रवज्रा | | | | | उपेन्द्रवज्रा | | | | |
|---|---|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | गु० | गु० | जगणः | तगणः | जगणः | गु० | गु० |
| ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ | ऽ | ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ | ऽ |
| मनोर | मं यौव | नमुद्व | ह | न्त्या | गर्भोऽभ | वद्भूध | रराज | प | त्न्याः ॥ |

( कुमारसं० १।१९ )

(८) बाला—

यथा—

| इन्द्रवज्रा | | | | | इन्द्रवज्रा | | | | |
|---|---|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | गु० | गु० | तगणः | तगणः | जगणः | गु० | गु० |
| ऽ·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ | ऽ | ऽ·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ | ऽ |
| यं सर्व | शैलाः प | रिकल्प्य | व | त्सं | मेरौ स्थि | ते दोग्ध | रि दोह | द | क्षे । |

| इन्द्रवज्रा | | | | | उपेन्द्रवज्रा | | | | |
|---|---|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | गु० | गु० | जगणः | तगणः | जगणः | गु० | गु० |
| ऽ·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ | ऽ | ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ | ऽ |
| भास्वन्ति | रत्नानि | महौष | धी | श्च | पृथूप | दिष्टां दु | दुहुर्ध | रि | त्रीम् ॥ |

( कुमारसं० १।२ )

(९) आर्द्रा—

यथा—

| उपेन्द्रवज्रा | | | | | इन्द्रवज्रा | | | | |
|---|---|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | गु० | गु० | तगणः | तगणः | जगणः | गु० | गु० |
| ।·S·। | S·S·। | ।·S·। | S | S | S·S·। | S·S·। | ।·S·। | S | S |
| दिवाक | राद्रक्ष | ति यो गु | हा | सु | लीनं दि | वाभीत | मिवान्ध | का | रम् । |

| इन्द्रवज्रा | | | | | उपेन्द्रवज्रा | | | | |
|---|---|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | गु० | गु० | जगणः | तगणः | जगणः | गु० | गु० |
| S·S·। | S·S·। | ।·S·। | S | S | ।·S·। | S·S·। | ।·S·। | S | S |
| क्षुद्रेऽपि | नूनं श | रणं प्र | प | न्ने | ममत्व | मुच्चैःशि | रसां स | ती | व ॥ |

( कुमारसं० १।१२ )

(१०) भद्रा—

यथा—

| इन्द्रवज्रा | | | | | उपेन्द्रवज्रा | | | | |
|---|---|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | गु० | गु० | जगणः | तगणः | जगणः | गु० | गु० |
| S·S·। | S·S·। | ।·S·। | S | S | ।·S·। | S·S·। | ।·S·। | S | S |
| अस्त्युत्त | रस्यां दि | शि देव | ता | त्मा | हिमाल | यो नाम | नगाधि | रा | जः । |

| इन्द्रवज्रा | | | | | उपेन्द्रवज्रा | | | | |
|---|---|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | गु० | गु० | जगणः | तगणः | जगणः | गु० | गु० |
| S·S·। | S·S·। | ।·S·। | S | S | ।·S·। | S·S·। | ।·S·। | S | S |
| पूर्वाप | रौ तोय | निधी व | गा | ह्य | स्थितः पृ | थिव्या इ | व मान | द | ण्डः ॥ |

( कुमारसं० १।१ )

'आख्यानिकी–' (पिं० सू० ५।३७) इत्यनुसारेण **'आख्यानिकी'** इति नामान्तरं भद्राच्छन्दसः ।

(११) प्रेमा—

यथा—

| उपेन्द्रवज्रा | | | | | उपेन्द्रवज्रा | | | | |
|---|---|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | गु० | गु० | जगणः | तगणः | जगणः | गु० | गु० |
| ।·S·। | S·S·। | ।·S·। | S | S | ।·S·। | S·S·। | ।·S·। | S | S |
| अनन्त | रत्नप्र | भवस्य | य | स्य | हिमं न | सौभाग्य | विलोपि | जा | तम् । |

| इन्द्रवज्रा | उपेन्द्रवज्रा |
|---|---|
| तगणः तगणः जगणः गु० गु० | जगणः तगणः जगणः गु० गु० |
| S·S· I—S·S· I—I·S· I—S—S | I·S· I—S·S· I—I·S· I—S—S |
| एको हि दोषो गु–णसंनि–पा–ते | निमज्ज–तीन्दोः कि–रणेष्वि–वा–ङ्कः ॥ |

(कुमारसं० १।३)

(१२) रामा—

यथा—

| इन्द्रवज्रा | इन्द्रवज्रा |
|---|---|
| तगणः तगणः जगणः गु० गु० | तगणः तगणः जगणः गु० गु० |
| S·S· I—S·S·I—I·S·I—S—S | S·S·I—S·S· I—I·S·I—S—S |
| यश्चाप्स–रोविभ्र–ममण्ड–ना–नां | संपाद–यित्रीं शि–खरैर्बि–भ–र्ति । |

| उपेन्द्रवज्रा | उपेन्द्रवज्रा |
|---|---|
| जगणः तगणः जगणः गु० गु० | जगणः तगणः जगणः गु० गु० |
| I·S· I—S·S·I—I·S·I—S—S | I·S· I—S·S· I—I·S·I—S—S |
| बलाह–कच्छेद–विभक्त–रा–गा– | मकाल–सन्ध्यामि–व धातु–म–त्ताम् ॥ |

(कुमारसं० १।४)

(१३) ऋद्धिः—

यथा—

| उपेन्द्रवज्रा | इन्द्रवज्रा |
|---|---|
| जगणः तगणः जगणः गु० गु० | तगणः तगणः जगणः गु० गु० |
| I·S·I—S·S·I—I·S·I—S—S | S·S·I—S·S·I—I·S·I—S—S |
| प्रसन्न–दिक्पांसु विविक्त–वा–तं | शङ्खस्व–नानन्त–रपुष्प–वृ–ष्टि । |

| उपेन्द्रवज्रा | उपेन्द्रवज्रा |
|---|---|
| जगणः तगणः जगणः गु० गु० | जगणः तगणः जगणः गु० गु० |
| I·S·I—S·S· I—I·S·I—S—S | I·S·I—S·S· I—I·S·I—S—S |
| शरीरि–णां स्थाव–रजङ्ग–मा–नां | सुखाय तज्जन्म–दिनं ब–भू–व ॥ |

(कुमारसं० १।२३)

(१४) बुद्धिः—
यथा—

| इन्द्रवज्रा | उपेन्द्रवज्रा |
| --- | --- |
| तगणः तगणः जगणः गु० गु० | जगणः तगणः जगणः गु० गु० |
| ऽ·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ—ऽ | ।·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ—ऽ |
| भग्नांशु–काक्षेप–विलज्जि–ता–नां | यदृच्छ–या किंपु–रुषाङ्ग–ना–नाम् । |

| उपेन्द्रवज्रा | उपेन्द्रवज्रा |
| --- | --- |
| जगणः तगणः जगणः गु० गु० | जगणः तगणः जगणः गु० गु० |
| ।·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ—ऽ | ।·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ—ऽ |
| दरीगृ–हद्वार–विलम्बि–बि–म्बा– | स्तिरस्क–रिण्यो ज–लदा भ–व–न्ति ॥ |

( कुमारसं० १।१४ )

एवमन्यान्यप्युपजात्युदाहरणानि कुमारसंभवादिकाव्येषु द्रष्टव्यानि । समवृत्तप्रस्तावे प्रसङ्गादुपजातीनामुपन्यासो लाघवार्थः । केचिदिदं सूत्रं न्यायोपलक्षणपरं व्याचक्षते । तेन वंशस्थ–इन्द्रवंशापादयोरपि संकरादुपजातयो भवन्ति । शालिनी–वातोर्मीपादयोः, अन्येषामपि स्वल्पभेदानां प्रयोगानुसारेणोपजातयो ज्ञेयाः ।

---

१. अत्र वंशस्थेन्द्रवंशयोरपि प्रस्तारे कृते चतुर्दशधा उपजातयो भवन्ति. तासां स्वरूपोदाहरणानीति यथाक्रमं प्रकाश्यन्ते, यथा—

प्रथमो भेदः—
यथा—

| इन्द्रवंशा | वंशस्थम् |
| --- | --- |
| तगणः तगणः जगणः रगणः | जगणः तगणः जगणः रगणः |
| ऽ·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ·।·ऽ | ।·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ·।·ऽ |
| किं ब्रूथ रे! व्योम–चरा म–हासुराः | स्मरारि–सूनुप्र–तिपक्ष–वर्तिनः । |

| वंशस्थम् | वंशस्थम् |
| --- | --- |
| जगणः तगणः जगणः रगणः | जगणः तगणः जगणः रगणः |
| ।·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ·।·ऽ | ।·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ·।·ऽ |
| मदीय–बाणव्र–णवेद–ना हि साऽ– | धुना क–थं विस्मृ–तिगोच–रीकृता ? ॥ |

( कुमारसं० १५।४० )

द्वितीयो भेदः—

यथा—

| वंशस्थम् | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ·।·ऽ | ऽ·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ·।·ऽ |

पुरोग–तं दैत्य–चमूस–हार्णवं दृष्ट्वाभि–तश्चक्षु–भिरे म–हा–सुराः।

| वंशस्थम् | | | | वंशस्थम् | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | जगणः | तगणः | जगणः | रगणः |
| ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ·।·ऽ | ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ·।·ऽ |

स्मरारि–सूनोर्न–यनैक–कोणके ममुर्भ–टास्तस्य–रणेऽव–हेलया॥

(कुमारसं० १५।४९)

तृतीयो भेदः—

यथा—

| इन्द्रवंशा | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ऽ·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ·।·ऽ | ऽ·ऽ·। | ऽ·ऽ·। | ऽ·ऽ·। | ऽ·।·ऽ |

निम्नाः प्र–देशाः स्थ–लतामु–पागमन् निम्नत्व–मुच्चैर–पि सर्व–तश्च ते।

| वंशस्थम् | | | | वंशस्थम् | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | जगणः | तगणः | जगणः | रगणः |
| ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ·।·ऽ | ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ·।·ऽ |

तुरङ्ग–माणां व्र–जतां खु–रैः क्षता रथैर्ग–जेन्द्रैः प–रितः स–मीकृताः॥

(कुमारसं० १४।४४)

चतुर्थो भेदः—

यथा—

| वंशस्थम् | | | | वंशस्थम् | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | जगणः | तगणः | जगणः | रगणः |
| ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ·।·ऽ | ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ·।·ऽ |

परस्प–रं वज्र–धरस्य सैनिका द्विषोऽपि योद्धुं प्र–वरोद्ध–तायुधाः।

| इन्द्रवंशा | | | | वंशस्थम् | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | जगणः | तगणः | जगणः | रगणः |
| ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ | । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |
| वैतालि- | कश्रावि- | तमान- | सत्कमा- | भिधान- | मीयुर्वि- | जयैषि- | णो रणे ॥ |

( कु० सं० १५।५२ )

पञ्चमो भेदः—

यथा—

| इन्द्रवंशा | | | | वंशस्थम् | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | जगणः | तगणः | जगणः | रगणः |
| ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ | । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |
| ऊर्ध्वीकृ- | तास्या र- | विदत्त- | दृष्टयः | समेत्य | सर्वे सु- | रविद्वि- | षः पुरः । |

| इन्द्रवंशा | | | | वंशस्थम् | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | जगणः | तगणः | जगणः | रगणः |
| ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ | । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |
| श्वानः स्व- | रेण श्र- | वणान्त- | शातिना | मिथो रु- | दन्तः क- | रुणेन | निर्ययुः ॥ |

( कु० सं० १५।२४ )

षष्ठो भेदः—

यथा—

| इन्द्रवंशा | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ | ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |
| अभ्याज- | तोऽभ्याग- | ततूर्ण- | तर्णका- | न्निर्याण- | हस्तस्य | पुरो दु- | धुक्षतः । |

| इन्द्रवंशा | | | | वंशस्थम् | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | जगणः | तगणः | जगणः | रगणः |
| ऽ ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ | । ऽ । | ऽ ऽ । | । ऽ । | ऽ । ऽ |
| वर्गाद्व- | वां हुंकृ- | तिचारु | निर्यती- | मरिर्म- | धोरैक्ष- | त गोम- | तल्लिकाम् ॥ |

( शिशुपा० १२।४१ )

सप्तमो भेदः—

यथा—

वंशस्थम्

जगणः तगणः जगणः रगणः

I·S·I—S·S·I—I·S·I—S·I·S

न जाम—दग्न्यः क्ष—यकाल—रात्रिकृत्

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S·S·I—S·S·I—I·S·I S·I·S

स क्षत्रि—याणां स—मराय वल्गति।

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S·S·I—S·S·I—I·S·I—S·I·S

येन त्रि—लोकीसु—भटेन तेन ते

वंशस्थम्

जगणः तगणः जगणः रगणः

I·S·I—S·S·I—I·S·I—S·I·S

कुतोऽव—काशः स—हृ विग्र—हग्रहे? ॥

(कु० सं० १५।३७)

अष्टमो भेदः—

यथा—

वंशस्थम्

जगणः तगणः जगणः रगणः

I·S·I—S·S·I—I·S·I—S·I·S

निवार्य—माणैर—भितोऽनु—यायिभि—

वंशस्थम्

जगणः तगणः जगणः रगणः

I·S·I—S·S·I—I·S·I—S·I·S

र्ग्रहीतु—कामैरि—व तं मु—हुर्मुहुः।

वंशस्थम्

जगणः तगणः जगणः रगणः

I·S·I—S·S·I—I·S·I—S·I·S

अपाति गृध्रैर—भिमौलि चाकुलै—

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S·S·I—S·S·I—I·S·I—S·I·S

र्भविष्य—देतन्म—रणोप—देशिभिः ॥

(कु० सं० १५।२९)

नवमो भेदः—

यथा—

इन्द्रवंशा

तगणः तगणः जगणः रगणः

S·S·I—S·S·I—I·S·I—S·I·S

स्नातं ख़ु—रै रथ्य—तुरङ्ग—पुङ्गवै—

वंशस्थम्

जगणः तगणः जगणः रगणः

I·S·I—S·S·I—I·S·I—S·I·S

रुपस्य—कानां क—नकस्थ—लीरजः।

| वंशस्थम् | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ | ऽऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |

गर्तं दि–गन्तान् प्र–खरैः स–मीरणै– र्दाहभ्र–मं भूरि बभार भूयसा ॥
(कु० सं० १४।२०)

दशमो भेदः—

यथा—

| वंशस्थम् | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ | ऽऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |

नितान्त–मुत्तुङ्ग–तुरङ्ग–हेषितै– रुद्दाम–दानद्वि–पबृंहि–तैः शतैः ।

| वंशस्थम् | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ | ऽऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |

चलद्ध्व–जस्यन्द–ननेमि–निःस्वनै– श्चाभूमि–रुच्छ्वास–मथाकु–लं नभः ॥
(कुमारसं० १४।४१)

एकादशो भेदः—

यथा—

| इन्द्रवंशा | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ऽऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ | ऽऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |

श्रुत्वेति वाचं वि–यतो ग–रीयसीं क्रोधाद–हंकार–परो म–हासुरः ।

| वंशस्थम् | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| जगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| ।ऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ | ऽऽ। | ऽऽ। | ।ऽ। | ऽ।ऽ |

प्रकम्पि–ताशेष–जगत्त्र–योऽपि स– मा–कम्प–तोच्चैर्दि–वमभ्य–धाच्च सः ॥
(कु० सं० १५।२९)

द्वादशो भेदः—

यथा—

| वंशस्थम् | वंशस्थम् |
| --- | --- |
| जगणः तगणः जगणः रगणः | जगणः तगणः जगणः रगणः |
| I·S·I—S·S·I—I·S·I—S·I·S | I·S·I—S·S·I—I·S·I—S·I·S |
| कटुस्व–रैः प्राल–पथाम्ब–रस्थिताः | शिशोर्ब–लात्षड्दि–नजात–कस्य किम्? ॥ |

| इन्द्रवंशा | इन्द्रवंशा |
| --- | --- |
| तगणः तगणः जगणः रगणः | तगणः तगणः जगणः रगणः |
| S·S·I—S·S·I—I·S·I—S·I·S | S·S·I—S·S·I—I·S·I—S·I·S |
| श्वानः प्र–मत्ता इ–व कार्ति–के निशि | स्वैरं व–नान्ते मृ–गधूर्त–का इव ॥ |

(कुमारसं० १५।४१)

त्रयोदशो भेदः—

यथा—

| इन्द्रवंशा | वंशस्थम् |
| --- | --- |
| तगणः तगणः जगणः रगणः | जगणः तगणः जगणः रगणः |
| S·S·I—S·S·I—I·S·I—S·I·S | I·S·I—S·S·I—I·S·I—S·I·S |
| पद्मै–र–नन्वीत–वधूमु–खद्युतो | गता न हंसैः श्रि–यमात–पत्रजाम्। |

| इन्द्रवंशा | इन्द्रवंशा |
| --- | --- |
| तगणः तगणः जगणः रगणः | तगणः तगणः जगणः रगणः |
| S·S·I—S·S·I—I·S·I—S·I·S | S·S·I—S·S·I—I·S·I—S·I·S |
| दूरेऽभ–वन्भोज–बलस्य गच्छतः | शैलोप–मातीत–गजस्य निम्नगाः। |

(शिशुपा० १२।६१)

चतुर्दशो भेदः—

यथा—

| वंशस्थम् | इन्द्रवंशा |
| --- | --- |
| जगणः तगणः जगणः रगणः | तगणः तगणः जगणः रगणः |
| I·S·I—S·S·I—I·S·I—S·I·S | S·S·I—S·S·I—I·S·I—S·I·S |
| महाच–मूनाम–धिपाः स–मन्ततः | संनह्य सद्यः सु–तरामु–दायुधाः। |

तथा शालिनीवातोर्मीपादयोरन्येषामपि स्वल्पभेदानां प्रयोगानुसारेणोपजातयो ज्ञेयाः।

## दोधकं भौ भगौ ग् ॥ ६ । १८ ॥

| इन्द्रवंशा | | | | इन्द्रवंशा | | | |
|---|---|---|---|---|---|---|---|
| तगणः | तगणः | जगणः | रगणः | तगणः | तगणः | जगणः | रगणः |
| S·S·I | S·S·I | I·S·I | S·I·S | S·S·I | S·S·I | I·S·I | S·I·S |
| तस्थुर्वि | नम्रक्षि | तिपाल | सङ्कुले | तस्याङ्ग | णद्वारि | बहिः प्र | कोष्ठके ॥ |

(कुमारसं० १५।६)

१. तुल्यसंख्याकवर्णपादयोरेवोपजातित्वमिति न नियमः, किंतु भिन्नसंख्याकवर्णपादयोरपि।

यथा—

"रामं लक्ष्मणपूर्वजं रघुवरं सीतापतिं सुन्दरं
काकुत्स्थं करुणामयं गुणनिधिं विप्रप्रियं धार्मिकम्।
राजेन्द्रं सत्यसन्धं दशरथतनयं श्यामलं शान्तमूर्तिं
वन्दे रामाभिरामं रघुकुलतिलकं राघवं रावणारिम् ॥"

इति पद्ये ऊनविंशत्यक्षरपादकेन (१९) शार्दूलविक्रीडितेन सहैकविंशत्यक्षरपादकस्रग्धरावृत्तस्य पादद्वयेन मिश्रणादुपजातित्वम्। एवमेवानुष्टुब्बृहत्योरपि संकरादुपजातिः, इति **नव्याः**। वस्तुतस्तु—सर्वैरपि छन्दःशास्त्रकारैरुपजातेः समवृत्ताधिकार एवाम्नानात्, विषमाक्षरवृत्तमिश्रणस्याप्युपजातित्वेऽर्धसमविषमवृत्तेष्वतिव्याप्तेः, 'अत्रानुक्तं गाथा' (पि० सू० ८।१) इति सूत्रवैयर्थ्यप्रसङ्गात्, छन्दोभङ्गदोषस्य निर्विषयत्वापत्तेश्च समाक्षरयोर्द्वयोर्मिश्रणमेवोपजातित्वमिति युक्तम्। तथा च रत्नाकरे—'इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम।' (३।४) इति तल्लक्षणे 'इत्थं' पदप्रयोगोऽपि स्वरसतः सङ्गच्छते। यत्तु—'रामं लक्ष्मणपूर्वजं' इत्युदाहृतम्, तत्र गाथात्वमेव सुवचम्। अत एव—

'यो विश्वात्मा विधिजविषयान् प्राश्य भोगान् स्थविष्ठान्
पश्चाच्चान्यान् स्वमतिविभवाज्ज्योतिषा स्वेन सूक्ष्मान्।
सर्वानेतान् पुनरपि शनैः स्वात्मनि स्थापयित्वा
हित्वा सर्वान् विशेषान् विगतगुणगणः पात्वसौ नस्तुरीयः ॥'

(मां० उ० भा० २)

इति शङ्करभगवत्पादीय श्लोके 'न च चतुर्थपादे वृत्तलक्षणाभावादसाङ्गत्यमाशङ्कनीयम्, गाथालक्षणस्य तत्र सुसम्पादत्वात्।' इत्यानन्दज्ञानोक्तिः। एतेन—'कल्लोलवेल्लितदृषत्परुषप्रहारै रत्नानि रत्नाकर! मावमंस्थाः।' इत्याद्यपि व्याख्यातम्। भागवताद्युदाहरणानि त्वार्षत्वाल्लौकिके नातीवोपयुज्यन्ते। क्वचिल्लौकिके तथा दर्शनं तु दोष एवेति 'समाक्षरजातिद्वयमिश्रणमेवोपजातित्वमि'ति प्राचां मतमेव निर्बाधम् ॥

यस्य पादे भगणास्त्रयो (ऽ।।.ऽ।।.ऽ।।) गकारौ (ऽ.ऽ) च भवतस्तद् 'दोधकं' नाम वृत्तम्। तत्रोदाहरणम्—

भगणः भगणः भगणः गु० गु० भगणः भगणः भगणः गु० गु०
ऽ।।—ऽ।।—ऽ।।—ऽ—ऽ ऽ।।—ऽ।।—ऽ।।—ऽ—ऽ
दोधक-मर्थवि-रोधक-मु-ग्रं स्त्री-चप-लं युधि कातर-चि-त्तम्।

भगणः भगणः भगणः गु० गु० भगणः भगणः भगणः गु० गु०
ऽ।।—ऽ।।—ऽ।।—ऽ—ऽ ऽ।।—ऽ।।—ऽ।।—ऽ—ऽ
स्वार्थप-रं मति-हीनम-मा-त्यं मुञ्चति यो नृप-तिः स सु-खी स्यात्॥

अत्र पादान्ते यतिः। दोग्धीति दोधकः। केनाप्युपायेन राजानं दोग्धि।

## शालिनी म्तौ त्गौ ग् समुद्रऋषयः॥ ६। १९॥

यस्य पादे मगणतगणौ, (ऽऽऽ. ऽऽ।) तगणो, (ऽऽ।) गकारौ (ऽ. ऽ) च भवतस्तद्वृत्तं 'शालिनी' नाम। चतुर्षु, सप्तसु च यतिः। तत्रोदाहरणम्—

मगणः तगणः तगणः गु० गु०
ऽऽऽ—ऽऽ।—ऽऽ।—ऽ—ऽ
शस्त्रश्या-मा(४)स्निग्ध-मुग्धाय-ता-क्षी(७)

मगणः तगणः तगणः गु० गु०
ऽऽऽ—ऽऽ।—ऽऽ।—ऽ—ऽ
पीनश्रो-णि(४)र्दक्षि-णावर्त-ना-भिः(७)।

मगणः तगणः तगणः गु० गु०
ऽऽऽ—ऽऽ।—ऽऽ।—ऽ—ऽ
मध्ये क्षा-मा(४)पीव-रोरुस्त-नी या(७)

मगणः तगणः तगणः गु० गु०
ऽऽऽ—ऽऽ।—ऽऽ।—ऽ—ऽ
श्लाघ्या भ-र्तुः(४)शालि-नी कामि-नी स्यात्(७)॥

## वातोर्मी म्भौ त्गौ ग् चँ॥ ६। २०॥

---

१. एकादशाक्षरप्रस्तारस्योनचत्वारिंशदधिकचतुःशततमो (४३९) भेदो 'दोधक' इति नाम्ना प्रसिद्धः। 'बन्धुः' इति नामान्तरं वा० भू०. २. एकादशाक्षरप्रस्तारस्योननवत्यधिकद्विशततमोऽयं (२८९) भेदः 'शालिनी' इति नाम्ना ख्यातः। ३. 'गश्चतुःस्वरा' इति लि. पुस्तकेऽधिकः पाठः।

यस्य पादे मगणभगणतगणाः (ऽऽऽ. ऽ॥. ऽऽ।) गकारौ (ऽ.ऽ) च भवतस्तद्वृत्तं 'वातोर्मी' नाम । चतुर्भिः सप्तभिश्च यतिः । चकारो यत्यनुकर्षणार्थः । तथोदाहरणम्—

मगणः　भगणः　तगणः　गु० गु०
ऽ·ऽ·ऽ—ऽ · ।·।—ऽ·ऽ·।—ऽ—ऽ
यात्युत्से–कं(४)सप–दि प्राप्य–किं–चि(७)–

मगणः　भगणः　तगणः　गु० गु०
ऽ · ऽ · ऽ—ऽ · ।·।—ऽ · ऽ · ।—ऽ—ऽ
त्स्याद्वा य–स्या(४)श्चप–ला चित्त–वृ–त्तिः (७) ।

मगणः　भगणः　तगणः　गु० गु०
ऽ · ऽ · ऽ—ऽ · ।·।—ऽ · ऽ·।—ऽ—ऽ
या दीर्घा–ङ्गी(४)स्फुट–शब्दाट्ट–हा–सा (७)

मगणः　भगणः　तगणः　गु० गु०
ऽ · ऽ · ऽ　ऽ · ।·।—ऽ·ऽ·।—ऽ—ऽ
त्याज्या सा　स्त्री(४)द्रुत–वातोर्मि–मा–ला (७) ।

वातोर्मीति स्त्रियां 'कृदिकारादक्तिनः'( व्या. वार्ति. ) इति ङीष् ।

## भ्रमरविलसितं म्भौ न्लौ ग् ॥ ६ । २१ ॥

यस्य पादे मगणभगणनगणलकारगकाराः ( ऽऽऽ. ऽ॥. ।।।. ।. ऽ ) भवन्ति तद् 'भ्रमरविलसितं' नाम । चतुर्भिः सप्तभिश्च यतिः ।

तत्रोदाहरणम्—

मगणः　भगणः　नगणः ल० गु०
ऽ· ऽ·ऽ—ऽ · ।·।—।·।·।—।—ऽ
किं ते व–क्त्रं(४)चल–दलक–चि–तं? (७)

मगणः　भगणः　नगणः ल० गु०
ऽ · ऽ · ऽ—ऽ · ।·।—।·।·।—।—ऽ
किं वा प–द्मं(४)भ्रम–रविल–सि–तम्? (७) ।

१. उक्तैकादशाक्षरप्रस्तारस्य पञ्चाधिकत्रिशततमो (३०५) भेदो '**वातोर्मी**' इति नाम्ना ख्यातः । वातोर्मीशालिन्योर्भगणतगणस्थान एव भेदः । अतएवानयोर्मिश्रणात्पूर्ववदुपजातयो भवन्ति । एकलघुविभिन्नतायामिव लघुद्वयविभिन्नतायामप्युपजातयो भवन्तीति वृत्तिकृता 'तथा शालिनी' (पृ० १३१ पं० १) त्यादिना सिद्धान्तितत्वात् । २. उक्तैकादशाक्षरप्रस्तारस्य नवाधिकसहस्रतमो (१००९) भेदो '**भ्रमरविलसितम्**' इति नाम्ना प्रसिद्धः । अत्र चतुर्थपादान्ते 'सि' इति वर्णस्य 'गन्ते' (१।१०) इति सूत्राद्गुरुत्वातिदेशः ।

मगणः भगणः नगणः ल० गु०

S·S·S S · ।·।—।·।·।—।—S

इत्येवं मे(४)जन-यति म-न-सि (७)

मगणः भगणः नगणः ल० गु०

S · S · S — S · ।·।—।·।·।—।—S

भ्रान्तिं का-न्ते!(४)परि-सरस-र-सि (७) ॥

## रथोद्धता र्नौ र्लौ ग् ॥ ६ । २२ ॥

यस्य पादे रगणनगणरगणलकारगकारा (SIS. III. SIS. I. S) भवन्ति तद्वृत्तं 'रथोद्धता' नाम।

तत्रोदाहरणम्—

रगणः नगणः रगणः ल० गु० रगणः नगणः रगणः ल० गु०

S · I·S—I · I· I—S·I·S—I—S S·I·S—I·I·I—S·I·S—I—S

या करो-ति विवि-धैर्विटैः स-मं सङ्गतिं परगृ-हे रता च या।

रगणः नगणः रगणः ल० गु० रगणः नगणः रगणः ल० गु०

S · I·S—I·I·I—S · I · S—I—S S·I·S—I·I·I—S·I·S—I—S

म्लानय-त्युभय-तोऽपि बा-न्ध-वान् मार्गधू-लिरिव सा रथो-द्ध-ता ॥

पादान्ते यतिः।

## स्वागता र्नौ भ्गौ ग् ॥ ६ । २३ ॥

यस्य पादे रगणनगणौ (SIS. III) भगणो (SII) गकारौ (S. S) च तद्वृत्तं 'स्वागता' नाम। तत्रोदाहरणम्—

रगणः नगणः भगणः गु० गु० रगणः नगणः भगणः गु० गु०

S·I·S—I·I·I—S·I·I—S—S S·I·S—I·I·I—S·I·I—S—S

आहवं प्रविश-तो यदि रा-हुः पृष्ठत-श्चरति वायुस-मे-तः।

रगणः नगणः भगणः गु० गु० रगणः नगणः भगणः गु० गु०

S·I·S—I·I·I—S·I· I—S—S S·I· S—I·I·I—S·I·I—S—S

प्राणवृ-त्तिरपि यस्य श-री-रे स्वागता भवति तस्य ज-य-श्रीः ॥

पादान्ते यतिः।

## वृन्ता नौ स्गौ ग् ॥ ६ । २४ ॥

---

१. उक्तैकादशाक्षरप्रस्तारस्यैकोनशताधिकषट्शततमो (६९९) ऽयं भेदो **'रथोद्धता'** इति नाम्ना प्रसिद्धः। २. उक्तैकादशाक्षरप्रस्तारस्य त्रिचत्वारिंशदधिकचतुःशततमो (४४३) भेदः **'स्वागता'** इति नाम्ना ख्यातः। **'पद्मिनी'** इति चन्द्रिकायाम्।

यस्य पादे नगणौ ( ।।।. ।।।. ) सगणः (।।ऽ) गकारौ (ऽ.ऽ) च तद्वृत्तं 'वृन्ता' नाम। अत्र मण्डूकप्लुतिन्यायेन 'समुद्रऋषय' इत्यनुवर्तन्ते । तेन चतुर्भिः सप्तभिश्च यतिः ।

तत्रोदाहरणम्—

नगणः　नगणः　सगणः　गु० गु०

।·।·।—। · ।·।—।·।·ऽ—ऽ—ऽ

द्विजगु–रु(४)परि–भवका–री–यो (७)

नगणः　नगणः　सगणः　गु० गु०

।·।·।—। · ।·।—।·।·ऽ—ऽ—ऽ

नरप–ति(४)रति–धनलु–ब्धा–त्मा (७) ।

नगणः　नगणः　सगणः　गु० गु०

।·।·।—। · ।·।—।·।·ऽ—ऽ—ऽ

ध्रुवमि–ह(४)निप–तति पा–पो–ऽसौ (७)

नगणः　नगणः　सगणः　गु० गु०

।·।·।—। · ।·।—।·।·ऽ—ऽ—ऽ

फलमि–व(४)पव–नहतं–वृ–न्तात् (७) ॥

## श्येनी रजौ रलौ ग् ॥ ६ । २५ ॥

यस्य पादे रगणजगणौ ( ऽ।ऽ. ।ऽ। ) रगणलकारौ ( ऽ।ऽ. । ) गकार ( ऽ ) श्च तद्वृत्तं 'श्येनी' नाम । तत्रोदाहरणम्—

रगणः　जगणः　रगणः　ल०　गु०　　　रगणः　जगणः　रगणः　ल०　गु०

ऽ·।·ऽ—।·ऽ·।—ऽ·।·ऽ—।—ऽ　　　ऽ·।·ऽ—।·ऽ·।—ऽ·।·ऽ—।—ऽ

क्रूरदृ–ष्टिराय–ताम्रना–सि–का　　　चञ्चला–कठोर–तीक्ष्णना–दि–नी ।

रगणः　जगणः　रगणः　ल०　गु०　　　रगणः　जगणः　रगणः　ल०　गु०

ऽ·।·ऽ—।·ऽ·।—ऽ·।·ऽ—।—ऽ　　　ऽ·।·ऽ—।·ऽ·।—ऽ·।·ऽ—।—ऽ

युद्धका–ङ्क्षिणी स–दामिष–प्रि–या　　　श्येनिके–व सा वि–गर्हिता–ङ्ग–ना ॥

अत्र पादान्ते यतिः ।

## विलासिनी जरौ जगौ ग् ॥ ६ । २६ ॥

१. उक्तैकादशाक्षरप्रस्तारस्य षट्पञ्चाशदधिकद्विशततमो ( २५६ ) भेदो **'वृन्ता'** इति नाम्ना प्रसिद्धः । **'वृत्ता'** इति वैदिकपाठः । **'पृथ्वी'** इति क्वचित् । २. उक्तैकादशाक्षरप्रस्तारस्य त्र्यशीत्यधिकषट्शततमो (६८३) भेदः **'श्येनी'** इति नाम्ना प्रसिद्धः । **'सेनिका'** वा० भू० । **'वैतिका'** वृ० र० । ३. सूत्रमेतद्वैदिकैर्न पठ्यते ।

यस्य पादे जगणरगणौ (।ऽ।. ऽ।ऽ) जगणो (।ऽ।) गकारौ (ऽ.ऽ) च तद्वृत्तं 'विलासिनी' नाम । तत्रोदाहरणम्—

जगणः रगणः जगणः गु० गु० जगणः रगणः जगणः गु० गु०
।·ऽ·।—ऽ·।·ऽ—।·ऽ·।—ऽ—ऽ ।·ऽ·।—ऽ·।·ऽ—।·ऽ·।—ऽ—ऽ
विलासि–नी विलो–कितैः स–का–मं दधाति–कामस–त्त्वचेष्टि–तं या ।

जगणः रगणः जगणः गु० गु० जगणः रगणः जगणः गु० गु०
।·ऽ·।—ऽ·।·ऽ—।·ऽ·।—ऽ—ऽ ।·ऽ·।—ऽ·।·ऽ—।·ऽ·।—ऽ—ऽ
करोति चञ्चला–क्षिदृष्टि–पा–तै– र्यतात्म–नश्च यो–गिनोऽपि म–त्तान् ॥

(जगत्याम्)

---

१. उक्तैकादशाक्षरप्रस्तारस्य द्विचत्वारिंशदुत्तरत्रिशततमो (३४२) भेदो '**विलासिनी**' इति नाम्ना प्रसिद्धः । २. जगतीछन्दःपादघटकीभूतानां द्वादशसंख्यकानामक्षराणां प्रस्तारे कृते षण्णवत्यधिकचतुःसहस्रभेदा (४०९६) जायन्ते । तेषु चात्र षोडशभेदा एव निर्दिष्टाः, परं प्राकृतपिङ्गलादिग्रन्थेष्वन्येऽपि भेदा उपलभ्यन्ते; ते चात्र विनिर्दिश्यन्ते । यथा—

**विद्याधरच्छन्दः (१२।१)**—
'चारी कण्णा पाए दिण्णा सव्वासारा पाआअंते दिज्जे कंता चारी हारा ।
छण्णावेआ मत्ता गण्णा चारी पाआ **विज्जाहारा** जंपे सारा णाआराआ ॥'
प्रा० पि० सू० २।१२८ ॥

**जलधरमालाच्छन्दः (१२।२४१)**—'अब्ध्यष्टाभिर्**जलधरमाला** म्भौ स्मौ' वृत्तरत्नाकरे ।

**अभिनवतामरसच्छन्दः (१२।८८०)**—'**अभिनवतामरसं** नजजाद्यः' । एतदेव '**ललित**'पदनाम्ना प्रसिद्धं वृत्तरत्नाकरे ।

**मालतीच्छन्दः (१२।१३९२)**—'भवति नजावथ **मालती** जरौ' वृत्तरत्नाकरे ।

**दुग्धच्छन्दः (१२।१३९५)**—'**दुग्धवृत्तं** रभजरैरुदीरितम् ।'

**ललिताच्छन्दः (१२।१३९७)**—'धीरैरभाणि **ललिता** तभौ जरौ' वृत्तरत्नाकरादिषु ।

**प्रियंवदाच्छन्दः (१२।१४००)**—'भुवि भवेन्नभजरैः **प्रियंवदा**' वृत्तरत्नाकरादिषु ।

**महितोज्ज्वलाच्छन्दः (१२।१४७२)**—'ननभरसहिता **महितोज्ज्वला**' वृत्तरत्नाकरे ।

**मताच्छन्दः (१२।१४९६)**—'**मता** नरौ नरौ भिन्ना वज्रकोणैर्गुहाननैः ।' '**बहुमता**' इति वृ० म० को०

**जगती ॥ ६ । २७ ॥**

अधिकारोऽयमाध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामस्तज्जगतीत्येवं वेदितव्यम् । वक्ष्यति च "तोटकं सः" ( ६।३२ ), तज्जगतीपादस्य लक्षणं भवति ।

**वंशस्था ज्तौ ज्रौ ॥ ६ । २८ ॥**

यस्य पादे जगणतगणौ ( ।ऽ।. ऽऽ। ) जगणरगणौ ( ।ऽ।. ऽ।ऽ ) च भवतस्तद्वृत्तं 'वंशस्था'[1] नाम । तत्रोदाहरणम्—

| जगणः | तगणः | जगणः | रगणः | जगणः | तगणः | जगणः | रगणः |
|---|---|---|---|---|---|---|---|
| ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ·।·ऽ | ।·ऽ·। | ऽ·ऽ·। | ।·ऽ·। | ऽ·।·ऽ |
| विशुद्ध– | वंशस्थ– | मुदार– | चेष्टितं | गुणप्रि– | यं मित्र– | मुपास्व | सज्जनम् । |

---

**जलमालाच्छन्दः** (१२।१५९१)—'**जलमाला** भभमसाः सागरैर्वसुभिर्यतिः ।'

**चन्द्रवर्त्मच्छन्दः** (१२।१९७९)—

'**चन्द्रवर्त्म** गदितं तु रनभसैः' वृत्तरत्नाकरछन्दोमञ्जर्यादिषु ।

**ललनाच्छन्दः** (१२।२०२३)—'**ललना** स्याद्भतनसैरिछन्ना स्वर्तुमहीधरैः ।'

**सारङ्गच्छन्दः** (१२।२३४१)—

'जा चारितक्कारसंभेअउक्किट्ठ **सारंगरूअक्क** सो पिंगले दिट्ठ ।
जा तीअवीसामसंजुत्त पाएहि णाजाणिए कांति अण्णोण्णभाएहि ॥'

प्रा० पि० सू० २।१३७ ॥

**मौक्तिकदामच्छन्दः** (१२।२९२६)—

'चतुर्जगणं वद मौक्तिकदाम' वृ० र० परिशिष्टे, प्रा० पि० सू० २।१३९ ॥

**भामिनीच्छन्दः** (१२।३५११)—'**भामिनी** स्याद्भभभाक्विभिर्यतिचतुष्टयम् ।'

**मोदकच्छन्दः** (१२।३८९५)—

'तोडअछं विपरीअ ठविज्जसु **मोदह**छंदह णाम करिज्जसु ।
चारि गणा भगणा सुपसिद्धउ पिंगल जंपउ कित्तिहिलुद्धउ ॥'

प्रा० पि० सू० २।१४१ ॥

**तोटक**च्छन्दसो विपरीतस्थापनेन **मोदक**च्छन्दो जायते ।

**तरलनयनीच्छन्दः** (१२।४०९६)—

'णगण णगण कर चउगुण सुकइ कमलमुहि फणि भण ।
**तरलणअणि** सब कर लहु सब गुरु जवउ णवरि कहु ॥'

प्रा० पि० सू० २।१४३ ॥

[1]. उक्तद्वादशाक्षरप्रस्तारस्य त्रिशतद्व्यशीत्यधिकैकसहस्रतमो भेदो ( १३८२ ) '**वंशस्था**' इति नाम्ना ख्यातः । छन्दोमञ्जरीप्रभृतिषु च ग्रन्थेष्वेतद्वृत्तं '**वंशस्थविलम्**' इति नाम्ना प्रसिद्धम् । अत्र 'गुहास्यऋतुभिर्यतिः ।' मं० म० ।

जगणः तगणः जगणः रगणः
।·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ·।·ऽ
विपत्ति–ममस्य कराव–लम्बनं

जगणः तगणः जगणः रगणः
।·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ·।·ऽ
करोति यत्प्राण–परिक्र–येण सः ॥

पादान्ते यतिः ।

## इन्द्रवंशा तौ ज्रौ ॥ ६ । २९ ॥

यस्य पादे तगणौ (ऽऽ।. ऽऽ।) जगणरगणौ (।ऽ।. ऽ।ऽ) च तद्वृत्तं 'इन्द्रवंशा' नाम । तत्रोदाहरणम्—

तगणः तगणः जगणः रगणः
ऽ·ऽ·। ऽ·ऽ·।—।·ऽ·।—ऽ·।·ऽ
कुर्वीत यो देव–गुरुद्वि–जन्मना–

तगणः तगणः जगणः रगणः
ऽ·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ·।·ऽ
मुर्वीप–तिः पात–नमर्थ–लिप्सया ।

तगणः तगणः जगणः रगणः
ऽ·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ·।·ऽ
तस्येन्द्र–वंशेऽपि गृहीत–जन्मनः

तगणः तगणः जगणः रगणः
ऽ·ऽ·।—ऽ·ऽ·।—।·ऽ·।—ऽ·।·ऽ
संजाय–ते श्रीः प्र–तिकूल–वर्तिनी ॥

अत्रापि पादान्ते यतिः ।

## द्रुतविलम्बितं न्भौ भ्रौ ॥ ६ । ३० ॥

यस्य पादे नगणभगणौ ( ।।।. ऽ।। ) भगणरगणौ ( ऽ।।. ऽ।ऽ ) च भवतस्तद्वृत्तं 'द्रुतविलम्बितं' नाम । तत्रोदाहरणम्—

नगणः भगणः भगणः रगणः
।·।·।—ऽ·।·।—ऽ·।·।—ऽ·।·ऽ
द्रुतग–तिः पुरु–षो धन–भाजनं

नगणः भगणः भगणः रगणः
।·।·।—ऽ·।·।—ऽ·।·।—ऽ·।·ऽ
भवति मन्दग–तिश्च सु–खोचितः ।

नगणः भगणः भगणः रगणः
।·।·।—ऽ·।·।—ऽ·।·।—ऽ·।·ऽ
द्रुतवि–लम्बित–खेलग–तिर्नृपः

नगणः भगणः भगणः रगणः
।·।·।—ऽ·।·।—ऽ·।·।—ऽ·।·ऽ
सकल–राज्यसु–खं प्रिय–मश्नुते ॥

## तोटकं सः ॥ ६ । ३१ ॥

---

१. उक्तद्वादशाक्षरप्रस्तारस्य त्रिशतैकाशीत्यधिकैकसहस्रतमो (१३८१) भेदः 'इन्द्रवंशा' नाम्ना प्रसिद्धः । २. उक्तद्वादशाक्षरप्रस्तारस्य चतुःशतचतुःषष्ठ्यधिकैकसहस्रतमो ( १४६४ ) भेदो 'द्रुतविलम्बित'नाम्ना ख्यातः, 'उज्ज्वला' इति नामान्तरम् मं० म० । 'सुन्दरी' इति प्रा० पि० सू० २।१४५.

जगतीत्यधिकारे यावद्भिः सकारैः (।।ऽ)जगतीपादः पूर्यते, तावन्त एकपादे सका भवन्ति तद्वृत्तं 'तोटकं' नाम । तत्रोदाहरणम्—

सगणः सगणः सगणः सगणः  सगणः सगणः सगणः सगणः

।·।·ऽ—।·।·ऽ—।·।·ऽ—।·।·ऽ  ।·।·ऽ—।·।·ऽ—।·।·ऽ—।·।·ऽ

त्यज तो–टकम–र्थनियो–गकरं  प्रमदा–धिकृतं व्यसनो–पहतम् ।

सगणः सगणः सगणः सगणः  सगणः सगणः सगणः सगणः

।·।·ऽ—।·।·ऽ—।·।·ऽ—।·।·ऽ  ।·।·ऽ—।·।·ऽ—।·।·ऽ—।·।·ऽ

उपधा–भिरशु–द्धमतिं सचिवं  नरना–यक! भी–रुकमा–युधिकम् ।

पादान्ते यतिः ।[२]

## पुटो नौ म्यौ वसुसमुद्राः ॥ ६ । ३२ ॥

यस्य पादे नगणौ ( ।।।. ।।। ) मगणयगणौ ( ऽऽऽ. ।ऽऽ ) च तद्वृत्तं 'पुटो' नाम । अष्टभिश्चतुर्भिश्च यतिः । तत्रोदाहरणम्—

नगणः नगणः मगणः यगणः

।·।·।—।·।·।—ऽ·ऽ · ऽ—।·ऽ·ऽ

न विच–लति क–थ श्चि(८)द्या–यमार्गा(४)–

नगणः नगणः मगणः यगणः

।·।·।—।·।·।—ऽ·ऽ · ऽ—।·ऽ·ऽ

द्व्यसुनि शिथिल–मुष्टिः(८)पा–र्थिवो यः(४) ।

नगणः नगणः मगणः यगणः

।·।·।—।·।·।—ऽ·ऽ · ऽ—।·ऽ·ऽ

अमृत–पुट इ–वासौ(८)पु–ण्यकर्मा(४)–

नगणः नगणः मगणः यगणः

।·।·।—।·।·।—ऽ·ऽ · ऽ—।·ऽ·ऽ

भवति जगति सेव्यः(८)स–र्वलोकैः (४) ॥

---

१. उक्तद्वादशाक्षरप्रस्तारस्य सप्तशतषट्पञ्चाशदधिकैकसहस्रतमो ( १७५६ ) भेदः **'तोटक'** इति नाम्ना प्रसिद्धः । २. इतः परं "अस्य चोदाहरणान्तरमपि यथा—

अमुना यमुनाजलकेलिभृता सहसा तरसा परिरभ्य धृता ।
हरिणा हरिणाकुलनेत्रवती न ययौ नवयौवनभारवती ॥"

इति क्वचिद्दृश्यते । एतत्प्रक्षिप्तमिव प्रतिभाति; भेदान्तराभाव उदाहरणान्तरस्य वैयर्थ्यात् । ३. उक्तद्वादशाक्षरप्रस्तारस्य षट्सप्तत्यधिकपञ्चशततमो ( ५७६ ) भेदः **'पुट'** इति नाम्ना ख्यातः । ग्रन्थान्तरेषु चास्यैव **'श्रीपुट'** इति नाम प्रसिद्धम् ।

**जलोद्धतगतिर्ज्सौ ज्सौ रसर्तवः ॥ ६ । ३३ ॥**

यस्य पादे जगणसगणौ (।ऽ।. ।।ऽ) पुनरपि तावेव (।ऽ।. ।।ऽ), तद्वृत्तं 'जलोद्धतगति'र्नाम । षड्भिः षड्भिश्च यतिः ।

जगणः सगणः जगणः सगणः जगणः सगणः जगणः सगणः

।·ऽ·। ।·।·ऽ ।·ऽ·।—।·।·ऽ ।·ऽ·।—।·।·ऽ ।·ऽ·।—।·।·ऽ

भनक्ति समरे(६) बहून–पि रिपून्(६) हरिः प्र–भुरसौ(६) भुजोर्जि–तबलः(६)।

जगणः सगणः जगणः सगणः जगणः सगणः जगणः सगणः

।·ऽ·।—।·।·ऽ ।·ऽ·। ।·।·ऽ ।·ऽ·।—।·।·ऽ ।·ऽ·। ।·।·ऽ

जलोद्ध–तगति–(६)र्यथैव मकर–(६) स्तरङ्ग–निकरं(६) करेण परितः(६) ॥

**ततं[2] नौ म्रौ ॥ ६ । ३४ ॥**

यस्य पादे नगणौ (।।।. ।।।) मगणरगणौ (ऽऽऽ. ऽ।ऽ) च तत् 'ततं[3]' नाम ॥

नगणः नगणः मगणः रगणः नगणः नगणः मगणः रगणः

।·।·।—।·।·।—ऽ·ऽ·ऽ—ऽ·।·ऽ ।·।·।—।·।·।—ऽ·ऽ·ऽ—ऽ·।·ऽ

कुरु क–रुणमि–यं गाढो–त्कण्ठिका यदुत–नय! च–कोरीभा राधिका ।

नगणः नगणः मगणः रगणः नगणः नगणः मगणः रगणः

।·।·।—।·।·।—ऽ·ऽ·ऽ—ऽ·।·ऽ ।·।·।—।·।·।—ऽ·ऽ·ऽ—ऽ·।·ऽ

विरह–दहन–सन्नाद–ङ्गैः कृशा पिबतु तव मु–खेन्दोर्बि–म्बं दृशा ॥

**कुसुमविचित्रा न्यौ न्यौ ॥ ६ । ३५ ॥[4]**

---

१. उक्तद्वादशाक्षरप्रस्तारस्याष्टशतषडशीत्यधिकैकसहस्रतमो (१८८६) भेदो **'जलोद्धतगतिः'** इति नाम्ना ख्यातः । २. एतदादीनि 'चञ्चलाक्षिका–' इत्यन्तानि सूत्राणि वैदिकैर्न पठ्यन्ते । ३. उक्तद्वादशाक्षरप्रस्तारस्य अष्टाशीत्यधिकैकसहस्रतमभेदः (१०८८) **'ततम्'** इति नाम्ना प्रसिद्धः । ४. अत्र क्वचित्—

**मणिमाला त्यौ त्यौ ।**

इति सूत्रमधिकं पठ्यते । व्याख्यातं चैतदन्यैः–'अत्र प्रतिपादं तगणः, यगणः, तगणः, यगणश्च एतद्वृत्तं मणिमालाख्यं भवति । अस्मिन् वृत्ते षड्भिः षड्भिर्यतिरि'ति । द्वादशाक्षरप्रस्तारस्य एकाशीत्यधिकसप्तशततमोऽयं भेदः (७८१) । उदाहरणं तु—

वृन्दारकवृन्दामन्दीकृतवन्द्यं वन्दे जननन्दं स्कन्दं शिवकन्दम् ।
चण्डीकृतसन्धं बन्धुं गुणसिन्धुं कुन्दं पदकुन्दं वन्देऽमरवन्द्यम् ॥

इति । **'त्यौ त्यौ मणिमाला छिन्ना गुहवक्त्रैः'**–वृ० र० ।

यस्य पादे नगणयगणौ (।।।.।ऽऽ) पुनरपि तावेव (।।।.।ऽऽ) तत् 'कुसुमविचित्रा' नाम ।

नगणः यगणः नगणः यगणः　　नगणः यगणः नगणः यगणः

।·।·।—।·ऽ·ऽ ।·।·।—।·ऽ·ऽ　　।·।·।—।·ऽ·ऽ ।·।·।—।·ऽ·ऽ

विगलि–तहारा सकुसु–ममाला　　सचर–णलाक्षा वलय–सुलक्षा ।

नगणः यगणः नगणः यगणः　　नगणः यगणः नगणः यगणः

।·।·।—।·ऽ·ऽ ।·।·।—।·ऽ·ऽ　　।·।·।—।·ऽ·ऽ ।·।·।—।·ऽ·ऽ

विरचि–तवेषं सुरत–विशेषं　　कथय–ति शय्या कुसुम–विचित्रा ॥

## चञ्चलाक्षिका नौ रौ ॥ ६ । ३६ ॥

यस्य पादे नगणौ (।।।.।।।) रगणौ (ऽ।ऽ.ऽ।ऽ) च भवतस्तद्वृत्तं 'चञ्चलाक्षिका'[3] नाम ।

नगणः नगणः रगणः रगणः　　नगणः नगणः रगणः रगणः

।·।·।—।·।·।—ऽ·।·ऽ—ऽ·।·ऽ　　।·।·।—।·।·।—ऽ·।·ऽ—ऽ·।·ऽ

अति सु–रभिर–भाजि पु–ष्पश्रिया–　　मतनु–तरत–येव सं–तानकः ।

नगणः नगणः रगणः रगणः　　नगणः नगणः रगणः रगणः

।·।·।—।·।·।—ऽ·।·ऽ ऽ·।·ऽ　　।·।·।—।·।·।—ऽ·।·ऽ—ऽ·।·ऽ

तरुण–परभृ–तः स्वनं रागिणा–　　मतनु–त रत–ये वसं–तानकः ॥

(शि० व० ६।६७)

## भुजङ्गप्रयातं यः ॥ ६ । ३७ ॥

यस्य पादे चत्वारो यगणा (।ऽऽ.।ऽऽ.।ऽऽ.।ऽऽ) भवन्ति, तद् 'भुजङ्गप्रयातं'[3] नाम ।

यगणः यगणः यगणः यगणः　　यगणः यगणः यगणः यगणः

।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ　　।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ

पुरः सा–धुवद्धि–क्ति मिथ्या विनीतः　　परोक्षे करोत्य–र्थनाशं हताशः ।

यगणः यगणः यगणः यगणः　　यगणः यगणः यगणः यगणः

।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ　　।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ

भुजङ्ग–प्रयातो–पमं य–स्य चित्तं　　त्यजेत्ता–दृशं दु–श्चरित्रं कुमित्रम् ॥

अत्र पादान्ते यतिः ।

---

१. उक्तद्वादशाक्षरप्रस्तारस्य षट्सप्तत्यधिकनवशततमो (९७६) भेदः 'कुसुमविचित्रा' इति नाम्ना प्रसिद्धः । अत्र 'भिद्रसै रसैः' मं० म० । २. उक्तद्वादशाक्षरप्रस्तारस्य द्विशतषोडशाधिकैकसहस्रतमो भेदः (१२१६) 'चञ्चलाक्षिका' इति नाम्ना ख्यातः । इयमेव 'गौरी'–(पि० सू० ८।५), 'मुदितवदना'–ग० पु०, 'प्रमुदितवदना'–वृ० र०, सप्तसु पञ्चसु च यतिनियमादियमेव 'प्रभा' च । तदुक्तम्—'स्वरशरविरतिर्ननौ रौ प्रभा' वृ० र० । ३. उक्तद्वादशाक्षरप्रस्तारस्य षडशीत्युत्तरपञ्चशततमो भेदः (५८६) 'भुजङ्गप्रयातम्' इति नाम्ना विख्यातः । ४. 'भाति' क० मु० पुस्तके ।

## स्रग्विणी रः ॥ ६ । ३८ ॥

यस्य पादे रगणा( ऽ।ऽ. ऽ।ऽ. ऽ।ऽ. ऽ।ऽ )श्चत्वारस्तत् 'स्रग्विणी'[1] नाम।

रगणः रगणः रगणः रगणः रगणः रगणः रगणः रगणः

ऽ·।·ऽ ऽ·।·ऽ ऽ·।·ऽ ऽ·।·ऽ ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ

यो रणे युध्यते निर्भरं निर्भय- स्त्यागिता यस्य स-र्वस्वदा-नावधिः।

रगणः रगणः रगणः रगणः रगणः रगणः रगणः रगणः

ऽ·।·ऽ ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ

तं नरं वीरल-क्ष्मीर्यशः-स्रग्विणी नूनम-भ्येति स-त्कीर्तिशु-क्लांशुका ॥

## प्रमिताक्षरा सजौ सौ ॥ ६ । ३९ ॥

यस्य पादे सगणजगणौ (।।ऽ. ।ऽ।) सगणौ (।।ऽ. ।।ऽ) च भवतस्तद्वृत्तं 'प्रमिताक्षरा'[2] नाम। तत्रोदाहरणम्—

सगणः जगणः सगणः सगणः सगणः जगणः सगणः सगणः

।·।·ऽ—।·ऽ·।—।·।·ऽ—।·।·ऽ ।·।·ऽ—।·ऽ·।—।·।·ऽ—।·।·ऽ

परिशु-द्धवाक्य-रचना-तिशयं परिषि-ञ्चती श्र-वणयो-रमृतम्।

सगणः जगणः सगणः सगणः सगणः जगणः सगणः सगणः

।·।·ऽ—।·ऽ·।—।·।·ऽ—।·।·ऽ ।·।·ऽ—।·ऽ·।—।·।·ऽ ।·।·ऽ

प्रमिता-क्षरापि विपुला-र्थवती तव भा-रती ह-रति मे हृदयम् ॥

अत्र पादान्ते यतिः।

## कान्तोत्पीडा भ्मौ स्मौ ॥ ६ । ४० ॥

यस्य पादे भगणमगणौ ( ऽ।।. ऽऽऽ ) सगणमगणौ ( ऽ।।. ऽऽऽ ) च भवतस्तद्वृत्तं 'कान्तोत्पीडा'[3] नाम। तत्रोदाहरणम्—

भगणः मगणः सगणः मगणः भगणः मगणः सगणः मगणः

ऽ·।·।—ऽ·ऽ·ऽ ।·।·ऽ—ऽ·ऽ·ऽ ऽ·।·।—ऽ·ऽ·ऽ ।·।·ऽ—ऽ·ऽ·ऽ

कामश-रैर्व्याप्ता खलु का-न्तोत्पीडा- माप्तव-ती दुःखैः परिमु-ह्यन्ती या।

भगणः मगणः सगणः मगणः भगणः मगणः सगणः मगणः

ऽ·।·।—ऽ·ऽ·ऽ—।·।·ऽ—ऽ·ऽ·ऽ ऽ·।·।—ऽ·ऽ· ऽ—।·।·ऽ—ऽ·ऽ·ऽ

सा लभ-ते चेत्का-मुकयो-गं गाढं दुःखवि-मुक्ता स्या-त्परमा-नन्दाप्ता ॥

---

१. उक्तद्वादशाक्षरप्रस्तारस्यैकशतैकसप्तत्यधिकैकसहस्रतमो (११७१) 'स्रग्विणी' इति नाम्ना प्रसिद्धः। 'लक्ष्मीधर' इति नामान्तरं प्रा० पि० सू० २।१३३। २. उक्तद्वादशाक्षरप्रस्तारस्य सप्तशतद्विसप्तत्यधिकैकसहस्रतमो भेदः (१७७२) 'प्रमिताक्षरा' इति नाम्ना ख्यातः। ३. उक्तद्वादशाक्षरप्रस्तारस्य एकोनशताधिकैकशततमो भेदः (१९९) 'कान्तोत्पीडा' इति नाम्ना ख्यातः।

## वैश्वदेवी मौ याविन्द्रियऋषयः ॥ ६ । ४१ ॥

यस्य पादे मगणौ ( SSS. SSS ) यगणौ ( ISS. ISS ) च भवतस्तद्वृत्तं 'वैश्वदेवी' नाम । पञ्चसु सप्तसु च यतिः । तत्रोदाहरणम्—

मगणः　मगणः　यगणः　यगणः
S· S· S—S· S · S—I·S·S—I·S·S
धन्यः पु—ण्यात्मा(५)जा—यते क्वा—पि वंशे(७)

मगणः　मगणः　यगणः　यगणः
S·S·S—S· S · S—I·S·S—I·S·S
तादृक्पु—त्रोऽसौ(५)ये—न गोत्रं पवित्रम्(७) ।

मगणः　मगणः　यगणः　यगणः
S·S·S—S·S · S—I·S·S—I·S·S
गोविप्र—ज्ञाति(५)स्वा—मिकार्ये प्रवृत्तः(७)

मगणः　मगणः　यगणः　यगणः
S·S· S—S·S · S—I·S·S—I·S·S
शुद्धः श्रा—द्धादौ(५)वै—श्वदेवी भवेद्यः(७) ॥

## वाहिनी त्यौ म्यावृषिकामशराः ॥ ६ । ४२ ॥

यस्य पादे तगणयगणौ ( SSI. ISS ) मगणयगणौ ( SSS. ISS ) च भवतस्तद्वृत्तं 'वाहिनी' नाम । सप्तभिः पञ्चभिश्च यतिः । तत्रोदाहरणम्—

तगणः　यगणः　मगणः　यगणः
S·S·I—I·S·S—S · S·S—I·S·S
[ शक्ता ज—गतीं कृ—त्स्नां(७)जेतुं सुयोधा(५)

तगणः　यगणः　मगणः　यगणः
S·S·I—I·S·S—S · S·S—I·S·S
हस्त्यश्व—रथोदा—रा(७)सा वा—हिनी ते(५) ।

---

१. उक्तद्वादशाक्षरप्रस्तारस्य सप्तसप्तत्यधिकपञ्चशततमो (५७७) भेदो '**वैश्वदेवी**' इति नाम्ना प्रसिद्धः । २. 'तकारयकारौ मकारगकारौ' क० मु० पुस्तके । ३. उक्तद्वादशाक्षरप्रस्तारस्य एकोनसप्तत्यधिकद्विशततमो भेदः (२६९) '**वाहिनी**' इति नाम्ना ख्यातः ।

तगणः यगणः मगणः यगणः

S·S·I—I·S·S—S · S·S—I·S·S

छन्ने र–जसा भा–नौ(७)यस्याः प्रयाणे(५)

तगणः यगणः मगणः यगणः

S·S· I—I·S·S—S · S·S—I·S·S

घस्रेऽपि निशाभ्रा–न्तिं(७)धत्ते नृलोकः(५) ॥ ][1]

## नवमालिनी नूजौ भ्याविति ॥ ६ । ४२ ॥

यस्य पादे नगणजगणभगणयगणा ( ।।।. ।S।. S।।. ।SS ) भवन्ति तद्वृत्तं 'नवमालिनी'[2] नाम । तत्रोदाहरणम्—

नगणः जगणः भगणः यगणः नगणः जगणः भगणः यगणः

I·I·I—I·S·I—S·I · I—I·S·S I·I·I—I·S·I—S·I · I—I·S·S

धवल–यशोंऽशु–केन(८)प–रिवीता(४) सकल–जनानु–राग(८)घु–सृणाक्ता(४) ।

नगणः जगणः भगणः यगणः नगणः जगणः भगणः यगणः

I·I·I—I·S·I—S·I · I—I·S·S I·I·I—I·S·I—S·I · I—I·S·S

दृढगु–णबद्ध–कीर्ति(८)कु–सुमौघै(४) स्तव न–वमालि–नीव(८)नृ–प लक्ष्मीः(४) ॥

अत्र वसुसमुद्रैर्यतिरित्याम्नायः ।

इति भट्टहलायुधविरचितायां छन्दोवृत्तौ षष्ठोऽध्यायः ।

---

१. अत्र प्राचीनमुदाहरणं न लब्धमित्येतदस्माभिः स्वीयं निवेशितम् । केचित्तु—'वाहिनी त्मौ म्या–'विति सूत्रं पठन्ति । तत्रोक्तद्वादशाक्षरप्रस्तारस्य एकविंशत्यधिकपञ्चशततमो ( ५२१ )ऽयं भेदः । उदाहरणं च—

'यो वाहिनीं क्रव्यादां त्र्यव्यर्धमात्रात् हन्तुं हि शक्तोऽनन्तः सोऽप्यत्र मूर्च्छाम् ।
प्राप्तः किमेतच्चित्रं पौलस्त्यशक्त्या? ज्ञातुं न शक्यतेऽज्ञैश्चारित्र्यमेषाम् ॥'

इति द्रष्टव्यम् । वस्तुतस्तु—सूत्रमेतद्वैदिकैर्न पठ्यते, न चामेये नूयत इति प्रक्षिप्तमेवेत्यन्यदेतत् । २. उक्तद्वादशाक्षरप्रस्तारस्य चतुश्चत्वारिंशदधिकनवशततमो ( ९४४ ) भेदो 'नव-मालिनी' इति नाम्ना प्रसिद्धः । श्रीकृष्णेन तु 'अर्कसायकैश्छिन्ना ।' इत्यन्यथैव यतिरुक्ता ।

सप्तमोऽध्यायः ।

इदानीमतिजगती शक्वर्यतिशक्वर्यष्टिरत्यष्टिर्धृतिरतिधृतिश्चेति सप्त अतिच्छन्दांसि एकै-काक्षरवृद्ध्या क्रमेणोदाह्रियन्ते ।

तत्र—

(अतिजगत्याम्)

---

१. 'अतिजगतीच्छन्दःपादघटकीभूतानां त्रयोदशसंख्याकानामक्षराणां प्रस्तारे कृते एकशतद्विनवत्यधिकाष्टसहस्र(८१९२)भेदा जायन्ते। तेषु च भेदचतुष्कमेवात्र समुपदिष्टमिति ग्रन्थान्तरेभ्यः समुपलभ्यमाना भेदा अत्र विनिर्दिश्यन्ते । यथा—

**सुनन्दिनीच्छन्दः (१३।२३६)**—'**सुनन्दिनी** सजसा मगौ ।' ग० पु० १।२०९।२१.

**कन्दुकच्छन्दः (१३।५८६)**—'इदं **कन्दुकं** यत्र येभ्यश्चतुर्भ्यो गः ।'

**चञ्चरीकावलीच्छन्दः (१३।११५४)**—'यमौ रौ विख्याता **चञ्चरीकावली** गः ।' वृ० र० '**मञ्जरीकावली**' इति क्वचित् ।

**विश्वच्छन्दः (१३।११७१)**—'रैश्चतुर्भिर्युतं गेन युक्तं च **विश्वम्** ।' अ० वृ० र०

**चन्द्रलेखाच्छन्दः (१३।११८४)**—'नसरयुगगैश्चन्द्रलेखर्तुलोकैः ।' वृत्तरत्नाकरपरिशिष्टे ।

**उर्वशीच्छन्दः (१३।१३२४)**—'**उर्वशी** नस्ततरगा राज्याङ्गैर्ऋतुभिर्यतिः ।' मं० म०

**मोहप्रलापच्छन्दः (१३।१३२९)**—'**मोहप्रलापः** श्रुतिभिर्महैर्भिन्नो भभत्रगाः ।' मं० म०

**चन्द्रिकाच्छन्दः (१३।१३४४)**—'ननतरगुरुभिश्चन्द्रिकाश्वर्षिभिः ।' वृ० र०

**मृगेन्द्रमुखच्छन्दः (१३।१३९२)**—'भवति **मृगेन्द्रमुखं** नजौ जरौ गः ।'

**तारकच्छन्दः (१३।१७५६)**—'यदि तोटकवृत्तपदे गुरुरेको भवतीह तदा किल **तारकवृत्तम्**' वाणीभूषणे २।१५१.

**चण्डीच्छन्दः (१३।१७९२)**—'नयुगलसयुगलगैरिति **चण्डी** ।' वृत्तरत्नाकरछन्दोमञ्जर्यादिषु ।

**उपस्थितच्छन्दः (१३।१८२२)**—'**उपस्थितमिदं** ज्सौ त्सौ सगुरुकौ चेत् ।'

**कुटजगतिच्छन्दः (१३।२०९६)**—'**कुटजगति**र्नजौ पबर्तु भ्ता गुरुः ।'

**क्षमाच्छन्दः (१३।२३६८)**—'तुरगरसयतिर्नौ ततौ गः **क्षमा** ।' वृ० र० अस्यैव छन्दसः '**विद्युत्**', '**उत्पलिनी**'ति च नामान्तरे ।

**मञ्जुहासिनीच्छन्दः (१३।२७९०)**—'जतौ सजौ गो भवति **मञ्जुहासिनी** ।'

**प्रहर्षिणी म्नौ जरौ गु त्रिकदशकौ ॥ ७ । १ ॥**

यस्य पादे मगणनगणौ ( SSS. ।।। ) जगणरगणगकाराश्च ( ।S।. S।S. S ) भवन्ति, तद्वृत्तं 'प्रहर्षिणी' नाम । त्रिभिर्दशभिश्च यतिः । तत्रोदाहरणम्—

मगणः नगणः जगणः रगणः गु०

S·S·S — ।·।·।—।·S·।—S·।·S—S

उत्तुङ्ग(३)स्तनक-लशद्व-योन्नता-ङ्गी(१०)

मगणः नगणः जगणः रगणः गु०

S·S·S ।·।·।—।·S·। S·।·S S

लोलाक्षी(३)विपुल-नितम्ब-शालिनी च(१०)।

मगणः नगणः जगणः रगणः गु०

S· S· S ।·।·।—।· S·।—S·।·S— S

बिम्बोष्ठी(३)नरव-र! मुष्टि-मेयम-ध्या(१०)

मगणः नगणः जगणः रगणः गु०

S·S·S ।·।·। ।·S·।—S·।·S S

सा नारी(३)भवतु मनःप्र-हर्षिणी ते(१०) ॥

---

**मञ्जुभाषिणीच्छन्दः (१३।२७९६)**—'सजसा जगौ भवति **मञ्जुभाषिणी** ।' अस्यैव '**कलहंसः, प्रबोधिता, सिंहनादः, नन्दिनी,**'ति च नामान्तराणि वृत्तरत्नाकरपरिशिष्टादिषूपलभ्यन्ते ।

**कलहंसीच्छन्दः (१३।३२७७)**—'**कलहंसी** तयसभाः गौ यती रससिद्धिभिः ।'

मं० म० ।

**रतिच्छन्दः (१३।४०८४)**—'चतुर्भिर्नवभिश्छिन्ना **रतिः** सभनसा गुरुः ।'

मं० म० ।

**कन्दच्छन्दः (१३।४६८२)**—

'धजा तूर हारो पुणो तूर हारेण गुरू सह किज्जे अ एक्का तआरेण ।
कएसा कला कंदु जंपिज णाएण असी होइ चउअग्गला सव्वपा एण ॥'

प्राकृतपिङ्गलसूत्रे २।१६३.

**पङ्क्तावलीच्छन्दः (१३।६९३९)**—

'चामर पढमहि पापगणो धुअ सल्ल चरणगण ठावहि तं जुअ ।
सोलह कलअ पआपअं जाणिअ पिंगल पभणइ पंकअवालिअ ॥'

प्राकृतपिङ्गलसूत्रे २।१६५.

१. उक्तत्रयोदशाक्षरप्रस्तारस्य चतुःशतैकाधिकैकसहस्रतमो भेदः ( १४०१ ) 'प्रहर्षिणी' इति नाम्ना ख्यातः ।

## रुचिरा ज्भौ स्जौ ग् चतुर्नवकौ ॥ ७ । २ ॥

यस्य पादे जगणभगणौ ( ।ऽ।. ऽ।। ) सगणजगणौ ( ।।ऽ. ।ऽ। ) गुरुश्च (ऽ), तद्वृत्तं 'रुचिरा' नाम । चतुर्भिर्नवभिश्च यतिः । तत्रोदाहरणम्—

जगणः　भगणः　सगणः　जगणः　गु०
।·ऽ·।—ऽ · ।·।—।·।·ऽ—।·ऽ·।—ऽ
मृगत्व—चा(४)रुचि—रतरा—म्बरश्रि—यः(९)

जगणः　भगणः　सगणः　जगणः　गु०
।·ऽ·।—ऽ · ।·।—।·।·ऽ—।·ऽ·।—ऽ
कपाल—भृ(४)त्कपि—लजटा—प्रपल्ल—वः(९) ।

जगणः　भगणः　सगणः　जगणः　गु०
।·ऽ·।—ऽ · ।·।—।·।·ऽ—।·ऽ·।—ऽ
ललाट—दृ(४)ग्दह—नतृणी—कृतस्म—रः(९)

जगणः　भगणः　सगणः　जगणः　गु०
।·ऽ·। ऽ · ।·।—।·।·ऽ—।·ऽ· ।—ऽ
पुनातु　वः(४)शिशु—शशिशे—खरः शि—वः(९) ॥

## मत्तमयूरं म्तौ य्सौ ग् समुद्रनवकौ ॥ ७ । ३ ॥

यस्य पादे मगणतगणयगणसगणगकाराः ( ऽऽऽ. ऽऽ।. ।ऽऽ. ।।ऽ. ऽ ) भवन्ति, तद्वृत्तं 'मत्तमयूरम्' नाम । पूर्ववै यतिः । तत्रोदाहरणम्—

मगणः　तगणः　यगणः　सगणः　गु०　मगणः　तगणः　यगणः　सगणः　गु०
ऽ·ऽ·ऽ—ऽ·ऽ·।—।·ऽ·ऽ—।·।·ऽ—ऽ　ऽ·ऽ·ऽ—ऽ·ऽ·।—।·ऽ·ऽ—।·।·ऽ—ऽ
व्यूढोर—स्कः सिंह—समाना—नतम—ध्यः　पीनस्क—न्धः सिन्धु—रहस्ता—यतबा—हुः ।

मगणः　तगणः　यगणः　सगणः　गु०　मगणः　तगणः　यगणः　सगणः　गु०
ऽ·ऽ·ऽ—ऽ·ऽ·।—।·ऽ·ऽ—।·।·ऽ—ऽ　ऽ·ऽ·ऽ—ऽ·ऽ·।—।·ऽ·ऽ—।·।·ऽ—ऽ
कम्बुग्री—वः स्निग्ध—शरीर—स्तनुलो—मा　भुङ्क्ते रा—ज्यं मत्त—मयूरा—कृति ने—त्रः ॥

## गौरी नौ न्सौ ग् ॥ ७ । ४ ॥

यस्य पादे नगणत्रयं ( ।।।. ।।।. ।।। ) सगणो ( ।।ऽ ) गुरुश्च ( ऽ ), तद्वृत्तं 'गौरी' नाम । तत्रोदाहरणम्—

---

१. उक्तत्रयोदशाक्षरप्रस्तारस्याष्टशतषडधिकद्विसहस्रतमो (२८०६) भेदः **'रुचिरा'** इति नाम्ना ख्यातः । अस्यैव **'अतिरुचिरा'** इत्यपि नाम । २. उक्तत्रयोदशाक्षरप्रस्तारस्य षट्शतत्रयस्त्रिंशदधिकैकसहस्रतमो ( १६३३ ) भेदः **'मत्तमयूरम्'** इति नाम्ना प्रसिद्धः । ३. उक्तत्रयोदशाक्षरप्रस्तारस्याष्टचत्वारिंशदधिकद्विसहस्रतमो ( २०४८ ) भेदो **'गौरी'** इति नाम्ना ख्यातः ।

नगणः नगणः नगणः समणः गु०

।·।·।—।·।·।—।·।·।—।·।·ऽ—ऽ

सकल–भुवन–जगण–नतपा–दा

नगणः नगणः नगणः समणः गु०

।·।·।—।·।·।—।·।·।—।·।·ऽ—ऽ

बिजय–दभज–नशमि–त विषा–दा ।

नगणः नगणः नगणः सगणः गु०

।·।·।—।·।·।—।·।·।—।·।·ऽ—ऽ

विजित–सरसि–रुहन–यनप–या

नगणः नगणः नगणः सगणः गु०

।·।·। ।·।·।—।·।·।—।·।·ऽ—ऽ

भरतु सकल–मिह ज–गति गौ–री ॥

( शर्कर्याम् )

---

१. केषुचित् पुस्तकेषु एषैव शक्करी 'शर्करी' इत्युद्दिश्यते। शक्करीच्छन्दःपादघटकीभूतानां चतुर्दशसंख्याकानामक्षराणां प्रस्तारे कृते त्रिशतचतुरशीत्यधिकषोडशसहस्रभेदा (१६३८४) जायन्ते; परमत्र **असंबाधा, अपराजिता, प्रहरणकलिता, वसन्ततिलका** चेति भेदचतुष्टयमेव निर्दिष्टम्। ग्रन्थेष्वन्येष्वन्येऽपि भेदा उपलभ्यन्ते तेऽत्र क्रमशो विलिख्यन्ते—

**वासन्तीच्छन्दः (१४।४८१)**—'मात्तो नो मो गौ यदि गदिता **वासन्तीयम्**।'

**मध्यक्षामाच्छन्दः (१४।४९७)**—'**मध्यक्षामा** युगदशविरामा म्भौ न्मौ गौ।'
'**हंसश्येनी**' इति नामान्तरमन्यत्र ।

**कुटिलच्छन्दः (१४।१००९)**—'मो भो न्यौ गौ यदि **कुटिलक**मुक्तं वृत्तम्।'
अ० वृ० र०

**गोवृषच्छन्दः (१४।१६२३)**—'वेदैर्दिग्भिर्मात्तयसा **गोवृष** उक्तो गौ ।'
अ० वृ० र०

**नान्दीमुखीच्छन्दः (१४।२३६८)**—'स्वरभिदि यदि नौ तौ च **नान्दीमुखी** गौ।'

**नदीच्छन्दः (१४।२८८०)**—'ननतजगुरुगैः सप्तयतिर्**नदी** स्यात्।'

**कुमारीच्छन्दः (१४।२९९२)**—'नजभजगैर्गुरुश्च वसुषट् **कुमारी** ।'

**अलोलाच्छन्दः (१४।३०९७)**—'द्विसप्तच्छिद**लोला** म्सौ म्भौ गौ चरणे चेत्।'

**इन्दुवदनाच्छन्दः (१४।३८२३)**—'**इन्दुवदना** भजसनैः सगुरुयुग्मैः।'

**लक्ष्मीच्छन्दः (१४।३९२५)**—'**लक्ष्मी**रन्तविरामा म्सौ तनगुरुयुग्मम्।'

**सुपवित्रच्छन्दः (१४।४०९६)**—'त्रिननगगिति वसुयति **सुपवित्रम्**।'

**मञ्जरीच्छन्दः (१४।४८४४)**—'सजसा यलौ गिति शरग्रहैर्**मञ्जरी** ।'

**पथ्याच्छन्दः (१४।४८४४)**—'**पथ्या** सजसयलौः स्यात्ककुब्भिः श्रुतिभिर्यतिः।'
इयं यतिभेदमात्रेण 'मञ्जर्या' भिद्यते। मं० म०

**चन्द्रौरसः (१४।५१०५)**—म्भौ न्यौ लगौ चेदिह भवति च **चन्द्रौरसः** ।'

**सुकेशरच्छन्दः (१४।५५९२)**—'नरनरैर्लगौ च गदितं **सुकेशरम्**।'

## असंबाधा म्तौ न्सौ गाविन्द्रियनवकौ ॥ ७ । ५ ॥

यस्य पादे मगणतगणनगणसगणा ( SSS. SSI. III. IIS ) गकारौ ( S. S ) च भवतस्तद्वृत्तम् 'असंबाधा' नाम । पञ्चभिर्नवभिश्च यतिः । तत्रोदाहरणम्—

मगणः तगणः नगणः सगणः गु० गु०

S · S · S—S · S · I—I · I · I—I · I · S—S—S

भङ्क्त्वा दु–र्गाणि(५)द्रु–मवन–मखिलं छि–त्त्वा (९)

मगणः तगणः नगणः सगणः गु० गु०

S · S · S—S · S · I—I · I · I—I · I · S—S—S

हत्वा त–त्सैन्यं(५)क–रितुर–गबलं ह–त्वा (९) ।

मगणः तगणः नगणः सगणः गु० गु०

S · S · S—S · S · I—I · I · I—I · I · S—S—S

येनासं–बाधा(५)स्थि–तिरज–नि विप–क्षा–णां (९)

मगणः तगणः नगणः सगणः गु० गु०

S · S · S—S · S · I I · I · I I · I · S—S—S

सर्वोर्वी–नाथः(५)स जयति नृपति–र्मु–ञ्जः (९) ॥

## अपराजिता नौ र्सौ ल्गौ स्वरर्षयः ॥ ७ । ६ ॥

यस्य पादे नगणौ ( III. III ) रगणसगणलकारा गकारश्च ( SIS. IIS. I. S ) तद्वृत्तम् 'अपराजिता' नाम । सप्तभिः सप्तभिश्च यतिः । तत्रोदाहरणम्—

नगणः नगणः रगणः सगणः ल० गु०

I · I · I—I · I · I—S · I · S—I · I · S—I—S

फणिप–तिवल–यं(७)जटा–मुकुटो–ज्ज्व–लं (७)

नगणः नगणः रगणः सगणः ल० गु०

I · I · I—I · I · I—S · I · S—I · I · S—I—S

मनसि–जमथ–नं(७)त्रिशू–लविभू–षि–तम् (७) ।

---

प्रमदाच्छन्दः (१४।७०८८)—'नजभजला गुरुश्च भवति प्रमदा ।'

चक्रपदच्छन्दः (१४।८१९१)—'चक्रपदमिह भनननलगुरुभिः ।'

वृत्तरत्नाकरपरिशिष्टच्छन्दोमञ्जर्यादिषु ॥

१. उक्तचतुर्दशाक्षरप्रस्तारस्य सप्तदशाधिकद्विसहस्रतमो ( २०१७ ) भेदः 'असंबाधा' इति नाम्ना प्रसिद्धः । २. उक्तचतुर्दशाक्षरप्रस्तारस्याष्टशतचतुर्विंशत्यधिकपञ्चसहस्रतमो ( ५८२४ )भेदः 'अपराजिता' इति नाम्ना ख्यातः ।

नगणः नगणः रगणः सगणः ल० गु०

।।।।। ।।।।—ऽ ।ऽ ।।ऽ—।—ऽ

स्मरसि यदि स-खे(७)शिवं शशिशे-ख-रं (७)

नगणः नगणः रगणः सगणः ल० गु०

।।।। ।।।—ऽ ।ऽ—।।ऽ—।—ऽ

भवति तव त-नुः(७)परं-रपरा-जि-ता (७) ॥

## प्रहरणकलिता नौ भ्नौ ल्गौ च ॥ ७ । ७ ॥

यस्य पादे नगणौ (।।।. ।।।) भगणनगणौ, (ऽ।।. ।।।) लकारो गकारश्च (।. ऽ) भवन्ति, तद्वृत्तं 'प्रहरणकलिता' नाम । चकारात्पूर्वोक्तैव यतिः । तत्रोदाहरणम्—

नगणः नगणः भगणः नगणः ल० गु०

।।।—।।।—ऽ ।।—।।।—।—ऽ

सुरमु-निमनु-जै(७)रुप-चितच-र-णां (७)

नगणः नगणः भगणः नगणः ल० गु०

।।।—।।।—ऽ ।।—।।।—।—ऽ

रिपुभ-यचकि-त(७)त्रिभु-वनश-र-णाम् (७) ।

नगणः नगणः भगणः नगणः ल० गु०

।।।—।।।—ऽ ।।—।।।—।—ऽ

प्रणम-त महि-षा(७)सुर-वधकु-पि-तां (७)

नगणः नगणः भगणः नगणः ल० गु०

।।।—।।।—ऽ ।।—।।।—।—ऽ

प्रहर-णकलि-तां(७)पशु-पतिद-यि-ताम् (७) ॥

## वसन्ततिलका त्भौ जौ गौ ॥ ७ । ८ ॥

यस्य पादे तगणभगणौ (ऽऽ।. ऽ।।) जगणौ (।ऽ।. ।ऽ।) गकारौ (ऽ. ऽ) च तद्वृत्तं 'वसन्ततिलका' नाम । तत्रोदाहरणम्—

तगणः भगणः जगणः जगणः गु० गु०

ऽऽ।—ऽ।।—।ऽ।—।ऽ।—ऽ—ऽ

उद्धर्षि-णी जन-दृशां स्त-नभार-गु-र्वी

---

१. उक्तचतुर्दशाक्षरप्रस्तारस्यैकशताष्टाविंशत्यधिकाष्टसहस्रतमो (८१२८) भेदः '**प्रहरणकलिता**' इति नाम्ना ख्यातः । वृत्तरत्नाकरछन्दोमञ्जर्योस्तु 'प्रहरणकलिका' इति पाठः । २. उक्तचतुर्दशाक्षरप्रस्तारस्य नवशतत्रयस्त्रिंशदधिकद्विसहस्रतमो (२९३३) भेदो '**वसन्ततिलका**' इति नाम्ना विख्यातः ।

तगणः भगणः जगणः जगणः गु० गु०

S·S·I—S·I·I—I·S·I—I·S·I—S S

नीलोत्प–लद्युति–मलिम्लु–चलोच–ना च ।

तगणः भगणः जगणः जगणः गु० गु०

S·S·I—S·I·I—I·S·I—I·S·I—S—S

सिंहोन्न–तत्रिक–तटी कु–टिलाल–का–न्ता

तगणः भगणः जगणः जगणः गु० गु०

S·S·I—S·I·I—I·S·I—I·S·I—S—S

कान्ता व–सन्तति–लका नृ–पवल्ल–भा–सौ ॥

पादान्ते यतिः[1] ।

## सिंहोन्नता काश्यपस्य ॥ ७ । ९ ॥

इयमेव वसन्ततिलका काश्यपस्याचार्यस्य मतेन **'सिंहोन्नता'**[2] नाम भवति । पूर्वमेवोदाहरणम् ।

## उद्धर्षिणी सैतवस्य ॥ ७ । १० ॥

इयमेव वसन्ततिलका सैतवस्याचार्यस्य मते **'उद्धर्षिणी'**[3] नाम । पूर्वमेवोदाहरणम् ।

( अतिशक्कर्याम्[4] )

---

१. 'विरतिः सप्तसप्ताक्षरैर्मता ।' इति कृष्णः । २. **'सिंहोद्धता'** इति मं० म० । ३. **'मधुमाधवी'** इति गोमानसः, **'चेतोहिता'** इति रामकीर्तिः । मं० म० । ४. अतिशक्करीछन्दःपादघटकीभूतानां पञ्चदशसंख्याकानां वर्णानां प्रस्तारे कृते सप्तशताष्टषष्ट्यधिकद्वात्रिंशत्सहस्रभेदा (३२७६८) जायन्ते। तेष्वत्र द्वावेव भेदौ निर्दिष्टौ। अतोऽन्येभ्यो ग्रन्थेभ्य आकृष्योपलभ्यमाना भेदा निर्दिश्यन्ते। यथा—

**लीलाखेलच्छन्दः (१५।१)**—'एकन्यूनौ विद्युन्मालापादौ चेल्लीलाखेलः ।' अस्यैव **'कामक्रीडा'** इति **'सारङ्गिका'** इति च नामान्तरे ।

**चित्राच्छन्दः (१५।४६०८)**—**'चित्रा**नामच्छन्दश्चित्रं चेत्त्रयो मा यकारौ ।'

**चन्द्रलेखाच्छन्दः (१५।४६२५)**—'म्रौ म्यौ यान्तौ भवेतां सप्ताष्टभिश्चन्द्रलेखा ।' **'चन्द्रसेना'** इति नामान्तरं कृष्णीये ।

**चन्द्रकान्ताच्छन्दः (१५।५६५१)**—**'चन्द्रकान्ता** मता रौ मः स्यौ विरतिः स्वराष्टौ ।'

**ऋषभच्छन्दः (१५।५८६८)**—**'ऋषभा**ख्यमेतदुदितं सजसाः सयौ चेत् ।'

**एलाच्छन्दः (१५।८१७२)**—'सजना नयौ शरदशयतिरियमेला ।' **'रेखा'** इत्यस्या नामान्तरम् ।

## चन्द्रावर्ता नौ नौ स्॥ ७ । ११ ॥

यस्य पादे नगणाश्चत्वारः ( ।।।. ।।।. ।।।. ।।। ) सगणश्च ( ।।ऽ ), तद्वृत्तं 'चन्द्रावर्ता' नाम । तत्रोदाहरणम्—

नगणः नगणः नगणः नगणः सगणः
।·।·।—।·।·।—। · ।·।—।·।·।—।·।·ऽ
पटुज–वपव–न(७)चलि–तजल–लहरी (८)

नगणः नगणः नगणः नगणः सगणः
।·।·।—।·।·।—। · ।·।—।·।·।—।·।·ऽ
तरलि–तविह–ग(७)निव–हरव–मुखरम् (८) ।

नगणः नगणः नगणः नगणः सगणः
।·।·।—।·।·।—। · ।·।—।·।·। ।·।·ऽ
विकसि–तकम–ल(७)सुर–भिशुचि सलिलं (८)

नगणः नगणः नगणः नगणः सगणः
।·।·।—।·।·।—। · ।·।—।·।·।—।·।·ऽ
विचर–ति पथि–क(७)मन–सि शर–दि सरः (८) ॥

---

**विपिनतिलकच्छन्दः (१५।९६९६)**—'**विपिनतिलकं** नसनरेफयुग्मैर्भवेत् ।'

**प्रभद्रकच्छन्दः (१५।११९८४)**—'भवति नजौ भजौ रसहितौ **प्रभद्रकम्** ।'
अस्यैव '**सुखेलकम्**' इति नामान्तरम् ।

**उपमालिनीच्छन्दः (१५।११५८४)**—'ननतभरकृताष्टस्वरै**रुपमालिनी** ।'

**मानसहंसच्छन्दः (१५।११६२८)**—'कथयन्ति **मानसहंस**नाम सजौ जभर् ।'

**निशिपालकच्छन्दः (१५।१२००५)**—'शंस **निशिपालक**मिदं भजसनाश्च रः।'
वृत्तरत्नाकरतत्परिशिष्टछन्दोमञ्जर्यादिषु ।

**नलिनीच्छन्दः (१५।१३०४४)**—'सगणैः शिववक्त्रमितैर्गदिता **नलिनी** ।'

**भ्रमरावलीच्छन्दः (१५।१४०४४)**—
'कर पंच पसिद्ध विलद्धवरं रअणं पभणंति मणोहर छंदवरं रअणं ।
गुरु पंच दहा लहु एरिसिअं रइअं **भमरावलि** छंद पसिद्ध किअं ठइअं ॥'
( प्रा० पि० सू० २।१८५)

**तूणकच्छन्दः (१५।१९०२३)**—'**तूणकं** समानिकापदद्वयं विनान्तिमम् ।'
अत्र–'द्वीपवसुभिर्यतिः ।' इति कृष्णः । अस्यैव '**चामर**' इति नामान्तरम् ।

१. उक्तपञ्चदशाक्षरप्रस्तारस्य त्रिशतचतुरशीत्यधिकषोडशसहस्रतमो (१६३८४) भेदः '**चन्द्रावर्ता**' इति नाम्ना ख्यातः । अत्रोदाहरणे 'चन्द्रावर्ता' इति चतुर्गुरुकं नाम प्रवेष्टुमशक्यमिति न प्रवेशितम् । अत एव वृत्तरत्नाकरादिषु '**शशिकला**' इत्येव नाम समुपलभ्यते । प्राकृतपिङ्गलसूत्रे च अस्यैव छन्दसः '**शरभः**' इति नाम.

अत्र स्वरैर्वसुभिश्च यतिरित्याम्नायः ।

**मालर्तुनवकौ चेत् ॥ ७ । १२ ॥**

सैव चन्द्रावर्ता 'माला'[1] नाम भवति; यदा षष्ठे, नवमे च वर्णे यतिः । तत्रोदाहरणम्—

नगणः नगणः नगणः नगणः सगणः

।·।·।—।·।·। — ।·।·।—।·।·।—।·।·S

नववि–कसित(६)–कुवल–यदल–नयने (९)

नगणः नगणः नगणः नगणः सगणः

।·।·।—।·।·। — ।·।·। ।·।·। ।·।·S

निशम–य नव(६)–जलध–रमिह गगने (९) ।

नगणः नगणः नगणः नगणः सगणः

।·।·।—।·।·। — ।·।·।—।·।·। ।·।·S

अपन–य रुष(६)–मुपस–र मम सविधं (९)

नगणः नगणः नगणः नगणः सगणः

।·।·।—।·।·। — ।·।·।—।·।·।—।·।·S

यदि र–तिसुख(६)–मभिल–षसि ब–हुविधम् (९) ॥

**मणिगुणनिकरो[2] वसूषयः ॥ ७ । १३ ॥**

सैव चन्द्रावर्ता 'मणिगुणनिकरो'[3] नाम भवति, यदाष्टभिः, सप्तभिश्च यतिः । तत्रोदाहरणम्—

नगणः नगणः नगणः नगणः सगणः

।·।·।—।· ।·।—।·। · ।—।·।·।—।· ।·S

कथम–पि निप–तित(८)म–तिमह–ति पदे (७)

नगणः नगणः नगणः नगणः सगणः

।·।·।—।·।·।—।·। · ।—।·।·।—।·।·S

नरम–नु–सर–ति न(८)फ–लमनु–पचितम् (७) ।

नगणः नगणः नगणः नगणः सगणः

।·।·।—।·।·।—।·। · ।—।·।·।—।·।·S

अपि व–रयुव–तिषु(८)कु–चतट–निहितः (७)

---

१. अत्र यतिभेदादेव नामान्तरम् । २. 'मणिगणनिकरो' क० मु० पुस्तके । ३. अत्र यतिभेदादेव नामान्तरम् ।

नगणः नगणः नगणः नगणः सगणः

।·।·। ।·।·।—।·। · ।—।·।·।—।·।·ऽ

स्पृशति न वपु-रिह(८)म-णिगुण-निकरः (७) ॥

## मालिनी नौ म्यौ य् ॥ ७ । १४ ॥

यस्य पादे नगणौ, मगणयगणौ, यगणश्च (।।।. ।।।. ऽऽऽ. ।ऽऽ. ।ऽऽ) भवति, तद्वृत्तं 'मालिनी' नाम । पूर्वैव यतिः । तत्रोदाहरणम्—

नगणः नगणः मगणः यगणः यगणः

।·।·।—।·।·।—ऽ·ऽ · ऽ—।·ऽ·ऽ—।·ऽ·ऽ

अतिवि-पुलल-लाटं(८)पी-वरोरः-कपाटं (७)

नगणः नगणः मगणः यगणः यगणः

।·।·।—।·।·।—ऽ·ऽ · ऽ—।·ऽ·ऽ—।·ऽ·ऽ

सुघटि-त दश-नोष्ठं(८)व्या-घ्रतुल्य-प्रकोष्ठम् (७) ।

नगणः नगणः मगणः यगणः यगणः

।·।·।—।·।·।—ऽ·ऽ · ऽ—।·ऽ·ऽ—।·ऽ·ऽ

पुरुष-मशनि-लेखा(८)ल-क्षणं वी-रलक्ष्मी (७)

नगणः नगणः मगणः यगणः यगणः

।·।·।—।·।·।—ऽ·ऽ · ऽ—।·ऽ·ऽ—।·ऽ·ऽ

रतिसु-रभिय-शोभि(८)र्मा-लिनी-वा-भ्युपैति (७) ॥

(अष्टौ)

---

१. उक्तपञ्चदशाक्षरप्रस्तारस्य षट्शतद्विसप्तत्युत्तरचतुःसहस्रतमो (४६७२) भेदो **'मालिनी'** इति नाम्ना ख्यातः । २. अष्टिच्छन्दःपादघटकीभूतानां षोडशाक्षराणां वर्णप्रस्तारनियमेन प्रस्तारे कृते पञ्चशतषट्त्रिंशदधिकपञ्चषष्टिसहस्रभेदा (६५५३६) जायन्ते । तेष्वत्र ऋषभगजविलसितनामैक एव भेदो निर्दिष्टः । तदतिरिक्ता ग्रन्थान्तरेषूपलभ्यमानभेदा यथा—

**ब्रह्मरूपकच्छन्दः(१६।१)—**

'उम्मत्ता जोहा उट्ठे कोहा उप्पाउप्पी जुज्झंता
मेणक्का रंभा णाहे दंभा अप्पाअप्पी बुज्झंता ।
धावंता सल्ला छिण्णाकंठा मत्थापिट्ठी सेक्खत्ता
संमग्गा भग्गा जाए अग्गा लुद्धा उद्धा हेरंता ॥'

(प्रा० पिं० सू० २।२०९)

**प्रवरललितच्छन्दः (१६।१०१७८)—**

'यमौ नः स्रौ गश्च **प्रवरललितं** नाम वृत्तम् ।'

**चञ्चलाच्छन्दः (१६।१०९२३)—**

'दिज्जिआ सुपण्ण आइ एक्क तो पओहराइँ
हिण्णिरूअ पंच वंकसव्वलो मणोहराइँ
अंत दिज्ज गंधवण्ण अक्खराइ सोलहाइँ
**चंचला** विणिम्मिआ फणिंदु एहु दुल्लहाइँ ॥'

( प्रा० पि० सू० २।२०६ )

**वाणिनीच्छन्दः (१६।११९८४)**—'नजभजरैर्यदा भवति **वाणिनी** गयुक्तैः ।'

**मन्दाकिनीच्छन्दः (१६।१७४७७)—**

'**मन्दाकिनी**त्मयर्ना गो वेदैर्वेदयतिर्भवेत् ।' मं० म० ।

**गरुडरुतच्छन्दः (१६।१९४०६)**—'**गरुडरुतं** नजौ भजतगा यदा स्युस्तदा ।'

छन्दोमञ्जर्याम् ।

**नराचच्छन्दः (१६।२१८४६)—**

'णरेंद जत्थ सव्वलो सुपण्ण वेवि दीसए पइक्क ठाम पंचमे कला चतूरुवीसए ।
पलंत हारु चारु सारु अंत जस्स वट्टए पसिद्ध ए **णराउ** जंपु गंधवंक अट्ठए ॥'

( प्रा० पि० सू० २।२०२ )

अस्यैव ग्रन्थान्तरेषु '**पञ्चचामर**'मिति नामान्तरम् ।

**प्रमदाच्छन्दः (१६।२६२१२)**—'**प्रमदा** सत्यसभगा वर्णैर्वर्णयतिर्भवेत् ।'

मं० म० ।

**मणिकल्पलताच्छन्दः (१६।२७८२४)—**

'नजरभमेन गेन च **स्यान्मणिकल्पलता** ।'

**नीलच्छन्दः (१६।२८०८७)—**

'**णील**सरूअ विआणहु मत्तह बाइसही
पंच भगण्ण पणा पड आसिअ एरिसही ।
अंत ठिआ जहिं हार मुणिज्जइ हे रमणी
बावण अग्गल तिण्णि सआ धुअ रूअ मुणी ॥'

( प्रा० पि० सू० २।२०४ )

अस्या '**अश्वगतिः**' इति नामान्तरं वृ० र० प० ।

**मदनललिताच्छन्दः (१६।२९१६९)—**

'म्भौ नो म्नौ गो **मदनललिता** वेदैः षड्तुभिः ।'

**धीरललिताच्छन्दः (१६।३०१५१)—**

'संकलिता भरौ नरनगाश्च **धीरललिता** ।'

## ऋषभगजविलसितं भ्रौ नौ न्गौ स्वरनवकौ ॥ ७ । १५ ॥

यस्य पादे भगणरगणौ, नगणास्त्रयो, गकारश्च भवति ( ऽ।।. ऽ।ऽ. ।।।. ।।।. ।।।. ऽ ) तद्वृत्तं 'ऋषभगजविलसितं' नाम । सप्तभिर्नवभिश्च यतिः । तत्रोदाहरणम्—

भगणः रगणः नगणः नगणः नगणः गु०
ऽ·।·।—ऽ·।·ऽ—। · ।·।—।·।·।—।·।·।—ऽ
आयत–बाहुद–ण्ड(७)मुप–चितपृ–थुहृद–यं (९)

भगणः रगणः नगणः नगणः नगणः गु०
ऽ·।·।—ऽ·।·ऽ—। · ।·।—।·।·।—।·।·।—ऽ
पीनक–टिप्रदे–श(७)मृष–भगज–विलसि–तम् (९) ।

भगणः रगणः नगणः नगणः नगणः गु०
ऽ·।·।—ऽ·।·ऽ—। · ।·।—।·।·।—।·।·।—ऽ
वीरमु–दारस–त्त्व(७)मति–शयगु–णरसि–कं (९)

भगणः रगणः नगणः नगणः नगणः गु०
ऽ·।·।—ऽ·।·ऽ—। · ।·।—।·।·।—।·।·।—ऽ
श्रीरति–चञ्चला–पि(७)न प–रिहर–ति पुरु–षम् (९) ॥

( अत्यष्टौ[२] )

---

**चकिताच्छन्दः (१६।३०७५१)**—'भात्समतनगैरष्टच्छेदे स्यादिह **चकिता** ।'

**वरयुवतिच्छन्दः (१६।२२३४३)**—

'भो रयना नगौ च यस्यां **वरयुवतिरियम्** ।'

**सुललिताच्छन्दः (१६।३२४८८)**—

'न्मौजस्नगाः **सुललिता** युगैर्युगयतिर्भवेत् ।' मं० म० ।

**चित्रच्छन्दः (१६।४३६९१)**—'**चित्रसंज्ञमीरितं** समानिकापदद्वयं तु ।'

**अचलधृतिच्छन्दः (१६।६५५३६)**—'द्विगुणितवसुलघुभिर**चलधृतिरिह** ।'

१. उत्कृष्टशाक्षरप्रस्तारस्य सप्तशतसप्तविंशत्यधिकद्वात्रिंशत्सहस्रतमो भेदः ( ३२७२७ ) '**ऋषभगजविलसितम्**' इति नाम्ना प्रसिद्धः । '**गजविलसितम्**' इति नामान्तरं मं० म० । '**ऋषभगजविजृम्भित**'मिति गारुडे । २. अत्यष्टिछन्दः-पादघटकीभूतानां सप्तदशसंख्याकानामक्षराणां प्रस्तारे कृते एकसहस्रद्विसप्तत्यधिकत्रयोदशलक्षसंख्याका (१३०१०७२) भेदा जायन्ते तेष्वत्र चतुर्णामेव भेदानां निर्देशः । ग्रन्थान्तरेषु निम्नलिखितनामानोऽन्येऽपि प्राप्यन्त इति तत उद्धृत्य लिख्यन्ते यथा—

**हरिणी न्सौ म्रौ स्लौ ग्रृतुसमुद्रऋषयः ॥ ७ । १६ ॥**

यस्य पादे नगणसगणमगणरगणसगणलकारगकाराश्च (।।।. ।।ऽ. ऽऽऽ. ऽ।ऽ. ।।ऽ. ।. ऽ), तद्वृत्तं 'हरिणी' नाम । षड्भिः, चतुर्भिः, सप्तभिश्च यतिः ।

नगणः सगणः मगणः रगणः सगणः ल० गु०

।·।·।—।·।·ऽ — ऽ·ऽ·ऽ—ऽ · ।·ऽ—।·।·ऽ—।—ऽ

कुवल–यदल(६)–श्यामा पी–नो(४)न्नत–स्तनशा–लि–नी (७)

नगणः सगणः मगणः रगणः सगणः ल० गु०

।·।·।—।·।·ऽ —ऽ·ऽ·ऽ— ऽ · ।·ऽ—।·।·ऽ—।—ऽ

चकित–हरिणी(६)नेत्रच्छा–या(४)मेदा–लसलो–च–ना (७) ।

---

**चित्रलेखाच्छन्दः (१७।२२९००)**—

'ससजा भजगा गुदिक्स्वरैर्भवति **चित्रलेखा** ।'

वृत्तरत्नाकरतत्परिशिष्टछन्दोमञ्जर्यादिषु ।

**मालाधरच्छन्दः (१७।३८७५२)**—

'पढम दिअ विप्पआ तहवि भूअइ त्थप्पिआ
चरणगण तीअओ तह अ भूअइ द्दीअओ
चमरजुअअग्गला विमलगंध हारुज्जला
भणइ फणिणाहरा मुणहु छंद **मालाहरा** ॥'

(प्रा० पि० सू० २।२१९)

**घनमयूरच्छन्दः (१७।४२९४४)**—'कथितं च **घनमयूरं** ननभसरलगं स्वरै रसैश्छिन्नम् ।' मं० म० ।

**हरिच्छन्दः (१७।४६१४४)**—'रसयुगहययुङ्नौ म्रौ सो लगौ हि यदा **हरिः** ।'

**कान्ताच्छन्दः (१७।४६५७६)**—'भवेत्**कान्ता** युगरसहयैर्यभौ नरसा लगौ ।'

**'भाराक्रान्ता'** अ० वृ० र० ।

**नर्कुटकच्छन्दः (१७।५६२४०)**—'हयदशभिर्नजौ भजजला सगु **नर्कुटकम्** ।'

वृ० र०—तत्कुटकम्—इति पा० ।

**कोकिलकच्छन्दः (१७।५६२४०)**—'मुनिगुहकार्णवैः कृतयति वद **कोकिल-कम्** ।'—नर्कुटकमेव यतिभेदात् **'कोकिलकम्'** ।

**कलातन्त्रच्छन्दः (१७।५९३६२)**—

**'कलातन्त्रं** यो तनसभलघुभिर्गेन सहितम् ।'

१. उक्तसप्तदशाक्षरप्रस्तारस्यैकशतद्वादशाधिकषट्चत्वारिंशत्सहस्रतमो (४६११२) भेदो **'हरिणी'** इति नाम्ना ख्यातः । २. 'अलिम्लुचविलोचना' इति पाठः ।

नगणः सगणः मगणः रगणः सगणः ल० गु०

।।। ।।S — S S S — S । S — । । S — । — S

मनसि–जधनु(६)–र्ज्यानिर्घो–षै(४)रिव–श्रुतिपे–श–लै (७)—

नगणः सगणः मगणः रगणः सगणः ल० गु०

।।। ।।S — S S S — S । S — । । S — । — S

मनसि ललना(६)–लीलाला–पैः(४)करो–ति ममो–त्स–वम् (७) ॥

एतद्भ्रमविलसितमित्यपरे ।

## पृथ्वी जुसौ जुसौ यलौ ग् वसुनवकौ ॥ ७ । १७ ॥

यस्य पादे जगणसगणौ (।S।. ।।S) पुनर्जगणसगणौ (।S।. ।।S) यगणलकारगकाराश्च (।SS. ।. S), तद्वृत्तं 'पृथ्वी' नाम। अष्टभिर्नवभिश्च यतिः। तत्रोदाहरणम्—

जगणः सगणः जगणः सगणः यगणः ल० गु०

। S । ।—। । S—। S । ।—। । S । S S ।—S

हताः स–मिति श–त्रव(८)स्त्रि–भुवने विकीर्णं य–शः (९)

जगणः सगणः जगणः सगणः यगणः ल० गु०

। S । ।।S । S । ।—।।S—। S S—।—S

कृतश्च गुणिनां गृहे(८)नि–रवधि–र्महानु–त्स–वः (९) ।

जगणः सगणः जगणः सगणः यगणः ल० गु०

। S । ।—। । S—। S । ।—। । S—। S S—।—S

त्वया कृ–तपरि–ग्रहे(८)क्षि[२]–तिप वी–र! सिंहा–स–ने (९)

जगणः सगणः जगणः सगणः यगणः ल० गु०

। S । ।—। । S—। S । ।—। । S । S S ।—S

नितान्त–निरव–ग्रहा(८)फ–लवती च पृथ्वी कृ–ता (९) ॥

## वंशपत्रपतितं भ्रौ नूभौ नूलौ ग् दिगृषयः ॥ ७ । १८ ॥

यस्य पादे भगणरगणनगणभगणनगणलकारगकारा (S।।. S।S. ।।।. S।।. ।।।. ।. S) भवन्ति, तद्वृत्तं 'वंशपत्रपतितम्' नाम। दशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

---

१. उक्तसप्तदशाक्षरप्रस्तारस्य सप्तशतपञ्चाशदधिकाष्टात्रिंशत्सहस्रतमो (३८७५०) भेदः 'पृथ्वी' इति नाम्ना प्रसिद्धः। २. 'तुण्डिगवीरसिंहासने' इति लि० पुस्तके। ३. उक्तसप्तदशाक्षरप्रस्तारस्य नवशतत्रिनवत्युत्तरैकषष्टिसहस्रतमो (६१९९३) भेदो 'वंशपत्रपतितम्' इति नाम्ना प्रसिद्धः।

भगणः रगणः नगणः भगणः नगणः ल० गु०

S·I·I—S·I·S—I·I·I—S · I·I—I·I·I—I—S

अथ कु–रुष्व क–र्म सुकृ–तं(१०)यद–परदि–व–से (७)

भगणः रगणः नगणः भगणः नगणः ल० गु०

S·I·I—S·I·S—I·I·I—S · I·I·I·I·I—I S

मित्र ! वि–धेयम–स्ति भव–तः(१०)किमु चिरय–सि तत् ? (७) ।

भगणः रगणः नगणः भगणः नगणः ल० गु०

S·I·I—S·I·S—I·I·I—S · I·I—I·I·I—I—S

जीवित–मल्पका–लकल–ना(१०)लघु–तरत–र–लं (७)

भगणः रगणः नगणः भगणः नगणः ल० गु०

S·I·I S·I·S—I·I·I—S · I·I—I·I·I—I—S

नश्यति वंशप–त्रपति–तं(१०)हिम–सलिल–मि–व (७) ॥

**मन्दाक्रान्ता म्भौ न्तौ त्गौ ग् समुद्रर्तुस्वराः ॥ ७ । १९ ॥**

यस्य पादे मगणभगणनगणाः, ( SSS. SII. III ) तगणौ, ( SSI. SSI ) गकारौ च ( S. S ) तद् 'मन्दाक्रान्ता' नाम । चतुर्षु षट्सु सप्तसु च यतिः । तत्रोदाहरणम्—

मगणः भगणः नगणः तगणः तगणः गु० गु०

S·S·S—S · I·I—I·I·I—S · S · I—S·S·I S—S

प्रत्यादि–ष्टं(४)सम–रशिर–सः(६)कान्दि–शीभूय न–ष्टं (७)

मगणः भगणः नगणः तगणः तगणः गु० गु०

S · S·S—S · I·I—I·I·I—S · S·I—S·S·I S—S

त्वं निःशे–षं(४)कुरु रिपुब–लं(६)मार्ग–मासाद्य स–द्यः (७) ।

मगणः भगणः नगणः तगणः तगणः गु० गु०

S · S · S—S · I·I—I·I·I—S · S·I—S·S·I—S—S

किं नाश्रौ–षीः(४)परि–णतधि–यां(६)नीति–मार्गोप–दे–शं ? (७)

मगणः भगणः नगणः तगणः तगणः गु० गु०

S · S · S—S · I·I—I · I·I—S · S·I—S · S · I—S—S

मन्दाक्रा–न्ता(४)भव–ति फलि–नी(६)वारि–लक्ष्मीः क्ष–या–य (७) ॥

**शिखरिणी यमौ न्सौ भ्लौ गृतुरुद्राः ॥ ७ । २० ॥**

---

१. उक्तसप्तदशाक्षरप्रस्तारस्य नवशतैकोनत्रिंशदुत्तराष्टादशसहस्रतमो ( १८९२९ ) भेदो 'मन्दाक्रान्ता' इति नाम्ना प्रसिद्धः ।

यस्य पादे यगणमगणनगणसगणभगणलकारगकाराश्च (।ऽऽ. ऽऽऽ. ।।।. ।।ऽ. ऽ।।. ।. ऽ) भवन्ति, तद्वृत्तं 'शिखरिणी' नाम । षड्भिरेकादशसु च यतिः । तत्रोदाहरणम्—

यगणः मगणः नगणः सगणः भगणः ल० गु०

।·ऽ·ऽ—ऽ·ऽ·ऽ ।·।·। ।·।·ऽ—ऽ·।·।— ।—ऽ

यशःशे—षीभूते(६) जगेति नरना—थे गुण—नि—धौ (११)

यगणः मगणः नगणः सगणः भगणः ल० गु०

।·ऽ·ऽ ऽ·ऽ·ऽ ।·।·।—।·।·ऽ—ऽ·।·।—।—ऽ

प्रवृत्ते वैराग्ये(६) विषय—रसनि—ष्क्रान्तम—न—साम् (११) ।

यगणः मगणः नगणः सगणः भगणः ल० गु०

।·ऽ·ऽ—ऽ·ऽ·ऽ ।·।·।—।·।·ऽ—ऽ·।·।—।—ऽ

इदानी—मस्माकं(६) घनत—रुलता—निर्झर—व—र्ती (११)

यगणः मगणः नगणः सगणः भगणः ल० गु०

।·ऽ·ऽ—ऽ·ऽ·ऽ ।·।·। ।·।·ऽ—ऽ·।·।—।—ऽ

तपस्त—मुं चेतो(६) भवति गिरिमा—लां शिख—रि—णीम् (११) ॥

(धृत्याम्)

---

१. तथैव चतुःशतत्रिंशदधिकोनषष्टिसहस्रतमो (५९४३०) भेदः 'शिखरिणी'-इति नाम्ना प्रसिद्धः । २. 'तुडिगनरनाथे' इति लि० पुस्तके । ३. धृतिच्छन्दःपादघटकीभूतानामष्टादशाक्षराणां प्रस्तारगत्या लक्षद्विकमेकशतचतुश्चत्वारिंशदुत्तरद्विषष्टिसहस्राणि (२६२१४४) च भेदाः । तेषु 'कुसुमितलतावेल्लिता' नाम वृत्तमेकमेवात्र निर्दिष्टम् । प्राकृतपिङ्गलसूत्रछन्दोमञ्जरीवृत्तरत्नाकरपरिशिष्टेषु त्वधिका भेदा उदाहृताः सन्तीति तत उद्धृत्य तेषां नामानि लिख्यन्ते—

**शार्दूलच्छन्दः (१८।१००७३)—**

'शार्दूलं वद मासषट्कयति मः सौ जसौ री मश्चेत् ।

**मञ्जीराच्छन्दः (१८।१२६७३)—**

'कुंतीपुत्ता तिण्णा दिण्णउ मंथा संठवि एक्का पाए
हारा हत्था दुण्णा कंकणु गंधा संठवि जुग्गा जाए ।
चारी हारा भव्वाकारउ पाआअंतहि सज्जीआए
सप्पाराआ सुद्धाकाअउ जंपे पिंगल मंजीरा ए ॥'

(प्रा० पि० सू० २।२२७)

**चित्रलेखाच्छन्दः (१८।१८८७७)—**

'वर्णाश्चैर्मनननतमकैः कीर्तिता चित्रलेखेयम् ।'

**क्रीडाचन्द्रच्छन्दः** (१८।३७४५०)—

'ज इंदासणा एक गण्णा सु होवेइ पाए हि पाए
दहा अट्ठ वण्णा सुहावेइ दंडा सुठाए सुठाए ।
दहा तिण्णिगुण्णा जहा सव्वला होइ मत्ता सुपाए
फणिंदा भणंता **किलाचंद** छंदा णिबद्धाइ जाए ॥'

(प्रा० पि० सू० २।२२९)

**चित्ररेखाच्छन्दः** (१८।३७८७३)—

'मन्दाक्रान्ता नपरलघुयुता कीर्तिता **चित्ररेखा** ।'

**नाराचच्छन्दः** (१८।७४९५४)—'इह ननरचतुष्कसृष्टं तु **नाराच**माचक्षते ।' षोडशाक्षरप्रस्तारे नराचः, अत्र तु नाराच इत्यनयोर्भेदः । नाराचस्यैव '**सिंह-विक्रीडितम्**' '**महामालिका**' इति नामान्तरे अन्यत्र । अस्यैव यतिभेदात् '**लालसा**' इति नामोक्तमन्यैः–'दशवसुविरतिर्ननौ रैश्चतुर्भिर्युतौ **लालसा**' इति । '**निशा**' इति मं० म०

**विलासच्छन्दः** (१८।७४९६९)—'**विलासो** मः ससौ राश्च गुणषड्वसुभिर्यतिः ।' मं० म०

**नन्दनच्छन्दः** (१८।७६७२०)—'नजभजरैस्तु रेफसहितैः शिवैर्हयै**र्नन्दनम्** ।'

**हरिणप्लुतच्छन्दः** (१८।९२९५७)—

'मात्सो जौ भरसंयुतौ करिबाणकै**र्हरिणप्लुतम्** ।'

**चर्चरीच्छन्दः** (१८।९२९५९)—

'पाअ णेउर झंझणक्कइ हंससद्दसुसोहणा
थोलथोलथणग्ग णच्चइ मोत्तिदाम मणोहरा ।
वामदाहिण वाण धावइ तिक्खचक्खुकडक्खआ
काहि पूरिस गेहमंडणि एह सुंदरि पेक्खआ ॥'

(प्रा० पि० सू० २।२३२)

'**हरनर्तनम्**' इति नामास्या वृ० र० । '**विबुधप्रिया**' इति ।

**हरनर्तनच्छन्दः** (१८।९२९८९)—'सौ जजौ भरसंयुतौ करिबाणकै**र्हरनर्तनम्** ।'–वृ० र० । '**कुमुद्वती**' इति वृ० म० को०

**मल्लिकाच्छन्दः** (१८।९३०११)—'**मल्लिका** स्याद्रसजजा भरौ छिन्नाष्टपङ्क्तिभिः ।' मं० म०

**चलच्छन्दः** (१८।९३१०९)—

'म्भौ न्जौ भ्रौ चे**च्चल**मिदमुदितं युगैर्मुनिभिः स्वरैः ।'

**शार्दूलललितच्छन्दः** (१८।११६५०९)—

'मः सो जः सतसा दिनेशऋतुभिः **शार्दूलललितम्** ।'

(छन्दोमञ्जर्याम्)

**कुसुमितलतावेल्लिता म्तौ न्यौ याविन्द्रियर्तुस्वराः ॥ ७ । २१ ॥**

यस्य पादे मगणतगणनगणयगणा ( ऽऽऽ. ऽऽ।. ।।।. ।ऽऽ ) यगणौ ( ।ऽऽ. ।ऽऽ ) च तद्वृत्तं 'कुसुमितलतावेल्लिता' नाम । पञ्चसु, षट्सु, सप्तसु च यतिः । तत्रोदाहरणम्—

मगणः तगणः नगणः यगणः यगणः यगणः

ऽ·ऽ·ऽ—ऽ·ऽ · ।—।·।·।—।·ऽ · ऽ—।·ऽ·ऽ—।·ऽ·ऽ

धन्याना–मेताः(५)कु–सुमित–लता(६)वे–ल्लितोत्फु–ल्लवृक्षाः (७)

मगणः तगणः नगणः यगणः यगणः यगणः

ऽ·ऽ·ऽ ऽ·ऽ · ।—।·।·।—।·ऽ · ऽ—।·ऽ·ऽ—।·ऽ·ऽ

सोत्कण्ठं कूज(५)त्प–रभृत–कला(६)ला–पकोला–हलिन्यः (७) ।

मगणः तगणः नगणः यगणः यगणः यगणः

ऽ·ऽ·ऽ ऽ·ऽ · ।—।·।·।—।·ऽ · ऽ—।·ऽ·ऽ—।·ऽ·ऽ

मध्वादौ माद्य(५)न्म–धुकर–कलो(६)द्गी–तझङ्का–ररम्या (७)

मगणः तगणः नगणः यगणः यगणः यगणः

ऽ·ऽ·ऽ—ऽ·ऽ · ।—।·।·।—।·ऽ · ऽ—।·ऽ·ऽ—।·ऽ·ऽ

ग्रामान्तः–स्रोतः(५)प–रिसर–भुवः(६)प्री–तिमुत्पा–दयन्ति (७) ॥

( अतिधृतौ )

---

**सुधाच्छन्दः (१८।११६६१४)**—'**सुधा**तर्कैस्तर्कैर्भवति ऋतुभिर्यो मो नसतसाः ।'

**महासेनच्छन्दः (१८।११८६१३)**—

'भ्रौ भ्रौ त्सौस्वररुद्रैर्यतिरिति **महासेन**मुदितम् ।'

**अश्वगतिच्छन्दः (१८।१२६३३१)**—

'पञ्चभकारकृता**श्वगति**र्यदि चान्तसरञ्चिता ।'

**शुभच्छन्दः (१८।१२६८४४)**—'**शुभं** सनजना भः सः पापाङ्गाङ्गगुणैर्यतिः ।'–मं० म० । '**शुभचरितं**' इति वृ० म० को०

**भ्रमरपदकच्छन्दः (१८।१३०९७१)**—

'भाद्रनना नसौ **भ्रमरपदक**मिदमभिहितम् ।'

१. उक्ताष्टादशाक्षरप्रस्तारस्याष्टशतसप्तपञ्चाशदधिकसप्तत्रिंशत्सहस्रतमो ( ३७८५७ ) भेदः '**कुसुमितलतावेल्लिता**' इति नाम्ना प्रसिद्धः । २. अतिधृतिच्छन्दःपादघटकीभूतानामूनविंशत्यक्षराणां प्रस्तारे कृते लक्षपञ्चकम्, चतुर्विंशतिसहस्राणि, अष्टाशीत्यधिकद्विशतं ( ५२४२८८ ) भेदा जायन्ते तत्र शार्दूलविक्रीडितमन्तरा ग्रन्थान्तरेषूपलभ्यमाना भेदा यथा—

**शम्भुच्छन्दः (१९।३१७२)**—'दशबाणाधैर्यतिधारी स्तौ यभमा मो गः **शम्भुः** प्रोक्तः ।' अ० वृ० र०–'नवबाणाक्षैरि'ति पाठान्तरम् ।

**मेघविस्फूर्जिताच्छन्दः (१९।७५७१३)—**

'रसर्त्वश्वैर्म्यौ न्सौ ररगुरुयुतौ **मेघविस्फूर्जिता** स्यात् ।' वृ० र०

**पुष्पदामच्छन्दः (१९।७५७४५)—**

'भूताश्वाश्वान्तं मतनसररगैः कीर्तितं **पुष्पदाम** ।'

अस्य **'फुल्लदाम'** इति संज्ञान्तरं छ० मं०

**छायाच्छन्दः (१९।८३९०५)—**

'भवेत्सैव **छाया** तयुगगयुता स्याद्वादशान्ते यदा ।'

**बिम्बच्छन्दः (१९।१४९४७३)—**

'वृत्तं **बिम्बाख्यं** शरमुनितुरगैर्म्तौ न्सौ ततौ चेद्गुरुः ।'

**छायाच्छन्दः (१९।१५७६३४)—**

'इयं **छाया** ख्याता ऋतुरसहयैर्यौ मनसा भ्तौ गुरुः ।'

**पञ्चचामरच्छन्दः (१९।१७४८४८)—**

'नयुगललगुरु निरन्तरं यदा स **पञ्चचामरः** ।'

**मणिमञ्जरीच्छन्दः (१९।१८५३३०)—**

'युगाश्वैः स्याद्भनयजजगाः कीर्तिता **मणिमञ्जरी** ।'

**सरलच्छन्दः (१९।१८६०४०)—**

'नवभिर्दशभिश्छिन्नं **सरलं** न्भ्रसजा जगौ ।' मं० म०

**मकरन्दिकाच्छन्दः (१९।१८६३०६)—**

'रसैः षड्भिर्लोकैर्यमनसजजा गुरु**र्मकरन्दिका** ।'

**वरूथिनीच्छन्दः (१९।१९४४९४)—**

'शरत्रयैर्युगैश्छिन्ना जन्भस्नज्गा **वरूथिनी** ।' मं० म०

**समुद्रतताच्छन्दः (१९।२१४८७८)—**

'गजाब्धितुरगैर्जसौ जसतभा गश्चेत्**समुद्रतता** ।'

( वृत्तरत्नाकरपरिशिष्टे )

**सुरसाच्छन्दः (१९।२३७४५७)—**

'म्रौ भ्नौ यो नो गुरुश्चेत्स्वरमुनिकरणैराह **सुरसाम्** ।'

**चन्द्रमालाच्छन्दः (१९।५२३२६४)—**

'ठइवि दिअवरजुअल मज्झ करअल करहिँ
पुण वि दिअवरजुअल मज्झ करअल करहिँ ।
सरसगण विमल जहि सुणि ठवइ मनगइ
विमलमइ उरअवइ **चंदमल** कहइ सइ ॥'

( प्रा० पिं० सू० २।२४२ )

## शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यऋषयः ॥ ७ । २२ ॥

यस्य पादे मगणसगणौ ( SSS. ॥S ) जगणसगणौ ( ।S।. ॥S ) तगणौ गकारश्च ( SS।. SS।. S ), तद्वृत्तं 'शार्दूलविक्रीडितं' नाम । द्वादशभिः सप्तभिश्च यतिः । तत्रोदाहरणम्—

मगणः सगणः जगणः सगणः तगणः तगणः गु०
S·S·S—।·।·S—।·S·।—।·।·S S·S·।—S·S·।—S
कम्बुग्री–वमुद–ग्रबाहु–शिखरं(१२)रक्तान्त–दीर्घेक्ष–णं (७)

मगणः सगणः जगणः सगणः तगणः तगणः गु०
S·S·S—।·।·S—।·S·।—।·।·S S·S·।—S·S·।—S
शालप्रां–शुशरी–रमाय–तभुजं(१२)विस्तीर्ण–वक्षःस्थ–लम् (७) ।

मगणः सगणः जगणः सगणः तगणः तगणः गु०
S·S·S—।·।·S—।·S·।—।·।·S S·S·।—S·S·।—S
कीलस्क–न्धमनु–द्धतं प–रिजने(१२)गम्भीर–सत्यस्व–रं (७)

मगणः सगणः जगणः सगणः तगणः तगणः गु०
S·S·S ।·।·S—।·S·।—।·।·S S·S·।—S·S·।—S
राज्यश्रीः समुपै–ति वीर–पुरुषं(१२)शार्दूल–विक्रीडि–तम् (७) ॥

इदानीं कृतिः प्रकृतिराकृतिर्विकृतिः संकृतिरभिकृतिरुत्कृतिश्चेति सप्त कृतयः क्रमेणैकाक्षरवृद्ध्योदाह्रियन्ते—

( तत्र–कृतौ )

---

**धवलाच्छन्दः (१९।२६२१४४)—**

'करइ वसु सुणि जुवइ विमलमइ महिअले
ठइअ ठइ रमणि सरसगण पअपअ पले ।
दिअगण चउ चउपअहिँ भण फणिवइ सही
कमलगण सरसमण सुमुहि **धवलअ** कही ॥'

( प्रा० पि० सू० २।२४४ )

१. उक्तोनविंशत्यक्षरप्रस्तारस्य त्रिशतसप्तत्रिंशदुत्तरैकोनपञ्चाशत्सहस्राधिकैकलक्षतमो ( १४९३३७ ) भेदः **'शार्दूलविक्रीडितम्'** इति नाम्ना प्रसिद्धः । २. कृतिच्छन्दःपादघटकीभूतानां विंशतिवर्णानां प्रस्तारे कृते लक्षदशकम्, अष्टाचत्वारिंशत्सहस्राणि, षट्सप्तत्यधिकपञ्चशतं च ( १०४८५७६ ) भेदा जायन्ते तेषु सुवदनावृत्ताख्यौ भेदावत्र निर्दिष्टौ । ग्रन्थान्तरेषु तु यथा—

**सुवदना म्रौ भ्नौ यूभौ लगावृषिस्वरर्तवः ॥ ७ । २३ ॥**

यस्य पादे मगणरगणभगणनगणयगणभगणलकारगकारा ( SSS. SIS. SII. III. ISS. SII. I. S ) भवन्ति, तद्वृत्तं 'सुवदना' नाम । सप्तसु सप्तसु षट्सु च यतिः । तत्रोदाहरणम्—

मगणः रगणः भगणः नगणः यगणः भगणः ल० गु०

S · S · S—S · I · S—S · I · I—I · I · I—I · S · S—S · I · I—I—S

या पीनो-द्गाढतु-ङ्ग(७)स्तन-जघन-घना(७)भो-गालस-ग-ति (६)—

मगणः रगणः भगणः नगणः यगणः भगणः ल० गु०

S · S · S—S · I · S—S · I · I—I · I · I—I · S · S—S · I · I—I—S

यस्याः क-र्णावतं-सो(७)त्पल-रुचिज-यिनी(७)दी-र्घे च न-य-ने (६) ।

---

**शोभाच्छन्दः (२०१९५१४९०)**—'रसैरश्वैरश्वैर्यमनननततगैर्गे शोभेयमुक्ता ।'

**मत्तेभविक्रीडितच्छन्दः (२०२९८६२८)**—

'सभरा नम्ग्लगिति त्रयोदशयतिर्**मत्तेभविक्रीडितम्** ।' वृ० र०

**उत्पलमालिकाच्छन्दः (२०३५५७९९)**—

'भ्रन्भभ्रलगा ग्रहै रुद्रैर्विच्छिन्नोत्**पलमालिका** ।' मं० म०

**गीतिकाच्छन्दः (२०३७२०७६)**—

'सजजा भरौ सलगा यदा कथिता तदा खलु **गीतिका** ।'

अस्यैव छन्दसः प्राकृतपिङ्गलसूत्रे **'गीता'** इति नाम । **'प्रमदाननम्'** इति वृ० र०

**मदकलनीच्छन्दः (२०५०६८८०)**—

'**मदकलनी** नजनभसा नलगाश्छिन्ना शराङ्गबाणाङ्गैः ।' मं० म०

**कनकलताच्छन्दः (२०५२४२८८)**—

'**कनकलता** सा कथिता षण्नैर्युक्ता तथा लगाभ्यां च ।' मं० म०

**गण्डकाच्छन्दः (२०६९९०५१)**—

'रगणा पलंतआ पुणो णरेंद कंतआ सुछक्कएण
हार एक दिज्जही सुसद्द पाअ किज्जही सुसक्कएण ।
**गंडआ** गणेहु एहु वंकसंखसंखले फणिंद गाउ
तीस मत्त पाअ पत्त हार तीअभागए सुसद्द आउ ॥'

(प्रा० पि० सू० २।२५५)

१. उक्तविंशत्यक्षरप्रस्तारस्य चतुःशतसप्तदशोत्तराष्टसप्ततिसहस्राधिकद्विलक्षतमो (२७८४१७) भेदः **'सुवदना'** इति नाम्ना प्रसिद्धः ।

मगणः रगणः भगणः नगणः यगणः भगणः ल० गु०

ऽ • ऽ • ऽ—ऽ • । • ऽ—ऽ • । • ।—। • । • । । • ऽ • ऽ ऽ • । • ।—।—ऽ

श्यामा स्त्री-मन्तिनी-नां(७)तिल-कमिव मुखे(७)या च त्रिभु-व-ने (६)

मगणः रगणः भगणः नगणः यगणः भगणः ल० गु०

ऽ • ऽ • ऽ ऽ • । • ऽ ऽ • । • ।—। • । • ।—। • ऽ • ऽ—ऽ • । • ।—।—ऽ

सम्प्राप्ता साम्प्रतं मे(७)नय-नपथ-मसौ(७)दै-वात्सुव-द-ना (६) ॥

## ग्लिति वृत्तम् ॥ ७ । २४ ॥

यस्य पादे गकारलकाराः ( ऽ, । ) क्रमेण भवन्ति, तद् 'वृत्तं' नाम वृत्तम् । कृतिप्रकरणेन यावद्भिरेव विंशत्यक्षराणि पूर्यन्ते, तावतां ग्लां ग्रहणम् । तत्रोदाहरणम्—

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)

ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • ।

ज-न्तु-मा-त्र-दुः-ख-का-रि क-र्म- नि- र्मि-तं भ--व--त्य--न--र्थ--हे--तु

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)

ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • ।

ते-न स-र्व-मा-त्म-तु-ल्य-मी-क्ष-मा-ण उ--त्त-मं सु-खं ल--भ--स्व ।

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)

ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • ।

वि-द्धि बु--द्धि-पू-र्व-कं म-मो--प---दे- श-वा-क्य--मे--त- दा-द---रे---ण

(१)(२)(३)(४)(५)(६)(७)(८)(९)(१०)(११)(१२)(१३)(१४)(१५)(१६)(१७)(१८)(१९)(२०)

ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • । • ऽ • ।

वृ-त्त-मे-त-दु-त्त-मं म-हा-कु-ल--प्र--सू--त--ज-न्म-नां हि--ता-य ॥

अत्र पादान्ते यतिः ।

( प्रकृतौ )

---

१. उक्तविंशत्यक्षरप्रस्तारस्यैकपञ्चाशदुत्तरनवनवतिसहस्राधिकषड्लक्षतमो ( ६९९०५१ ) भेदो 'वृत्तम्' इति नाम्ना प्रसिद्धः । 'वृत्तं रजौ रजौ पादे रजौ गो लः' इति गारुडे १।२०९।३५ अस्यैव 'मालवम्' इति संज्ञा मं० म० । २. प्रकृतिच्छन्दः-पादघटकीभूतानामेकविंशत्यक्षराणां प्रस्तारे कृते लक्षविंशतिः, सप्तनवतिसहस्राणि, एकशतद्विपञ्चाशच्च ( २०९७१५२ ) भेदा जायन्ते । तेषु येऽत्र नोक्तास्ते ग्रन्थान्तरेभ्यः समुद्धृत्य लिख्यन्ते—

नरेन्द्रच्छन्दः (२१।४५०५१९)—

'आइहिँ जत्थ पाअगण पअलिअ जोहल अंत ठवीजे

काहल सद्द गंध, ऍम मुनिगण कंकण जाह करीजे ।

## स्रग्धरा म्रौ भ्नौ यौ य् त्रिःसप्तकाः ॥ ७ । २५ ॥

यस्य पादे मगणरगणभगणनगणास्त्रयश्च यगणाः (ऽऽऽ. ऽ।ऽ. ऽ।।. ।।।. ।ऽऽ. ।ऽऽ. ।ऽऽ), तत् 'स्रग्धरा' नाम वृत्तम्। सप्तसु सप्तसु सप्तसु च यतिः। तत्रोदाहरणम्—

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

ऽ·ऽ·ऽ—ऽ·।·ऽ—ऽ·।·।—।·।·।—।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ

रेखा-भ्रूः शुभ्रद-न्त(७)द्युति-हसित-शर(७)च-न्द्रिकाचा-रुमूर्ति (७)-

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

ऽ·ऽ·ऽ—ऽ·।·ऽ—ऽ·।·।—।·।·।—।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ

र्मोघन्मा-तङ्गली-ला(७)गति-रतिवि-पुला(७)भो-गतुङ्ग-स्तनी या (७)।

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

ऽ·ऽ·ऽ—ऽ·।·ऽ—ऽ·।·।—।·।·।—।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ

रम्भास्त-म्भोपमो-रू(७)रलि-मलिन-घन(७)स्नि-ग्धधम्मि-ल्लहस्ता (७)

मगणः रगणः भगणः नगणः यगणः यगणः यगणः

ऽ·ऽ·ऽ ऽ·।·ऽ—ऽ·।·।—।·।·।—।·ऽ·ऽ—।·ऽ·ऽ—।·ऽ·ऽ

बिम्बोष्ठी रक्तक-ण्ठी(७)दिश-तु रति-सुखं(७)स्र-ग्धरा सु-न्दरीयम् (७)॥

(आकृतौ)

---

सद्दइ एक्क तत्थ चल णरवइ पूरहु संख सुभव्वा

चामरजुग्ग अंत जहि पअलिअ एहु णरेंदउ कव्वा ॥'

प्रा० पि० सू० २।२६३।

**सरसीच्छन्दः (२१।७११६००)—**

'नजभजजा जरौ यदि तदा गदिता **सरसी** कवीश्वरैः ॥'

सरसीवृत्तमेव '**सलिलनिधि**' नाम्ना प्रसिद्धम्। अन्येषां मते '**सिद्धक**'मिति संज्ञितमेतत्।

**सुरनर्तकीच्छन्दः (२१।७६५६१७)—**

'**सुरनर्तकी** रनरना रनरा विरती रसर्तुशास्त्रगुणैः।' मं० म०

१. उक्तैकविंशत्यक्षरप्रस्तारस्य द्विसहस्रनवशतत्रिनवत्युत्तरत्रिलक्षतमो (३०२९९३) भेदः '**स्रग्धरा**' इति नाम्ना प्रसिद्धः। २. 'चारुकण्ठी' लि० पुस्तके। ३. आकृति-च्छन्दःपादघटकीभूतानां द्वाविंशत्यक्षराणां प्रस्तारे कृते (४१९४३०४) भेदा जायन्ते। तेष्वत्र ये नोक्ताः, परत्र चोक्तास्ते तत आकृष्य लिख्यन्ते—

**हंसीच्छन्दः (२२।१०४८३२१)—**

'णेत्ताणंदा उग्गे चंदा धवलचमरसमसिअकरविंदा

उग्गे तारा तेआ हारा विअसु कमलवण परिमलकंदा।

**भद्रकं भ्रौ न्रौ न्रौ न्गौ दिगादित्याः ॥ ७ । २६ ॥**

यस्य पादे भगणरगणौ, (ऽ॥. ऽ।ऽ) नगणरगणौ, (॥. ऽ।ऽ) पुनर्नगणरगणौ (॥. ऽ।ऽ) नगणो गकारश्च (॥. ऽ) भवतस्तद्वृत्तं 'भद्रकम्' नाम । दशभिर्द्वादशभिश्च यतिः । तत्रोदाहरणम्—

भगणः रगणः नगणः रगणः नगणः रगण नगणः गु०

ऽ·।·।—ऽ·।·ऽ ।·।·।—ऽ · ।·ऽ—।·।·। ऽ·।·ऽ—।·।·।—ऽ

भद्रक–गीतिभिः सकृद–पि(१०)स्तुव–न्ति भव ! ये भव–न्तमभ–वं (१२)

भगणः रगणः नगणः रगणः नगणः रगणः नगणः गु०

ऽ·।·।—ऽ·।·ऽ–।·।·।—ऽ · ।·ऽ—।·।·। ऽ·।·ऽ—।·।·।—ऽ

भक्तिभ–रावन–म्रशिर–सः(१०)प्रण–म्य तव पादयोः सुकृति–नः (१२) ।

भगणः रगणः नगणः रगणः नगणः रगणः नगणः गु०

ऽ·।·।–ऽ·।·ऽ–।·।·।—ऽ · ।·ऽ—।·।·।—ऽ·।·ऽ—।· ।·।—ऽ

ते पर–मेश्वर–स्य पद–वी(१०)मवा–प्य सुख–माप्नुव–न्ति विपु–लं

भगणः रगणः नगणः रगणः नगणः रगणः नगणः गु०

ऽ·।·।—ऽ·।·ऽ—।·।·।—ऽ · ।·ऽ–।·।·।–ऽ·।·ऽ—।·।·।—ऽ

मर्त्यभु–वं स्पृश–न्ति न पु–न(१०)र्मनो–हरसु–राङ्गना–परिवृ–ताः (१२) ॥

(विकृतौ)

---

भासा कासा सव्वा आसा महुरपवण लहलहिअ करंता
हंसा सद्दू फुल्लावंधू सरअ समअ सहि हिअअ हरंता ॥'
(प्रा० पि० सू० २।२६८)

**मत्तेभच्छन्दः (२२।१९१५७६५)—**
'मत्तेभाख्यं तभजजसरनगयुक्तं स्वरार्वफणिभिन्नम् ।' मं० म० ।

**मदिराच्छन्दः (२२।१७९७५५९)—**
'सप्तभकारयुतैकगुरुर्गदितेयमुदारतरा मदिरा ।'

१. उक्तद्वाविंशत्यक्षरप्रस्तारस्य (१९२०७११) तमो भेदो 'भद्रकम्' इति नाम्ना प्रसिद्धः । अस्यैव 'प्रभद्रकम्' इति नामान्तरं रत्नाकरे । २. अस्य छन्दसः त्र्यशीतिलक्षाणि, अष्टाशीतिसहस्राणि, अष्टोत्तराणि षट्शतानि (८३८८६०८) च भेदा भवन्ति । तेषु भेदद्वयमेवात्र निर्दिष्टम् । अन्ये च येऽधिका भेदास्ते यथा—

**सुन्दरीच्छन्दः (२३।३५९००४४)—**
'जहिँ आइहि हत्थो करअल तत्थो पाअ लहुजुअ वंक तिआ
ठवि एक्क पहिल्लो बमपहिल्लो सल्लजुअं पुणु वंकठिआ ।

**अश्वललितं नूजौ भूजौ भूजौ भूलौ ग्रुद्रादित्याः ॥ ७ । २७ ॥**

यस्य पादे नगणजगणौ ( ।।।. ।ऽ। ) भगणजगणौ ( ऽ।।. ।ऽ। ) पुनर्भगणजगणौ ( ऽ।।. ।ऽ। ) भगणो ( ऽ।। ) लकारगकारौ ( ।. ऽ ) च भवतः, तद्वृत्तम् 'अश्वललितम्' नाम । एकादशभिर्द्वादशभिश्च यतिः । तत्रोदाहरणम्—

नगणः जगणः भगणः जगणः भगणः जगणः भगणः ल० गु०

।·।·।—।·ऽ·।—ऽ·।·।—।·ऽ · ।—ऽ·।·।—।·ऽ·।—ऽ·।·।—।—ऽ

पवन–विधूत–वीचि च–पलं(११)वि–लोकय–ति जीवि–तं तनु–भृ–तां (१२)

नगणः जगणः भगणः जगणः भगणः जगणः भगणः ल० गु०

।·।·।—।·ऽ·।—ऽ·।·।—।·ऽ · ।—ऽ·।·।—।·ऽ·।—ऽ·।·।—।—ऽ

वपुर–पि ह्रीय–मान म–निशं(११)ज–रावनि–तया व–शीकृत–मि–दम् (१२) ।

नगणः जगणः भगणः जगणः भगणः जगणः भगणः ल० गु०

।·।·। ।·ऽ·।—ऽ·।·।—।·ऽ · ।—ऽ·।·। ।·ऽ·।—ऽ·।·।—।—ऽ

सपदि निपीड–न व्यति–करं(११)य–मादिव नराधि–पान्नर–प–शुः (१२)

नगणः जगणः भगणः जगणः भगणः जगणः भगणः ल० गु०

।·।·।—।·ऽ·।—ऽ·।·।—।·ऽ · ।—ऽ·।·।—।·ऽ·।—ऽ·।·।—।—ऽ

परव–नितान्–वेक्ष्य कु–रुते(११)त–थापि ह–तबुद्धि–रश्वल–लि–तम् (१२) ॥

**मत्ताक्रीडा मौ त्नौ नौ नूलौ ग् वसुपञ्चदशकौ ॥ ७ । २८ ॥**

यस्य पादे मगणौ, ( ऽऽऽ. ऽऽऽ ) तगणो, ( ऽऽ। ) नगणाश्चत्वारो ( ।।।. ।।।. ।।।. ।।। ) लकारगकारौ ( ।. ऽ ) च तद्वृत्तं 'मत्ताक्रीडा' नाम । अष्टभिः पञ्चदशभिश्च यतिः । तत्रोदाहरणम्—

---

पअअंतहि हत्थागग पभणिज्जे तेइस वण्ण पमाण किआ

ऍहु मत्तहि पाआ पइ पभणिज्जे वण्णहि **सुंदरिआ** भणिआ ॥'

( प्रा० पि० सू० २।२७१ )

**सुधालहरीच्छन्दः (२३।३५९४२४०)—**

'नगणेन तर्कजलगै रुद्रर्तुरसैर्यतिः **सुधालहरी** ।' मं० म०

**अद्रितनयाच्छन्दः (२३।३८६१४२४)—**

'नजभजभा जभौ लघुगुरू बुधैस्तु गदितेय**मद्रितनया** ।'

१. उक्तत्रयोविंशत्यक्षरप्रस्तारस्य ( २८१२८४८ ) तमो भेदः **'अश्वललितम्'** इति नाम्ना प्रसिद्धः । २. उक्तत्रयोविंशत्यक्षरप्रस्तारस्य ( ४२९४०४९ ) तमो भेदः **'मत्ताक्रीडा'** नाम्ना ख्यातः ।

मगणः मगणः तगणः नगणः नगणः नगणः नगणः ल० गु०

ऽ·ऽ·ऽ—ऽ·ऽ·ऽ ऽ·ऽ • ।—।·।·।—।·।·।—।·।·।—।·।·।—।—ऽ

इयं म—द्यं पीत्वा नारी(८)स्ख—लितग—तिरति—शयर—सिकहृ—द—या (१५)

मगणः मगणः तगणः नगणः नगणः नगणः नगणः ल० गु०

ऽ·ऽ·ऽ—ऽ·ऽ·ऽ—ऽ·ऽ • ।—।·।·।—।·।·।—।·।·।—।·।·।—।—ऽ

मत्ताक्री—डा लोलै—रङ्गै(८)र्मु—दमखि—लविट—जनम—नसि कु—रु—ते (१५) ।

मगणः मगणः तगणः नगणः नगणः नगणः नगणः ल० गु०

ऽ·ऽ·ऽ—ऽ·ऽ·ऽ—ऽ·ऽ • ।—।·।·।—।·।·।—।·।·।—।·।·।—।—ऽ

वीतव्री—डाश्लीला—लापैः(८)श्र—वणसु—खसुभ—ग सुल—लितव—च—ना (१५)

मगणः मगणः तगणः नगणः नगणः नगणः नगणः ल० गु०

ऽ·ऽ·ऽ—ऽ·ऽ·ऽ—ऽ·ऽ • ।—।·।·।—।·।·।—।·।·।—।·।·।—।—ऽ

नृत्यैर्गी—तैर्भ्रूवि—क्षेपैः(८)क—लमणि—त विवि—धविह—गकुल—रु—तैः (१५) ॥

( संकृतौ )

---

१. अत्रापि प्रस्तारे चतुर्विंशत्यक्षरस्यैका कोटिः सप्तषष्टिलक्षाणि सप्तसप्ततिसहस्राणि षोडशोत्तरं शतद्वयं च (१६७७७२१६) भेदाः । तेषु ग्रन्थान्तरे केचिद्दृश्यन्ते । यथा—

**स्वैरिणीक्रीडनवृत्तम् (२४।४७९३४९१)**—

'**स्वैरिणीक्रीडनं** प्रोक्तमष्टभी रगणैर्युतम् ।'–मं० म० ।

**दुर्मिलाच्छन्दः (२४।७१९०२६६)**—

'**दुमिलाइ** पआसहु वण्ण विसेसहु दीस फणिंदह चारुगणा
भणु मत्त बतीसह जाणिअ सेसह अट्ठहि ठाम ठई सगणा ।
गण अण्ण ण किजइ कित्ति मुणिजइ लग्गइ दोस अणेअ जही
कहि तिण्णि विरामहि पाअह ता दइ अट्ठ चउद्दह मत्त सही ॥'

( प्रा० पिं० सू० २।२७७ )

'**द्रुमिला**' इत्याख्यान्तरं चन्द्रिकायामस्याः, '**घोटक**'मिति मणिकोशे ।

**वेश्याप्रीतिवृत्तम् (२४।८४५१८५७)**—

'**वेश्याप्रीति**र्मभयमनभनसयुक्ता हि फणिगजैश्छिन्ना ।'–मं० म० ।

**किरीटच्छन्दः (२४।१४३८०४७१)**—

'ठावहु आइहि सक्कगणा तह सल्ल विसज्जहु वे वि तहापर
णेउर सद्दजुअं तह णेउरए परिबारह सक्कगणा कर ।
काहलजुग्गल अंत करिज्जसु एपरि चौविस वण्ण पआसहु
बत्तिस मत्त पअप्पअ लेखउ अट्ठ अआर **किरीट** विसेसहु ॥'

( प्रा० पिं० सू० २।२७९ )

## तन्वी भूतौ नृसौ भौ नृयाविन्द्रियस्वरमासाः ॥ ७ । २९ ॥

यस्य पादे भगणतगणौ, (ऽ॥. ऽऽ।) नगणसगणौ, (।।।. ॥ऽ) भगणौ (ऽ॥. ऽ॥) नगणयगणौ (।।।. ।ऽऽ) च, तद्वृत्तं 'तन्वी'[2] नाम। पञ्चसु, सप्तसु, द्वादशसु च यतिः। तत्रोदाहरणम्—

भगणः तगणः नगणः सगणः भगणः भगणः नगणः यगणः
ऽ·।·।—ऽ·ऽ · ।—।·।·।—।·।·ऽ ऽ·।·।—ऽ·।·।—।·।·।—।·ऽ·ऽ
चन्द्रमु–खी सु(५)न्द–रघन–जघना(७)कुन्दस–मानशि–खरद–शनाग्रा (१२)

भगणः तगणः नगणः सगणः भगणः भगणः नगणः यगणः
ऽ·।·।—ऽ·ऽ · ।—।·।·।—।·।·ऽ ऽ·।·।—ऽ·।·।—।·।·।—।·ऽ·ऽ
निष्कल–वीणा(५)श्रु–तिसुख–वचना(७)त्रस्तकु–रङ्गत–रलन–यनान्ता (१२)।

भगणः तगणः नगणः सगणः भगणः भगणः नगणः यगणः
ऽ·।·।—ऽ·ऽ · ।—।·।·।—।·।·ऽ ऽ·।·।—ऽ·।·।—।·।·।—।·ऽ·ऽ
निर्मुख–पीनो(५)न्न–तकुच–कलशा(७)मत्तग–जेन्द्रल–लितग–मना च (१२)

भगणः तगणः नगणः सगणः भगणः भगणः नगणः यगणः
ऽ·।·।—ऽ·ऽ · ।—।·।·।—।·।·ऽ ऽ·।·।—ऽ·।·।—।·।·।—।·ऽ·ऽ
निर्भर–लीला(५)नि–धुवन–विधये(७)**मुञ्जन–रेन्द्र!** भ–वतु त–व तन्वी (१२)॥

(अभिकृतौ[3])

## क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग् भूतेन्द्रियवस्वृषयः ॥ ७ । ३० ॥

यस्य पादे भगणमगणौ, (ऽ॥. ऽऽऽ) सगणभगणौ, (॥ऽ. ऽ॥) नगणाश्चत्वारो (।।।. ।।।. ।।।. ।।।) गकार (ऽ) श्च तद्वृत्तं 'क्रौञ्चपदा'[4] नाम। पञ्चभिः, पञ्चभिः, अष्टभिः, सप्तभिश्च यतिः। तत्रोदाहरणम्—

---

१. 'द्विरादित्या' इति वैदिकपाठः। 'द्विरादित्या' इत्यपहायेन्द्रियस्वरमासा इति प्रतीच्याः पठन्ति, अग्निपुराणे च तथोपबृंहणं दृश्यते।—व्यङ्कटाचलसूरिः। २. उक्तचतुर्विंशत्यक्षरप्रस्तारस्य (४१५५३६७) तमो भेदः **'तन्वी'** इति नाम्ना प्रसिद्धः। ३. अत्रापि प्रस्तारगत्या पञ्चविंशत्यक्षरस्य कोटित्रयम्, पञ्चत्रिंशल्लक्षाणि, चतुःपञ्चाशत्सहस्राणि द्वात्रिंशदुत्तराणि चतुःशतानि च (३३५५४४३२) भेदाः। तेषु ग्रन्थान्तरेऽधिकम् यथा—

**कलकण्ठच्छन्दः** (२५।१५५००९६०)—

'**कलकण्ठाख्यं** सजनजभनरनगाश्चाहिभोगिनिधिभिन्ना।' मं० म०

४. उक्तपञ्चविंशत्यक्षरप्रस्तारस्य (१६८७४४४७) तमो भेदः **'क्रौञ्चपदा'** इति नाम्ना प्रसिद्धः।

भगणः मगणः सगणः भगणः

S·।·।—S·S · S—।·।·S—S · ।·।—

या कपि–लाक्षी(५)पि–ङ्गलके–क्षी(५)कलि—

नगणः नगणः नगणः नगणः गु०

।·।·।—।·।·।—।·।·।—।·।·।—S

रुचिर–नुदिन(८)मनुन–यकठि–ना (७) ।

भगणः मगणः सगणः भगणः

S·।·।—S·S · S—।·।·S—S · ।·।—

दीर्घत–राभिः(५)स्थू–लशिरा–भिः(५)परि—

नगणः नगणः नगणः नगणः गु०

।·।·।—।·।·।—।·।·।—।·।·।—S

वृतव–पुरति(८)शयकु–टिलग–तिः (७) ॥

भगणः मगणः सगणः भगणः

S·।·।—S·S · S—।·।·S—S · ।·।—

आयत–जङ्घा(५)नि–म्नकपो–ला(५)लघु—

नगणः नगणः नगणः नगणः गु०

।·।·।—।·।·।—।·।·।—।·।·।—S

तरकु–चयुग(८)परिचि–तहृद–या (७) ।

भगणः मगणः सगणः भगणः

S·।·।—S·S · S—।·।·S S · ।·।—

सा परि–हार्या(५)क्रौ–ञ्चपदा स्त्री(५)ध्रुव—

नगणः नगणः नगणः नगणः गु०

।·।· ।—।·।·।—।·।·।—।·।·।—S

मिह नि–रवधि(८)सुखम–भिलष–ता (७) ॥

( उत्कृतौ )

१. अत्रापि प्रस्तारगत्या रसलोचन(२६)वर्णस्य कोटिषट्कम्, एकसप्ततिलक्षाणि वसुसहस्राणि, चतुःषष्ट्युत्तराण्यष्टौ शतानि च ( ६७१०८८६४ ) भेदाः । तत्र ग्रन्थान्तरेषूपलब्धो विशेषो यथा—

**रञ्जनवृत्तम् (२६।१४६६३५५१)**—

'भजजजभगगैर्वार्वार्वसुभिदि **रञ्जनम्** ।'–मं० म०

**भुजङ्गविजृम्भितं मौ तौ नौ रसौ ल्गौ वसुरुद्रऋषयः ॥ ७ । ३१ ॥**

यस्य पादे मगणौ ( SSS. SSS ) तगणनगणौ ( SSI. III ) नगणौ ( III. III ) रगणसगणौ ( SIS. IIS ) लकारगकारौ ( I. S ) च तद्वृत्तं 'भुजङ्गविजृम्भितम्' नाम । अष्टभिरेकादशभिः सप्तभिश्च यतिः । तत्रोदाहरणम्—

मगणः मगणः तगणः नगणः

S·S·S—S·S·S—S·S · I—I·I·I—

ये संन–द्धानेका–नीकै(८)र्न–रतुर—

नगणः नगणः रगणः सगणः ल० गु०

I·I·I—I·I·I—S · I·S—I·I· S—I—S

गकरि–परिवृ–तैः(११)समं–तव श–त्र–वो (७)

मगणः मगणः तगणः नगणः

S·S·S–S·S·S—S·S · I—I·I·I—

युद्धश्र–द्धालुब्धा–त्मान(८)स्त्व–दभिमु—

मगणः नगणः रगणः सगणः ल० गु०

I·I·I—I·I·I—S · I·S—I · I·S—I—S

खमप–गतभि–यः(११)पत–न्ति धृता–यु–धाः (७) ।

मगणः मगणः तगणः नगणः

S· S · S—S·S·S—S·S · I—I·I·I—

ते त्वां द–ष्ट्वा संप्रा–माग्रे(८)नृ–पतिव—

नगणः नगणः रगणः सगणः ल० गु०

I· I·I—I·I·I—S · I·S—I · I·S—I—S

र! कृप–णमन–स(११)श्चल–न्ति दिग–न्त–रं (७)

---

**चेटीगतिवृत्तम् (२६।९९१७०८९०)—**

'**चेटीगति**श्च गायत्री या लगौ छिदिनैर्मृगैः ।'–मं० म०

**कमलावृत्तम् (२६।५०३२३३९४)—**

'यस्यां नकारयुगलं परतो भकार-
स्तस्माज्जौ च नगणत्रयतो गलौ स्तः ।
खण्डैर्नगैर्दशभिरत्र यतिर्विशाल्य
सा पिङ्गलेन कथिता **कमलातिरम्या** ॥'

( वृत्तचन्द्रिका २।१३९ )

१. उक्तषड्विंशत्यक्षरप्रस्तारस्य ( १३८३४७४९ ) तमो भेदः '**भुजङ्गविजृम्भितम्**' इति नाम्ना प्रसिद्धः । २. 'तुडिगनृप! कृपणमनसः पलन्ति दिगन्तरम्' क० मु० पुस्तके, लिखितपुस्तके च ।

मगणः मगणः तगणः नगणः

ऽ·ऽ·ऽ—ऽ·ऽ·ऽ ऽ·ऽ • ।—।·।·।—

किंवा सो-ढुं शक्यं भेकै(८)र्ब-हुभिर—

नगणः नगणः रगणः सगणः ल० गु०

।·।·।—।·।·।—ऽ • ।·ऽ—।·।·ऽ— ।—ऽ

पि सवि-षविष-मं(११)भुज-ङ्गविजृ-म्भि-तम् ? (७) ॥

अत्र कात्यायनेनाप्युक्तम्—

मगणः मगणः तगणः नगणः

ऽ·ऽ·ऽ—ऽ·ऽ·ऽ—ऽ·ऽ • ।—।·।·।—

ध्यानैका-ग्रालम्बा-दृष्टिः(८)क-मलमु—

नगणः नगणः रगणः सगणः ल० गु०

।· ।·।—।·।·।—ऽ • ।·ऽ ।·।·ऽ—।—ऽ

खि! लुलि-तमल-कं(११)करे स्थितमा-न-नं (७)

मगणः मगणः तगणः नगणः

ऽ·ऽ·ऽ—ऽ· ऽ·ऽ—ऽ·ऽ · ।—।·।·।—

चिन्तास-क्ता शून्या-बुद्धि(८)र्द्धि-रदग—

नगणः नगणः रगणः सगणः ल० गु०

।·।·।—।·।·।—ऽ • ।·ऽ—।·।·ऽ ।—ऽ

तिपति-तरस-ना(११)तनु-स्तनुतां ग-ता (७)।

मगणः मगणः तगणः नगणः

ऽ·ऽ· ऽ—ऽ·ऽ·ऽ ऽ·ऽ · ।—।·।·।—

पाण्डुच्छा-यं क्षामं वक्त्रं(८)म-दजन—

नगणः नगणः रगणः सगणः ल० गु०

।· ।·।—।· ।·।—ऽ • ।·ऽ—।·।· ऽ—।—ऽ

नि! रह-सि सर-सां(११)करो-षि न सं-क-थां (७)

मगणः नगणः नगणः नगणः

ऽ· ऽ·ऽ—ऽ·ऽ·ऽ ऽ·ऽ • ।—।· ।·।—

को नामा-यं रम्यो व्याधि(८)स्त-व कथ—

नगणः नगणः रगणः सगणः ल० गु०

।·।·।—। · ।·।—ऽ • ।· ऽ—।·।· ऽ—।—ऽ

य सुत-नु! किमि-दं(११)न ख-ल्वसि ना-तु-रा (७) ॥

**अपवाहको म्नौ नौ नौ न्सौ गौ नवर्तुरसेन्द्रियाणि ॥ ७ । ३२ ॥**

यस्य पादे मगणः, ( SSS ) नगणाः षट्, ( ।।।. ।।।. ।।।. ।।।. ।।।. ।।। ) सगणो, ( ।।S ) गकारौ ( S. S ) तद्वृत्तं 'अपवाहको' नाम । नवसु, षट्सु, षट्सु, पञ्चसु च यतिः । तत्रोदाहरणम्—

मगणः　नगणः　नगणः　नगणः　नगणः
S·S·S　।·।·।—।·।·। — ।·।·।—।·।·।
श्रीकण्ठं त्रिपुर–दहन(९)ममृत–किरण (६)—

नगणः　नगणः　सगणः　गु०　गु०
।·।·।—।·।·। — ।·।·S　S–S
शकल–ललित(६)शिरसं रु–द्रं (५)

मगणः　नगणः　नगणः　नगणः　नगणः
S·S·S　।·।·।—।·।·। — ।·।·।—।·।·।
भूतेशं हतमु–निमख(९)मखिल–भुवन (६)—

नगणः　नगणः　सगणः　गु०　गु०
।·।·।—।·।·। — ।·।·S—S—S
नमित–चरण(६)युगमी–शा–नम् (५) ।

मगणः　नगणः　नगणः　नगणः　नगणः
S·S·S　।·।·।—।·।·। — ।·।·।—।·।·।
सर्वज्ञं वृषभ–गमन(९)महिप–तिकृत (६)—

नगणः　नगणः　सगणः　गु०　गु०
।·।·।—।·।·। — ।·।·S—S—S
वलय–रुचिर(६)करमा–रा–ध्यं (५)

मगणः　नगणः　नगणः　नगणः　नगणः
S·S·S　।·।·।—।·।·। — ।·।·।—।·।·।
तं वन्दे भवभ–यभिद(९)मभिम–तफल (६)—

नगणः　नगणः　सगणः　गु०　गु०
।·।·।—।·।·। — ।·।·S　S–S
वितर–णगुरु(६)मुमया यु–क्तम् (५) ॥

इति कृतयः समाप्ताः ।

---

१. तेष्वेव ( ८३८८६०१ ) तमो भेदः '**अपवाहकः**' इति ख्यातिमाससाद ।

इदानीं दण्डकजातयः कथ्यन्ते—

**दण्डको नौ रः ॥ ७ । ३३ ॥**

यत्र पादे द्वौ नगणौ ( ।।।. ।।। ) रगणाश्च सप्त (ऽ।ऽ. ऽ।ऽ. ऽ।ऽ. ऽ।ऽ. ऽ।ऽ. ऽ।ऽ. ऽ।ऽ) भवन्ति, दण्डको नाम सः । उत्कृतेः षड्विंशत्यक्षरायाः समनन्तरं दण्डकस्य पाठात्सप्तविंशत्यक्षरत्वमेव युक्तम्[1]; सर्वेषां छन्दसामेकैकाक्षरवृद्ध्या प्रवृत्तेः । इत ऊर्ध्वं पुनरेकैकरेफवृद्ध्या प्रस्तारः । दण्डको नौ र इति श्रवणात् । तत्रोदाहरणम्—

नगणः नगणः रगणः रगणः रगणः
।·।· । ।·।·। ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ
इह हि भवति दण्डका–रण्यदे–शे स्थितिः

रगणः रगणः रगणः रगणः
ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ
पुण्यभा–जां मुनी–नां मनो–हारिणी

नगणः नगणः रगणः रगणः रगणः
।·।·।—।·।·।—ऽ·।·ऽ–ऽ·।·ऽ–ऽ·।·ऽ
त्रिदश–विजयि–वीर्य द्द–प्यद्दश–ग्रीवल–

रगणः रगणः रगणः रगणः
ऽ·।·ऽ—ऽ·।· ऽ—ऽ·।·ऽ—ऽ·।·ऽ
क्ष्मीविरा–मेण रा–मेण सं–सेविते ।

नगणः नगणः रगणः रगणः रगणः
।·।·।—।·।·।–ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ
जनक–यजन–भूमिसं–भूतसी–मन्तिनी–

रगणः रगणः रगणः रगणः
ऽ·।·ऽ—ऽ·।·ऽ–ऽ·।·ऽ—ऽ·।·ऽ
सीमसी–तापद–स्पर्शपू–ताश्रमे

नगणः नगणः रगणः रगणः रगणः
।·।·।—।·।·।—ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ
भुवन–नमित–पादप–द्माभिधा–नाम्बिका

रगणः रगणः रगणः रगणः
ऽ·।·ऽ—ऽ· ।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ
तीर्थया–त्रा गता–नेकसि–द्धाकुले ॥

अत्र पादान्ते यतिः ।

---

१. सप्तविंशत्यक्षरस्य प्रस्तारे ( १३४२१७७२८ ) भेदा भवन्ति, तत्र— ( ३८४४७९६८ ) तमो भेदः 'चण्डवृष्टिप्रयात' इति प्रसिद्धः ।

**प्रथमश्चण्डवृष्टिप्रयातः**[1] ॥ ७ । ३४ ॥

यः सप्तविंशत्यक्षरपादः प्रथमो दण्डकः स चण्डवृष्टिप्रयातो नाम । पूर्वमेवोदाहरणम् ।

**अन्यत्र रातमाण्डव्याभ्याम्** ॥ ७ । ३५ ॥

रातमाण्डव्याभ्यां ऋषिभ्यामन्यत्रास्याभिधानमेतदेव, ताभ्यां पुनरन्यैव संज्ञा कृतास्य वृत्तस्य ॥ रातमाण्डव्यग्रहणं पूजार्थम् ।[2]

[3]**शेषः प्रचित इति** ॥ ७ । ३६ ॥

---

१. प्रपात इति क्वचित्पाठः । २. अत्र रातमाण्डव्योक्तसंज्ञान्तरसत्वे 'स्कन्धोग्रीवी क्रौष्टुकेः' ( ३।२९ ) 'सिंहोन्नता काश्यपस्य' ( ७।९ ) इत्यादिवत् तन्निर्देशस्यैव न्याय्यत्वात्, ग्रन्थान्तरेष्वप्यस्य संज्ञान्तरादर्शनात्, प्रथमपदसूचितानामन्येषां संज्ञानुक्तेर्न्यूनत्वापादकत्वात्, एतदीयानुवादेऽग्निपुराणे ( ३३४।३० )—'रेफवृद्ध्यार्णार्णवाः स्युर्व्यालजीमूतमुख्यकाः ।' इति तत्संज्ञोक्तेरनुपपद्यमानत्वाच्च सूत्रमिदमन्यथा व्याख्येयम्—अन्यत्र द्वितीयादिषु दण्डकेषु संज्ञा रातमाण्डव्याभ्यामुक्ताः । ता एव स्वस्यापि सम्मता इति न पुनरुच्यन्त इति भावः । यद्वा—उत्तरसूत्रयोगेन व्याख्येयम्—रातमाण्डव्याभ्यामन्यत्र शेषोऽवशिष्टो दण्डकप्रस्तारः प्रचितसंज्ञः । ताभ्यां पुनः प्रत्येकं पृथक् संज्ञा अर्णार्णवादयः कृताः प्रसिद्धा एवेति ॥

तथा च **रत्नाकरे** ( ३।१२ )—'प्रतिचरणविवृद्धरेफाः स्युरर्णार्णव–व्याल–जीमूत–लीलाकरो–द्दाम–शङ्खादयः ।' इति । आदिपदात् पञ्चदशादिभी रगणैर्घटितपादाः क्रमेण–'आराम–सङ्ग्राम–सुराम–वैकुण्ठ–सार–कासार–विसार–संहार–नीहार–मन्दार–केदार—आसार–सत्कार–संस्कार–माकन्द–गोविन्द–सानन्द–सन्दोह–आनन्द' इत्येते ग्राह्या इति **तर्कवाचस्पतिः** । सिंहसमुद्रभुजङ्गाद्या इति **रत्नाकरपञ्चिका** ।

'एवमेकैकरगणवर्धनात्सकलाङ्घ्रिषु ।
एकन्यूनसहस्रार्णपर्यन्तं दण्डका मताः ॥'–इति **श्रीकृष्णः** ।

३. शेष इति । अनुक्तनाम्नां दण्डकानां प्रचित इत्येव संज्ञा इति **भास्करः** । शेषो रगणेतरयगणादिघटितः **इत्यन्ये** । तथा च **रत्नाकरे** ( ३।१३ )—'प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डको नद्वयादुत्तरैः सप्तभिर्यैः ।' इति । 'यैरित्यन्येषामपि गणानामुपलक्षणम्, कविप्रयोगात् तद्घटितानामपि दण्डकानामिष्टत्वात् ।' इति **सेतुः** । **पञ्चिकाकृत्तु**—'नद्वयात्परतस्तकारेणापि क्वचिद्दण्डका दृश्यन्ते' इति सूत्रमेव पपाठ ।

'नगणद्वितयादेवमेकैकगणवर्धनात् ।
कुमुदाब्जतरङ्गादिनाम्नां भेदाश्च पूर्ववत् ॥'–इति **कृष्णः** ।

इतश्चण्डवृष्टिप्रयातादूर्ध्वं दण्डकप्रस्तारः प्रचित इति संज्ञां लभते। पूर्वमेकैकाक्षरक्रमेण छन्दसां वृद्धिरुक्ता। इदानीं तु रेफोपलक्षिताक्षरत्रयेण वृद्धिः। तत्रोदाहरणम्—

नगणः नगणः रगणः रगणः रगणः

।·।·।—।·।·।—ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ

प्रथम—कथित—दण्डक—श्चण्डवृ—ष्टिप्रपा—

रगणः रगणः रगणः रगणः रगणः

ऽ·।·ऽ—ऽ·।·ऽ ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ

ताभिधा—नो मुनेः **पिङ्गला—चार्य**ना—म्रो मतः

नगणः नगणः रगणः रगणः रगणः

।·।·।—।·।·।—ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ

प्रचित—इति त—तः परं दण्डका—नामियं

रगणः रगणः रगणः रगणः रगणः

ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ—ऽ·।·ऽ

जातिरे—कैकरे—फाभिवृ—द्ध्या यथे—ष्टं भवेत्।

---

इत ऊर्ध्वमष्टाविंशत्यक्षरादिपादान्यपि वृत्तानि कैश्चिदभ्युपगतानि। यथा **वृत्तचन्द्रिकायाम्**—

**मनोजशेखरच्छन्दः (२८)**—

'जरौ जरौ जरौ जरौ जगौ क्रमेण चेद्यदा।
तदा भुजङ्गनायको मनोजशेखरं जगौ॥'

**अशोकपुष्पमञ्जरी (२८)**—

'रजौ रजौ रजौ रजौ रलौ क्रमेण चेद्यदा।
अशोकपुष्पमञ्जरी समीरिता फणीश्वरैः॥'

**शाल्लूरच्छन्दः (२९)**—

'तगणात्परतो यत्र नगणाष्टकमुज्ज्वलम्।
ततो लगौ भुजङ्गेन प्रोक्तं शाल्लूरमद्भुतम्॥'

**घनाक्षरीच्छन्दः (३१)**—

'विचारचर्चा गलयोर्गणानां न यत्र भूपैस्तिथिभिर्यतिर्गुरुः।
अन्ते धरापावकवर्णपादा समीरितासौ फणिना घनाक्षरी॥'

**रूपघनाक्षरीच्छन्दः (३२)**—

'भूपैर्भूपैर्विरामः स्याद्गणभेदगलोज्झितैः।
ज्ञेयान्ते लघुना युक्ता रूपपूर्वा घनाक्षरी॥'

इत्यादीनि। एतेषामत्र दण्डकगाथादिष्वन्तर्भाव ऊह्य इति।

नगणः नगणः रगणः रगणः रगणः

।·।·।—।·।·।—ऽ·।·ऽ ऽ·।·ऽ—ऽ·।·ऽ

स्वरुचि–रचित–संज्ञया तद्दिशे–षैरशे–

रगणः रगणः रगणः रगणः रगणः

ऽ· ।·ऽ ऽ·।·ऽ—ऽ·।· ऽ–ऽ·।·ऽ—ऽ·।·ऽ

षैः पुनः काव्यम–न्येऽपि कु–र्वन्तु वा–र्गी ।राः

नगणः नगणः रगणः रगणः रगणः

।·।·। ।·।· ।—ऽ·।·ऽ—ऽ·।·ऽ–ऽ·।· ऽ

भवति यदि स–मानसं–ख्याक्षरै–र्यत्र पा–

रगणः रगणः रगणः रगणः रगणः

ऽ·।·ऽ—ऽ·।·ऽ ऽ·।·ऽ ऽ·।·ऽ—ऽ· ।·ऽ

द्व्यव–स्था ततो दण्डकः पूज्यते–ऽसौ जनैः ॥

अत्र पादान्ते यतिः ।

इति दण्डकाः समाप्ताः ।

इति श्रीभट्टहलायुधविरचितायां पिङ्गलछन्दोवृत्तौ सप्तमोऽध्यायः ।

---

अष्टमोऽध्यायः ।

## अत्रानुक्तं गाथा ॥ ८ । १ ॥

---

१. अत्र ग्रन्थे उक्तच्छन्दोभ्यो यदन्यद्विषमाक्षरपादं पादैरसमं वा छन्दस्तद्गाथाख्यम् । तथा प्रागुक्तेषु समानाक्षरपादेष्वपि विशिष्य यस्याभिधानं नोक्तम्, तद्गाथा । तदेतदर्थद्वयं सूत्रावृत्त्या लभ्यमिति **केचित्** । तत्र समच्छन्दसामुक्थादिसंज्ञाभिरुक्तत्वेनानुक्तत्वाभावात् न गाथात्वम्, अन्यथा उक्थादिसंज्ञानामनवकाश **इत्यपरे** ।

अत एव **वृत्तचन्द्रिकायाम्**—'गाथोक्ता चरणैः षड्भिस्तथैव चरणैस्त्रिभिः ।' इत्युक्तम् । **रत्नाकरे**ऽपि—'विषमाक्षरपादं वा पादैरसमं दशधर्मवत् । यच्छन्दो नोक्तमत्र गाथेति तत्सूरिभिः प्रोक्तम् ॥' इति । अत्र **सेतुः**—विषमेति–क्रमभेदात् सङ्ख्याभेदाच्च विषमाणि अक्षराणि लघुगुरवो येषु ते विषमाक्षराः । ते पादा यस्मिंस्तथोक्तम् । वा अथवा, चतुःसङ्ख्याकपादैः श्रीप्रभृतिभिर्विसदृशम्–पञ्चादिसङ्ख्यपादमित्यर्थः । तदेवाह—यच्छन्दः प्राङ् नोक्तं तस्य गाथेति नामेत्यर्थः । यत्तु—पदचतुरूर्ध्वादीनां गाथात्वं निवारयितुमाहे–ति, तच्चिन्त्यम्, पादैरसममित्यनेनैव तेषां गाथात्वस्य निरस्तत्वात् ।···विषमाक्षरपादे त्वियमेव कारिकोदाहरणम्; क्रमेणाष्ट–दश–सप्त–नवाक्षरपादघटितत्वात् ।

अत्र शास्त्रे नामोद्देशेन यन्नोक्तं छन्दः, प्रयोगे च दृश्यते, तद्गाथेति मन्तव्यम् ।

(तत्र–त्रिष्टुभि)

## कुड्मलदन्ती भ्तौ न्गौ गिन्द्रियरसाः ॥ ८ । २ ॥

यस्य पादे भगणतगणौ (ऽ।।. ऽऽ।) नगणो (।।।) गकारौ (ऽ. ऽ) च भवतस्तद्वृत्तं 'कुड्मलदन्ती' नाम (११।३९७)। पञ्चभिः षड्भिश्च यतिः । तत्रोदाहरणम्—

भगणः तगणः नगणः गु० गु०
ऽ·।·।—ऽ·ऽ · ।—।·।·।—ऽ—ऽ
कुड्मल–दन्ती(५)वि–कटनि–त–म्बा (६)

भगणः तगणः नगणः गु० गु०
ऽ·।·।—ऽ·ऽ · ।—।·।·।—ऽ—ऽ
किन्नर–कण्ठी(५)ल–घुतर–म–ध्या (६)।

भगणः तगणः नगणः गु० गु०
ऽ·।·।—ऽ·ऽ · ।—।·।·।—ऽ—ऽ
बिम्बफ–लोष्ठी(५)मृ–गशिशु–ने–त्रा (६)

भगणः तगणः नगणः गु० गु०
ऽ·।· ।—ऽ·ऽ · ।—।·।·।—ऽ—ऽ
मित्र! भ–वन्तं(५)सु–खयतु–का–न्ता (६) ॥

(जगत्याम्)

## वरतनुर्न्जौ ज्रौ षड्रसाः ॥ ८ । ३ ॥

यस्य पादे नगणजगणौ (।।।. ।ऽ।) जगणरगणौ (।ऽ।. ऽ।ऽ) च तद्वृत्तं 'वरतनु'र्नाम (१२।१३९२)। षड्भिः षड्भिश्च यतिः । तत्रोदाहरणम्—

नगणः जगणः जगणः रगणः
।·।· ।—।·ऽ·। ।·ऽ·।—ऽ।·ऽ
अयि! वि–जहीहि(६) दृढोप–गूहनं (६)

---

पादैरसममित्यस्योदाहरणं 'दशधर्मं'वदिति । तच्च महाभारते (उद्यो० ३३।१०१)—'दश धर्मं न जानन्ति धृतराष्ट्र! निबोध तान् । मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः । त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ॥' इति ।

१. इतः प्रभृति 'शशिवदना-' (८।१९) इति सूत्रान्तं सप्तदशसूत्राणि वैदिकैर्नाधीयन्ते, अग्निपुराणेऽपि नानूद्यन्ते, तस्मात्प्रक्षिप्तान्येवेति सम्भाव्यते ।

नगणः जगणः जगणः रगणः

।·।· ।—।·ऽ·। — ।·ऽ·। ऽ·।·ऽ

त्यज न–वसङ्ग(६)–मभीरु! वल्लभम् (६)।

नगणः जगणः जगणः रगणः

।·।·।—।·ऽ·। — ।·ऽ·। ऽ·।·ऽ

अरुण–करोद्ग(६)–म एष वर्तते (६)

नगणः जगणः जगणः रगणः

।·।·।—। · ऽ·। — ।·ऽ·। ऽ·।·ऽ

वरत–नु! संप्र(६)–वदन्ति कुक्कुटाः (६) ॥

## जलधरमाला म्भौ स्मौ समुद्रवसवः ॥ ८ । ४ ॥

यस्य पादे मगणभगणौ ( ऽऽऽ. ऽ।। ) सगणमगणौ ( ।।ऽ. ऽऽऽ ) च भवतस्तद्वृत्तं 'जलधरमाला' नाम ( १२।२४१ ) । चतुर्भिरष्टभिश्च यतिः । तत्रोदाहरणम्—

मगणः भगणः सगणः मगणः

ऽ·ऽ · ऽ—ऽ · ।·।—।·।·ऽ— ऽ·ऽ·ऽ

धत्ते शो–भां(४)कुव–लयदा—मश्यामा (८)

मगणः भगणः सगणः मगणः

ऽ·ऽ·ऽ—ऽ · ।·।—।·।· ऽ—ऽ · ऽ·ऽ

शैलोत्स–ङ्गे(४)जल–धरमा–ला लीना (८) ।

मगणः भगणः सगणः मगणः

ऽ·ऽ·ऽ—ऽ · ।·।—।·।·ऽ—ऽ·ऽ·ऽ

विद्युल्ले–खा(४)कन–ककृता–लङ्कारा (८)

मगणः भगणः सगणः मगणः

ऽ·ऽ·ऽ—ऽ · ।·।—।·।·ऽ—ऽ·ऽ·ऽ

क्रीडासु–प्ता(४)युव–तिरिवा–ङ्के पत्युः (८) ॥

## गौरी नौ रौ ॥ ८ । ५ ॥

यस्य पादे नगणौ ( ।।।. ।।। ) रगणौ ( ऽ।ऽ. ऽ।ऽ ) च भवतस्तद्वृत्तं 'गौरी' नामेति गाथा ( १२।१२१६ ) । पादान्ते यतिः । तत्रोदाहरणम्—

नगणः नगणः रगणः रगणः नगणः नगणः रगणः रगणः

।·।·।—।·।·।—ऽ·।·ऽ—ऽ·।·ऽ ।·।·।—।·।·।—ऽ·।·ऽ—ऽ·।·ऽ

प्रणम–त चर–णारविं–न्दद्वयं त्रिभुव–ननमि–तस्य गौ–रीपतेः ।

नगणः नगणः रगणः रगणः नगणः नगणः रगणः रगणः

।·।·।—।· ।·।—ऽ·।· ऽ ऽ·।·ऽ ।·।·।—।·।·।—ऽ·।·ऽ—ऽ·।·ऽ

सकृद-पि मन-सैव यः सेवितः प्रवित-रति य-थेष्टम-ष्टौ गुणान् ॥

इयमेव गौरी दण्डकात्पूर्वमेकैकरेफवृद्ध्या नामान्तराणि लभते।

## ललना भ्तौ न्सावविन्द्रियर्षयः ॥ ८। ६ ॥

यस्य पादे भगणतगणौ ( ऽ।।. ऽऽ। ) नगणसगणौ ( ।।।. ।।ऽ ) च भवतस्तद्वृत्तं 'ललना' नाम गाथा ( १२।१९२३ )। पञ्चभिः सप्तभिश्च यतिः। तत्रोदाहरणम्—

भगणः तगणः नगणः सगणः

ऽ·।·।—ऽ·ऽ · ।—।·।·।—।·।·ऽ

या कुच-गुर्वी(५)मृ-गशिशु-नयना (७)

भगणः तगणः नगणः सगणः

ऽ·।·।—ऽ· ऽ · ।—।·।·।—।·।·ऽ

पीननि-तम्बा(५)म-दकरि-गमना (७)।

भगणः तगणः नगणः सगणः

ऽ·।·।—ऽ·ऽ · ।—।·।·।—।·।·ऽ

किन्नर-कण्ठी(५)सु-रुचिर-दशना (७)

भगणः तगणः नगणः सगणः

ऽ·।·। ऽ·ऽ · ।—।·।·। ।·।·ऽ

सा तव सौख्यं(५)वि-तरतु ललना (७) ॥

( अतिजगत्याम् )

## कनकप्रभा स्जौ स्जौ ग् ॥ ८। ७ ॥

यस्य पादे सगणजगणौ ( ।।ऽ. ।ऽ। ) पुनः सगणजगणौ ( ।।ऽ. ।ऽ। ) गकारश्च (ऽ) तद्वृत्तं 'कनकप्रभा' नाम गाथा ( १३।२७९६ )। पादान्ते यतिः। तत्रोदाहरणम्—

सगणः जगणः सगणः जगणः गु०

।·।·ऽ—।·ऽ·।—।·।·ऽ—।·ऽ·।—ऽ

कनक-प्रभा पृ-थुनित-म्बशालि-नी

सगणः जगणः सगणः जगणः गु०

।·।·ऽ—।·ऽ·।—।·।·ऽ—।·ऽ·।—ऽ

विपुल-स्तनी हृ-रिणशा-वकेक्ष-णा।

सगणः　जगणः　सगणः　जगणः　गु०

।·।·S—।·S·।—।·।·S　।·S·।—S

इयम–ङ्गना न–यनयोः पथि स्थि–ता

सगणः　जगणः　सगणः　जगणः　गु०

।·।·S　।·S·।　।·।·S—।·S·।—S

कुरुते न कस्य मदना–तुरं म–नः ? ॥

## कुटिलगतिर्नौ तौ गू स्वर्तवः ॥ ८ । ८ ॥

यस्य पादे नगणौ ( ।।।. ।।। ) तगणौ ( SS।. SS। ) गकारश्च ( S ) भवति तद्वृत्तं 'कुटिलगति'र्नाम गाथा ( १३।२३६८ ) । सप्तभिः षड्भिश्च यतिः । तत्रोदाहरणम्—

नगणः　नगणः　तगणः　तगणः　गु०

।·।·।—।·।·।—S · S· ।—S·S·।—S

अधर–किसल–ये(७)कान्त–दन्तक्ष–ते (६)

नगणः　नगणः　तगणः　तगणः　गु०

।·।·।—।·।·।—S · S· ।—S·S·।—S

हरिण–शिशुदृ–शां(७)नृत्य–ति भ्रूयु–गम् (६) ।

नगणः　नगणः　तगणः　तगणः　गु०

।·।·।—।·।·।—S · S·।—S·S· ।—S

ध्रुवमि–दमुचि–तं(७)यद्वि–पत्तौ स–ता (६)

नगणः　नगणः　तगणः　तगणः　गु०

।·।·।—।·।·।—S · S · ।—S·S·।—S

मतिकु–टिलग–तेः(७)स्यान्म–हानुत्स–वः (६) ॥

( शक्कर्याम् )

## वरसुन्दरी भ्जौ स्नौ गौ ॥ ८ । ९ ॥

यस्य पादे भगणजगणसगणनगणा ( S।।. ।S।. ।।S. ।।। ) गकारौ ( S. S ) च भवतस्तद्वृत्तं 'वरसुन्दरी' नाम गाथा ( १४।३८२३ ) । पादान्ते यतिः । तत्रोदाहरणम्—

भगणः　जगणः　सगणः　नगणः　गु० गु०

S·।·।—।·S·।—।·।·S—।·।·।—S—S

स्वादुशि–शिरोज्ज्व–लसुग–न्धिजल–पू–र्णं

भगणः　जगणः　सगणः　नगणः　गु० गु०

S·।·।—।·S·।—।·।·S—।·।·।—S—S

वीचिच–यचञ्च–लविनि–र्गशत–प–प्रभम् ।

भगणः जगणः सगणः नगणः गु० गु०

S·I·I—I·S·I—I·I·S—I·I·I—S—S

हंसक–लकूजि–त मनो–हरत–द्रा–न्तं

भगणः जगणः सगणः नगणः गु० गु०

S·I·I—I·S·I—I·I·S—I·I·I—S–S

पश्य व–रसुन्द–रि! सरो–वरमु–दा–रम् ॥

## कुटिला म्भौ न्यौ गौ वेदरससमुद्राः ॥ ८ । १० ॥

यस्य पादे मगणभगणनगणयगणा (SSS. SII. III. ISS) गकारौ (S. S) च भवतस्तद्वृत्तं 'कुटिला' नाम गाथा (१४।१००९)। चतुर्भिः षड्भिश्चतुर्भिश्च यतिः। तत्रोदाहरणम्—

मगणः भगणः नगणः यगणः गु० गु०

S·S·S—S·I·I—I·I·I—I·S·S—S—S

अध्वस्था–नां(४)जन–यति सु–ख(६)मुच्चैः–कू–ज (४)–

मगणः भगणः नगणः यगणः गु० गु०

S·S·S—S·I·I I·I·I—I·S·S—S—S

न्दात्यूहो–ऽयं(४)पथि निचुलि–नि(६)तोयो–पा–न्ते (४)।

मगणः भगणः नगणः यगणः गु० गु०

S·S·S—S·I·I—I·I·I—I·S·S—S—S

कर्णाट–स्त्री(४)रति–कुहरि–त(६)तुल्य–च्छे–दै (४)–

मगणः भगणः नगणः यगणः गु० गु०

S·S·S—S·I·I—I·I·I—I·S·S—S—S

र्नादैः क–ण्ठ(४)स्खल–नकुटि–ल(६)मन्द्रा–व–र्तैः (४) ॥

(अष्टौ)

## शैलशिखा भ्रौ न्भौ भ्गौ भूतरसेन्द्रियाणि ॥ ८ । ११ ॥

यस्य पादे भगणरगणौ (SII. SIS) नगणभगणौ (III. SII) भगणो (SII) गकार-(S)श्च भवति तद्वृत्तं 'शैलशिखा' नाम गाथा (१६।२८११९) ॥ पञ्चभिः षड्भिः पञ्चभिश्च यतिः। क्वचित् पादान्ते यतिं पठन्ति। तत्रोदाहरणम्—

भगणः रगणः नगणः भगणः भगणः गु०

S·I·I—S·I·S—I·I·I—S·I·I—S·I·I—S

शैलशि–खानि(५)कु–ञ्जशयि–तस्य(६)ह–रेः श्रव–णे (५)

भगणः　रगणः　नगणः　भगणः　भगणः　गु०

S·I·I—S·I · S—I·I·I—S·I · I—S·I·I—S

जीर्णतृ–णं क(५)रे–ण निद–धाति(६)क–पिश्वप–लः (५)।

भगणः　रगणः　नगणः　भगणः　भगणः　गु०

S·I·I—S·I · S—I·I·I—S·I · I—S·I·I—S

क्षुद्रव–धाप(५)वा–दपरि–हार(६)वि–नीतम–ते (५)-

भगणः　रगणः　नगणः　भगणः　भगणः　गु०

S·I·I S·I · S—I·I·I—S·I · I—S·I·I—S

स्तस्य न ताव(५)तै–व लघु–ता द्वि(६)प–यूथभि–दः (५) ॥

## वरयुवती भ्रौ य्नौ न्गौ ॥ ८ । १२ ॥

यस्य पादे भगणरगणौ ( SII. SIS ) यगणनगणौ ( ISS. III ) नगणो ( III ) गकारश्च ( S ) भवति, तद्वृत्तं 'वरयुवती' नाम गाथा ( १६१३२३४३ ) । पादान्ते यतिः । तत्रोदाहरणम्—

भगणः　रगणः　यगणः　नगणः　नगणः　गु०

S·I·I—S·I·S—I·S·S—I·I·I—I·I·I—S

कुञ्जर–कुम्भपी–ठ–पीनो–न्नतकु–चयुग–ला

भगणः　रगणः　यगणः　नगणः　नगणः　गु०

S·I·I—S·I·S—I·S·S—I·I·I—I·I·I—S

पार्वण–शर्वरी–शगर्वा–पहमु–खकम–ला ।

भगणः　रगणः　यगणः　नगणः　नगणः　गु०

S·I·I—S·I·S—I·S·S—I·I·I—I·I·I—S

पीननि–तम्बबि–म्बसंवा–हनशि–थिलग–ति—

भगणः　रगणः　यगणः　नगणः　नगणः　गु०

S·I·I—S·I·S—I · S·S—I·I·I—I·I·I—S

मुञ्ज न–राधिरा–ज ! भूया–स्तव व–रयुव–तिः ॥

( अत्यष्टौ )

## अतिशायिनी सौ ज्भौ ज्गौ ग् दिक्स्वराः ॥ ८ । १३ ॥

यस्य पादे सगणौ ( IIS. IIS ) जगणभगणौ ( ISI. SII ) जगणो ( ISI ) गकारौ ( S. S ) च भवतस्तद्वृत्तं 'अतिशायिनी' नाम गाथा ( १७२३९०० ) । दशभिः सप्तभिश्च यतिः । तत्रोदाहरणम्—

सगणः सगणः जगणः भगणः जगणः गु० गु०

।।ऽ—।।ऽ—।ऽ।—ऽ । ।।—।ऽ।—ऽ—ऽ

इति धौ–तपुर–न्धिमत्स–रां(१०)न्सर–सि मज्ज–ने–न (७)

सगणः सगणः जगणः भगणः जगणः गु० गु०

।।ऽ—।।ऽ— ।ऽ।—ऽ । ।।—।ऽ।—ऽ—ऽ

श्रियमा–सवतो–ऽतिशायि–नी(१०)मप–मलाङ्ग–भा–सः (७) ।

सगणः सगणः जगणः भगणः जगणः गु० गु०

।।ऽ— ।।ऽ—।ऽ।—ऽ । ।।—।ऽ।—ऽ—ऽ

अवलो–क्य तदै–व याद–वा(१०)नप–रवारि–रा–शेः (७)

सगणः सगणः जगणः भगणः जगणः गु० गु०

।।ऽ–।।ऽ—।ऽ।—ऽ । ।।—। ऽ।—ऽ—ऽ

शिशिरे–तररो–चिषाप्य–पां(१०)तति–षु मङ्क्षु–मी–षे (७) ॥

(शि० व० ८।७१)

## अवितथं न्जौ भ्जौ ज्लौ ग् ॥ ८ । १४ ॥

यस्य पादे नगणजगणौ (।।।. ।ऽ।) भगणजगणौ (ऽ।।. ।ऽ।) जगणलकारौ (।ऽ।.।) गकारश्च (ऽ) भवति तद्वृत्तम् 'अवितथम्' नाम गाथा (१७।६११४०) भवति । यतिः पादान्ते । तत्रोदाहरणम्—

नगणः जगणः भगणः जगणः जगणः ल० गु०

।।।—।ऽ।—ऽ।।—।ऽ।—।ऽ।—।—ऽ

श्रुतिप–रिपूत–वक्त्रम–तिसुन्द–रवाग्वि–भ–वं

नगणः जगणः भगणः जगणः जगणः ल० गु०

।।।—।ऽ।—ऽ।।—।ऽ।—।ऽ।–।—ऽ

तमखि–लजैमि–नीयम–तसाग–रपार–ग–तम् ।

नगणः जगणः भगणः जगणः जगणः ल० गु०

।।।—।ऽ।—ऽ।।—।ऽ।—।ऽ।—।—ऽ

अवित–थवृत्त–विभ्रम–जभूमि–तपाद–यु–गं

नगणः जगणः भगणः जगणः जगणः ल० गु०

।।।—।ऽ।—ऽ।।—।ऽ।—।ऽ।—।—ऽ

पितर–महं न–मामि व–हुरूप–मुदार–म–तिम् ॥

## वस्विन्द्रियसमुद्राश्चेत्कोकिलकम् ॥ ८ । १५ ॥

यस्य पादे पूर्वोक्ता गणा भवन्ति, अष्टभिः पञ्चभिश्चतुर्भिश्च यतिर्भवति तद्वृत्तं 'कोकिलकम्' इति गाथा ( १७।६११४० ) । तत्रोदाहरणम्—

नगणः जगणः भगणः जगणः जगणः ल० गु०
।·।·।—।·S·।—S·। · ।—।·S·।—। · S·।—।—S
नवस–हकार–पुष्प(८)म–धुनिष्क–ल(५)कण्ठ–त–या (४)

नगणः जगणः भगणः जगणः जगणः ल० गु०
।·।·।—।·S·।—S·। · ।—।·S·।—। · S·।—।—S
मधुर–तरस्व–रेण(८)प–रिकूज–ति(५)कोकि–ल–कः (४) ।

नगणः जगणः भगणः जगणः जगणः ल० गु०
।·।·।—।·S·।—S·। · ।—।·S·।—। · S·।—।—S
प्रथम–ककार–विद्ध(८)व–चनैर्ध–न(५)लुब्ध–म–ते (४)–

नगणः जगणः भगणः जगणः जगणः ल० गु०
।·।·।—।·S·। S·। · ।—।·S·।—। · S·।—।—S
स्वव ग–मनस्य भङ्ग(८)मि–व संप्र–ति(५)कर्तु–म–माः (४) ॥

( भूतौ )

## विबुधप्रिया र्सौ जौ भ्रौ वसुदिशः ॥ ८ । १६ ॥

यस्य पादे रगणसगणौ ( ऽ।ऽ. ।।ऽ ) जगणौ ( ।ऽ।. ।ऽ। ) भगणरगणौ ( ऽ।।. ऽ।ऽ ) च भवतस्तद्वृत्तं 'विबुधप्रिया' नाम गाथा ( १८।९३०१९ ) भवति । अष्टभिर्दशभिश्च यतिः । तत्रोदाहरणम्—

रगणः सगणः जगणः जगणः भगणः रगणः
S·।·S—।·।·S—।·S · ।—।·S·।—S·।·।—S·।·S
कुन्दकु–ड्मलको–मल(८)द्यु–ति दन्त–पङ्क्तिवि–राजिता (१०)

रगणः सगणः जगणः जगणः भगणः रगणः
S·।·S—।·।·S—।·S · ।—।·S· ।—S·।·।—S·।·S
हंसग–द्गदवा–दिनी(८)व–निता म–वेद्विबु–धप्रिया (१०) ।

रगणः सगणः जगणः जगणः भगणः रगणः
S·।·S—।·।·S—।·S · ।—।·S·।—S·।·।—S·।·S
पीनतु–ङ्गपयो–धर(८)द्व–यभार–मन्थर–गामिनी (१०)

रगणः सगणः जगणः जगणः भगणः रगणः

S·I·S—I·I·S—I·S · I—I·S·I—S·I·I—S·I·S

नेत्रका–न्तिविनि–र्जित(८)श्र–वणाव–तंसित–कैरवा (१०) ॥

## नाराचकं नौ रौ रौ ॥ ८ । १७ ॥

यस्य पादे नगणौ ( ।।।. ।।। ) रगणाश्चत्वारो ( ऽ।ऽ. ऽ।ऽ. ऽ।ऽ. ऽ।ऽ ) भवन्ति तद्वृत्तं 'नाराचकं' नाम गाथा ( १८।७४९४४ ) । दशभिरष्टभिश्च यतिः । तत्रोदाहरणम्—

नगणः नगणः रगणः रगणः रगणः रगणः

I·I·I—I·I·I S·I·S—S · I·S—S·I·S—S·I·S

रघुप–तिरपि जातवे–दो(१०)विशु–द्धां प्रगृ–ह्य प्रियां (८)

नगणः नगणः रगणः रगणः रगणः रगणः

I·I·I—I·I·I—S·I·S S · I·S—S·I·S—S·I·S

प्रियसु–हृदि वि–भीषणे सं(१०)क्रम–य्य श्रियं–वैरिणः (८)।

नगणः नगणः रगणः रगणः रगणः रगणः

I·I·I—I·I·I—S·I·S—S · I·S—S·I·S—S·I·S

रविसु–तसहि–तेन ते–ना(१०)नुया–तः ससौ–मित्रिणा (८)

नगणः नगणः रगणः रगणः रगणः रगणः

I·I·I—I·I·I—S·I·S—S · I·S—S·I·S—S·I·S

भुजवि–जितवि–मानर–त्ना(१०)धिरू–ढः प्रत–स्थे पुरीम् (८) ॥

( र० वं० १२।१०४ )

( अतिधृतौ )

## विस्मिता य्मौ न्सौ रौ ग् रसर्तुस्वराः ॥ ८ । १८ ॥

यस्य पादे यगणमगणौ (।ऽऽ. ऽऽऽ) नगणसगणौ ( ।।।. ।।ऽ ) रगणौ (ऽ।ऽ. ऽ।ऽ) गकारश्च ( ऽ ) भवति तद्वृत्तं 'विस्मिता' नाम गाथा ( १९।७५७१४ ) ॥ षड्भिः, षड्भिः, सप्तभिश्च यतिः । तत्रोदाहरणम्—

यगणः मगणः नगणः सगणः रगणः रगणः गु०

I·S·S—S·S·S I·I·I—I·I·S—S·I·S S·I·S—S

श्रिया जु–ष्टं दिव्यैः(६)सपट–हरवै(६)रन्वितं पुष्पव–र्षैः (७)–

यगणः मगणः नगणः सगणः रगणः रगणः गु०

I·S·S—S·S·S I·I·I—I·I·S S·I·S—S·I·S—S

वपुष्ट–श्चैयस्य(६)क्षणमृ–विगणैः(६)स्तूयमा–नं निरी–य (७)।

यगणः मगणः नगणः सगणः रगणः रगणः गु०

I·S·S—S·S·S — I·I·I—I·I·S — S·I·S—S·I·S—S

प्रकाशे–नाकाशे(६)दिनक–रकरा(६)न्विक्षिप–द्विस्मिता–क्षै (७)–

यगणः मगणः नगणः सगणः रगणः रगणः गु०

I·S·S—S·S·S — I·I·I—I·I·S — S·I·S—S·I·S—S

नरेन्द्रै–रौपेन्द्रं(६)वपुर–थ विश(६)द्धाम वी–क्षांबभू–वे (७) ॥

(शि० व० २०।७९)

(कृतौ)

## शशिवदना न्जौ भ्जौ ज् ज्रौ रुद्रदिशः ॥ ८ । १९ ॥

यस्य पादे नगणजगणौ ( III. ISI ) भगणो ( SII ) जगणास्त्रयो ( ISI. ISI. ISI ) रगणश्च ( SIS ) भवति, तद्वृत्तं 'शशिवदना' नाम गाथा ( २११५४११६०० ) । एकादशभिर्दशभिश्च यतिः । **'पञ्चकावली'**ति केचित् । तत्रोदाहरणम्—

नगणः जगणः भगणः जगणः जगणः जगणः रगणः

I·I·I—I·S·I—S·I·I—I·S · I—I·S·I—I·S·I—S·I·S

तुरग–शताकु–लस्य प–रितः(११)प–रमेक–तुरङ्ग–जन्मनः (१०)

नगणः जगणः भगणः जगणः जगणः जगणः रगणः

I·I·I—I·S·I—S·I·I—I·S · I—I·S·I I·S·I—S·I·S

प्रमथि–तभूभृ–तः प्रति–पथं(११)म–थितस्य भृशं म–हीभृता (१०) ।

नगणः जगणः भगणः जगणः जगणः जगणः रगणः

I·I·I—I·S·I—S·I·I—I·S · I I·S·I—I·S·I—S·I·S

परिच–लतो ब–लानुज–बल(११)स्य पुरः स–ततं धु–तश्रिय (१०)–

नगणः जगणः भगणः जगणः जगणः जगणः रगणः

I·I·I—I·S·I—S·I·I—I·S · I I·S·I—I·S·I—S·I·S

श्चिरवि–गतश्चि–यो जल–निधे(११)श्च तदाभ–वदन्त–रं महत् (१०) ॥

(शि० व० ३।८२)

एवमादीनि वृत्तानि कोटिशः प्रस्तारेषु महाकविप्रयोगेषु च दृश्यन्ते । विशेषसंज्ञाभावात्तानि शास्त्रकारेण नामनिर्देशं कृत्वा नोक्तानि तानि गाथाशब्देन कथ्यन्ते ।

---

इदानीं प्रस्तारादीन् प्रत्ययानुपक्रमते[1] । तत्र गायत्र्यादिप्रस्तारसिद्ध्यर्थमेकाक्षरप्रस्तार-पूर्वकं द्व्यक्षरप्रस्तारं सूत्रद्वयेनाह—

**द्विकौ ग्लौ ॥ ८ । २० ॥**

उपरिष्टाद् गकारं लिखित्वाधस्ताल्लकारं विन्यसेदित्येकाक्षरप्रस्तारः । तस्य द्विकत्वाद् द्वौ ग्लौ द्विकौ स्थापयेत् । द्वे आवृत्ती प्रमाणमनयोरिति द्विकौ । 'संख्याया अतिशदन्तायाः कन्' ( पाणि० ५।१।२२ ) इति कन्प्रत्ययः । ततश्च गकारं ततोऽधस्ताल्लकारं लिखित्वा विस्पष्टार्थमधस्तिर्यग्रेखां दद्यात् । अधस्ताच्च पूर्ववद् गकारलकारौ स्थापयेत् ॥

अत्र किं कर्तव्यमित्याह—

**मिश्रौ च ॥ ८ । २१ ॥**

अनेन द्वितीयाक्षरप्रस्तारं दर्शयति । चकारः पूर्वप्रस्तारसमुच्चयार्थः । द्विकौ ग्लौ स्थापयित्वा अनन्तरं द्वितीयस्थानेषु मिश्रौ ग्लौ विन्यसेत् । गकारो गकारेण संश्लिष्टो मिश्र उच्यते, लकारश्च लकारेण । मिश्राविति गकारलकाराभ्यां प्रत्येकमभिसम्बध्यते । 'द्वन्द्वात्परो यः श्रूयत' इति न्यायात् । ततश्च प्रथमायामावृत्तौ गकारौ मिश्रौ स्थापयेत् । द्वितीयायां लकाराविति । ततो मध्ये लेखामपनयेत् । एवं चतुःप्रकारो द्व्यक्षरप्रस्तारो भवति । तद्यथा—गौ ल्गौ ग्लौ लाविति ॥

इदानीं द्व्यक्षरप्रस्तारपूर्वकमेकैकाक्षरवृद्ध्या त्र्यक्षरादिप्रस्तारं दर्शयितुमाह—

**पृथग्ला मिश्राः ॥ ८ । २२ ॥**

द्व्यक्षरप्रस्तारस्य पूर्वन्यायेन द्विकं लेखाविभक्तं स्थापयित्वा तृतीयाक्षरस्थानेषु प्रथमावृत्तौ गकारा मिश्रा दातव्याः । द्वितीयावृत्तौ लकारा मिश्रास्ततो मध्यात् लेखामपनयेत् । एवं त्रिकः प्रस्तारः सिद्ध्यति । पृथगिति विजातीयासंसर्गमाह । तेन प्रथमायामावृत्तौ न लकारप्रवेशः । द्वितीयायां न गकारस्य । एवं त्रिकप्रस्तारं द्विः स्थापयित्वा पृथग् ग्ला मिश्रा दातव्या इति चतुरक्षरः प्रस्तारः । एवं तत्पूर्वकः पञ्चाक्षरः प्रस्तारः । तथैव तत्पूर्वकः षडक्षरो गायत्रीसमवृत्तप्रस्तारः । एवमुष्णिगादीनामप्येकैकाक्षरवृद्ध्या अयमेव न्यासः । तत्रेदं सूत्रं त्र्यक्षरात् प्रभृति पुनः पुनरावर्तनीयं यावदभिमतः प्रस्तारः[2] ॥

---

१. छन्दसां भेदादिप्रत्यायकत्वात्प्रत्ययाः । ते च दर्शिताः **केदारेण**—'प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादिलगक्रिया । सङ्ख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥' इति ।

१. प्रकारान्तरमुक्तं **रत्नाकरे**—

'पादे सर्वगुरावाद्याल्लघु न्यस्य गुरोरधः ।
यथोपरि तथा शेषं भूयः कुर्यादमुं विधिम् ॥
ऊने दद्याद्गुरूनेव यावत्सर्वलघुर्भवेत् ।
प्रस्तारोऽयं समाख्यातश्छन्दोविचितिवेदिभिः ॥'

**वसवस्त्रिकाः ॥ ८ । २३ ॥**

एवं पूर्वोक्ते त्र्यक्षरप्रस्तारे अष्टौ त्रिका जायन्ते । ते च मकारादयः शास्त्रादौ कथिता एव । प्रदर्शनार्थं चैतत्; तेन षोडश चतुष्का द्वात्रिंशत्पञ्चका भवन्ति । एवं चतुःषष्टिर्गायत्रीसमवृत्तानि सर्वगुरुलघ्वाद्यन्तानि भवन्ति । द्विगुणोत्तरमुष्णिगादीनाम्; एकैकाक्षराधिक्यात् । विस्पष्टार्थमिदं सूत्रम्; प्रस्तारादेव सङ्ख्यापरिच्छित्तेः[1] ॥

---

1. प्रस्तारस्य क्रमे बीजं नोचुः प्राञ्चोऽत्र यद्यपि ।
स्पष्टतायास्तथाप्यस्मि वदामि सुधियां मुदे ॥

सर्वगुरुपादस्य भेदाकाङ्क्षायां द्वितीयपङ्क्तौ प्रथमस्थान एवोपस्थितत्वात् गुरुनिरासपूर्वं लघुप्रयोगेण सर्वगुरुपादो भिद्यत इति तस्यादौ कल्पनम्,–( ।. ऽ. ऽ )। ततस्तृतीयपङ्क्तौ द्वितीये स्थाने गुरुनिरासपूर्वं लघुप्रयोग इति द्वितीयो भेदः,–( ऽ. ।. ऽ )। अस्यैव शेषभूतश्चतुर्थपङ्क्तिस्थस्तृतीयो भेद इति तस्य कल्पनम्,–( ।. ।. ऽ ) ततः पञ्चमपङ्क्तौ तृतीयस्थाने तथैव लघुप्रयोगाच्चतुर्थस्य,–( ऽ. ऽ. । )। अस्यैव च द्विगुर्वादेस्त्रयोऽन्ये भेदाः– लघुगुर्वादिः–( ।. ऽ. । ), गुरुलघ्वादिः–( ऽ. ।. । ), लघुद्वयादिश्च–( ।. ।. । ) इति । इत्थं सर्वगुरुणा प्रथमेन ( ऽ. ऽ. ऽ ) सहितेषु मध्याया अष्टभेदेषु क्रमे बीजमुक्तम् । एवं प्रतिष्ठादिप्रस्तारक्रमेऽप्यूह्यम् ॥

एकाक्षरादिषड्विंशत्यन्तजातिप्रस्तारपिण्डसङ्ख्योक्ता **वृत्तमौक्तिके**—

'षड्विंशतिः, सप्तशतानि, चैव तथा सहस्राण्यपि सप्तपङ्क्तिः ।
लक्षाणि दृग्वेदसुसम्मितानि, कोट्यस्तथा रामनिशाकरैः स्युः ॥'
( १३,४२,१७,७,२६ ) इति **वृत्तरत्नाकरसेतौ** ।

एवमर्धसमवृत्तेऽर्धप्रस्तारः, विषमवृत्ते च श्लोकप्रस्तार इति ज्ञेयम् । मात्रावृत्तप्रस्तारोऽपि ग्रन्थान्तरोक्तो दर्शितः **सेतुकृता**—

'तत्र प्रथमपङ्क्तौ स्याद्गुरुपादस्तु पूर्ववत् ।
द्वितीयपङ्क्तौ प्रथमादधो लेख्यो लघुर्गुरोः ॥
यथोपरि तथा शेषमूनस्थाने लघु न्यसेत् ।
तृतीयादिषु पङ्क्तिष्वप्येवमेव गुरोरधः ॥
लघु न्यस्यावशिष्टं तु पूर्ववत् परिकीर्तितम् ।
न्यूने मात्रात्रयं देयं तस्मिन्नादौ गुरुर्द्वयोः ॥
कलयोः स्यात्ततः पूर्वं लघुर्देयो भवेत्ततः ।
चतुर्थपङ्क्तावप्येवं पञ्चम्यां तु गुरोरधः ॥
लघुद्वयं लिखेत् पूर्वं शिष्टं तूपरिवद्भवेत् ।
एवं सर्वत्र विज्ञेयः कलाप्रस्तार उत्तमः ॥

नष्टवृत्तपरिज्ञानार्थमाह—

**लर्द्धे ॥ ८ । २४ ॥**

यदैवं विजिज्ञासेत–गायत्र्यां समवृत्तं षष्ठं कीदृशमिति, तदा तमेव षट्सङ्ख्याविशेषमर्धयेत। तस्मिन्नर्धीकृते लघुरेको लक्ष्यते, स भूमौ विन्यास्यः।

इदानीमवशिष्टा त्रिसंख्याविषमत्वादर्धयितुं न शक्यते। तत्र किं प्रतिपत्तव्यमित्याह—

**सैके ग् ॥ ८ । २५ ॥**

अर्ध इत्यनुवर्तते। विषमसङ्ख्यायामेकमधिकं निक्षिप्य ततोऽर्धयेत। तत्रैको गकारो लभ्यते। तं पूर्वलब्धाल्लकारात् परं स्थापयेत्। ततो द्विसंख्यावशिष्यते। पुनस्तामर्धयेत, ततश्चैकलकारं दद्यात्। ततश्चैकसंख्यावशिष्यते। तत्र तावत् सैके गिति लक्षणमावर्तनीयं यावद्वृत्ताक्षराणि षट् पूर्यन्ते। एवं सङ्ख्यान्तरेऽपि योज्यम्[1] ॥

---

उद्दिष्टवृत्तस्य सङ्ख्यापरिज्ञानार्थमाह—

**प्रतिलोमगणं द्विर्लाद्यम् ॥ ८ । २६ ॥**

यस्य वृत्तस्य सङ्ख्यां जिज्ञासेत तद्भूमौ प्रस्तारयेत। ततस्तस्यान्ते यो लकारः सजातीयापेक्षया, तमादौ कृत्वा प्रातिलोम्येन द्विरावर्तयेत। तत्र निराकाराया आवृत्तेरसम्भवात् प्रथमातिक्रमे कारणाभावादेकसङ्ख्या लभ्यते। ततश्चैकसङ्ख्याङ्कमन्त्यलकारस्याधस्तात् स्थापयित्वा द्विगुणयेत्। ततस्तस्मादपनीय तत्पूर्वस्य वर्णस्याधस्तान्निधाय पुनर्द्विगुणयेत्। पुनस्तदपि पूर्वस्य। एवं यावन्ति वृत्ताक्षराणि प्रातिलोम्येन समाप्यन्ते। तत्र याः सङ्ख्या निष्पद्यन्ते, तावतिथं तद्वृत्तमिति ॥

---

तेन द्विगुरुपादस्य पञ्च भेदा भवन्त्यमी।
सर्वान्तमध्यादिगुरुचतुर्लघुगणाः स्मृताः ॥' इति।

वृत्तप्रत्ययकौमुद्यामत्र कश्चिद्विशेष उक्तः—

'एकमात्रे गुरुर्नैव त्रिपञ्चादौ लशेषतः।
आदावेव लघुः स्थाप्यस्ततः प्रस्तारजाः क्रियाः ॥' इति।

1. मात्रानष्टमुक्तं रत्नाकरसेतौ—

'संस्थाप्येह पृथङ्मात्रास्तत्र चाङ्कान् समालिखेत्।
एकद्व्यङ्कतृतीयाङ्कानाद्यमात्रात्रये क्रमात् ॥
ततः पूर्वद्वयोन्मिश्रानन्त्ये पृष्टाङ्कलोपनम्।
पूर्वपूर्वतरस्यापि लोपः सम्भवतो भवेत् ॥
यस्य यस्य भवेल्लोपस्तदधो गुरुता भवेत्।
परया मात्रयेत्यन्तग्मात्रानष्टं वदेत्सुधीः ॥' इति।

तत्र विशेषमाह—

**ततोऽग्ग्येकं जह्यात् ॥ ८ । २७ ॥**

पूर्वोक्ते कर्मणि क्रियमाणे यदि सा सङ्ख्या गकारस्थानमापद्यते, तदा तां द्विगुणयित्वा ततः सङ्ख्यासमुदायादेकं त्यजेत् । ततः पूर्वोक्तं कर्म कुर्यात् । ततः परिपूर्णत्वात्तद्वृत्त-सङ्ख्या सिध्यति[1] ॥

---

प्रस्ताराद्विना वृत्तसङ्ख्यापरिज्ञानार्थमाह—

**द्विरर्द्धे ॥ ८ । २८ ॥**

अपनीत इत्यध्याहारः । यदा जिज्ञासेत–षडक्षरे छन्दसि कति वृत्तानि भवन्ति ? तदा तां छन्दोऽक्षरसङ्ख्यां भूमौ स्थापयित्वा ततोऽर्धमपनयेत । तस्मिन्नपनीते द्वौ लभ्येते । ततस्तां द्विसङ्ख्यां भूमौ पृथक् प्रस्तारयेत । ततः शेषास्त्रयोऽक्षरसङ्ख्यायां भवन्ति ॥

तेषामर्धयितुमशक्यत्वात् किं कर्तव्यमित्याह—

**रूपे शून्यम् ॥ ८ । २९ ॥**

विषमसङ्ख्यातो रूपमपनीय तस्मिन्नपनीते शून्यं लभ्यते । तत्र पूर्वलब्धाया द्विसङ्ख्याया अधस्तात् स्थापयेत्, ततो द्विसङ्ख्यावशिष्यते । ततोऽर्धेऽपनीते पुनर्द्विसङ्ख्या लभ्यते, तां शून्याधस्तात् स्थापयेत् । ततो रूपे शून्यं लभ्यते । तद् द्विसङ्ख्याया अधस्तात् स्थापयेत् ॥

ततः किं कर्तव्यमित्याह—

**द्विः शून्ये ॥ ८ । ३० ॥**

शून्यस्थाने द्विरावृत्तिं कुर्यात् । तत्र निराकाराया आवृत्तेरसम्भवात्, प्रथमातिक्रमे कारणाभावादेकसङ्ख्या लभ्यते । तां शून्ये स्थापयित्वा द्विगुणयेत् । ततो द्वौ भवतः । तस्योपरिष्टादर्धस्थानं द्विसङ्ख्याकं तदपनीय तस्य स्थाने तं द्विसङ्ख्याकं स्थापयेत् ॥

अनन्तरमिदं कर्तव्यमित्याह—

**तावदर्धे तद्गुणितम् ॥ ८ । ३१ ॥**

यदर्धस्थाने स्थितं सङ्ख्याजातं, तत्तावत् गुणितं कुर्यात् । एतदुक्तं भवति—स्वसङ्ख्ययैव गुणयितव्यमिति । ततो द्वौ द्वाभ्यां गुणितौ चत्वारो भवन्ति । तेषामुपरिष्टाच्छून्यस्थानं तत्र तानारोपयेत् । अनन्तरं द्विःशून्य इति द्विगुणिता अष्टौ भवन्ति । तानप्यर्ध-

---

१. मात्रोद्दिष्टमुक्तं जानकीशरणेन—

'विलिख्य रूपे क्रमकाङ्कमत्र गुरूर्ध्वमङ्कं चरमे विलुम्पेद् ।
शिष्टाङ्कमेवं प्रवदेद्विधिज्ञो मात्रीयमुद्दिष्टमिदं जगाद ॥' इति ।

स्थाने निधाय तावद्गुणान् कुर्यात्। ततोऽष्टावष्टाभिर्गुणिताश्चतुःषष्टिर्भवन्ति गायत्रीसमवृत्तानि। अनेनैव न्यायेनाष्टाविंशत्यधिकशतमुष्णिहः, षट्पञ्चाशदधिके द्वे शते अनुष्टुभः, द्वादशोत्तराणि पञ्च शतानि बृहत्याः, चतुर्विंशत्यधिकं सहस्रं पङ्क्तेः, अष्टचत्वारिंशदधिके द्वे सहस्रे त्रिष्टुभः, षण्णवत्यधिकानि चत्वारि सहस्राणि जगत्याः। एवमतिच्छन्दसां कृतीनां च द्रष्टव्यम्॥

**द्विर्द्व्यूनं तदन्तानाम्॥ ८। ३२॥**

गायत्र्यादिवृत्तसङ्ख्याजातं द्विगुणीकृत्य द्वाभ्यामूनं कुर्यात्। तत्तदन्तानां परिमाणं भवति। यस्य छन्दसः सङ्ख्या द्विगुणिता, तत्पर्यन्तानां पूर्वेषामेकाक्षरप्रभृतीनां सङ्ख्या भवतीत्यर्थः॥[1]

---

**परे पूर्णम्॥ ८। ३४॥**

तदेतच्छन्दोवृत्तसङ्ख्याजातं द्विगुणितं पूर्णमेव स्थापयितव्यम्, न द्व्यूनम्। परे छन्दसि

---

१. इतः परम्—

**एकोनेऽध्वा॥ ८। ३३॥**

इति सूत्रमधिकं पठ्यते वैदिकैः, अनुवादोऽप्यस्याग्निपुराणे दृश्यते-(३३५।४) 'अध्वाङ्गुलमधोऽर्धतः। सङ्ख्यैव द्विगुणैकोना' इति। एतदभावे च षट्प्रत्ययपूर्तिरपि न भवति, अध्वप्रत्ययाभावात्। न चासावत्रोपेक्षित एवेति साम्प्रतम्, शास्त्रवैकल्यापत्तेः; 'षण्मात्रमुवाच पिङ्गलः सूत्रम्।...प्रत्ययहेतोः स्वशास्त्रादौ॥' इति परिभाषासाङ्गत्यापत्तेश्च। अतः सम्प्रदायशुद्धमावश्यकं चैतत्सूत्रम्। हलायुधेनाव्याख्यानं त्वनुपलब्धत्वादेवेति 'षष्ठप्रत्ययोऽपि' (पृ० १९६ पं० १) इत्यादितल्लेखादेव व्यक्तम्।

अस्यार्थस्तु—

उक्तरीत्या द्विगुणीकृता वृत्तसङ्ख्या एकेन ऊना अध्वा प्रस्तारलेखनाधिकरणदेशो भवतीति।

अत्र विशेषो रत्नाकरे—

'सङ्ख्यैव द्विगुणैकोनासद्भिरध्वा प्रकीर्तितः।
वृत्तस्याङ्गुलिकी व्याप्तिरधः कुर्यात्तथाङ्गुलिम्॥' इति।

अयमर्थः—अङ्गुलिविस्तारा गुरुलघवो लेख्याः। अधोऽन्तरालदेशेऽप्यङ्गुलविस्तारदेशं त्यक्त्वा वृत्तप्रस्तारभेदा लेख्याः। तथा च त्र्यक्षरादौ पञ्चदशाद्यङ्गुलोच्चता स्पष्टीभवतीति।

अत्र न्यूनाधिकप्रमाणसम्भवेऽप्यनुगतस्य शास्त्रार्थत्वादङ्गुलप्रमाणमुक्तम्। अन्तरदेशेऽङ्गुलत्यागस्तूद्दिष्टानुसारात्। वस्तुतस्तु गुरुलघूनां यत्प्रमाणम्, तत्प्रमाणकान्तरालदेशत्याग इतीह विवक्षितम्। तेन प्रस्ताराधिकरणदेशप्रमाणसङ्ख्यापि तत्प्रमाणगतैवेति ज्ञेयम्।—इति सेतुः।

जिज्ञासिते । तत्संख्याजातं द्विगुणितं परस्य छन्दसो वृत्तानां संख्या भवति । तद्यथा—चतुःषष्टिर्गायत्रीसमवृत्तानां संख्या द्विगुणीकृता सती परस्योष्णिहः समवृत्तसंख्या साष्टाविंशं शतं भवति ॥

---

अतोऽनेकद्वित्रिलघुक्रियासिद्ध्यर्थं यावदभिमतं प्रथमप्रस्तारवन्मेरुप्रस्तारं दर्शयति—

**परे पूर्णमिति[1] ॥ ८ । ३५ ॥**

उपरिष्टादेकं चतुरस्रकोष्ठं लिखित्वा तस्याधस्तादुभयतोऽर्धनिष्क्रान्तं कोष्ठकद्वयं लिखेत् । तस्याप्यधस्तात्त्रयं तस्याप्यधस्ताच्चतुष्टयं यावदभिमतं स्थानमिति मेरुप्रस्तारः ॥ तस्य प्रथमे कोष्ठे एकसंख्यां व्यवस्थाप्य लक्षणमिदं प्रवर्तयेत् । तत्र परे कोष्ठे यद्वृत्तसंख्याजातं तत् पूर्वकोष्ठयोः पूर्णं निवेशयेत् । तत्रोभयोः कोष्ठकयोरेकैकमङ्कं दद्यात्, मध्ये कोष्ठे तु परकोष्ठद्वयाङ्कमेकीकृत्य पूर्णं निवेशयेदिति पूर्णशब्दार्थः । चतुर्थ्यां पङ्क्तावपि पर्यन्तकोष्ठयोरेकैकमेव स्थापयेत् । मध्यमकोष्ठयोस्तु परकोष्ठद्वयाङ्कमेकीकृत्य पूर्णं त्रिसङ्ख्यारूपं स्थापयेत् । उत्तरत्राप्ययमेव न्यासः । तत्र द्विकोष्ठायां पङ्क्तौ एकाक्षरस्य विन्यासः । तत्रैकगुर्वेकलघु-वृत्तं भवति ॥ तृतीयायां पङ्क्तौ द्व्यक्षरस्य प्रस्तारः । तत्रैकं सर्वगुरु, द्वे एकलघुनी, एकं सर्वलघ्विति कोष्ठक्रमेण वृत्तानि भवन्ति ॥ चतुर्थ्यां पङ्क्तौ त्र्यक्षरस्य प्रस्तारः । तत्रैकं सर्वगुरु त्रीण्येकलघूनि त्रीणि द्विलघूनि एकं सर्वलघु ॥ तथा पञ्चमादिपङ्क्तावपि सर्वगुर्वादिसर्वलघ्वन्तमेकद्व्यादिलघु द्रष्टव्यमिति[2] ॥

---

१. सूत्रावृत्तिः शास्त्रसमाप्तिसूचनार्था । २. मात्रामेरुरप्युक्तो **वाणीभूषणे—**

'द्वयं द्वयं समं कोष्ठं कृत्वान्त्येष्वेकमर्पयेत् ।
एकद्व्येकत्र्येकचतुष्कमेण प्रथमेष्वपि ॥
शीर्षाङ्काप्तपराङ्काभ्यां शेषकोष्ठान् प्रपूरयेत् ।
मात्रामेरुरयं दुर्गः सर्वेषामतिदुर्गमः ॥' इति ।

अत्र वृत्तप्रत्ययकौमुद्यां विशेषः—

'मात्रागलक्रिया क्वापि नोक्ता सापीह वर्ण्यते ।
कलासङ्ख्याकमेकाङ्कमौत्तराधर्यतो न्यसेत् ॥
तिर्यग्द्वितीयपङ्क्तौ चोर्ध्वस्थाङ्कं संलिखेद्बुधः ।
तृतीयादावूर्ध्वकोणयुग्माङ्कं च युतं लिखेत् ॥
योजनासम्भवे युक्तमङ्कमेव लिखेदधः ।
प्राग्युताङ्कावथ त्यक्त्वा पुनर्युक्त्वा पुरो लिखेत् ॥
युत्वा युत्वाधराङ्कान्तं लिखेद्धीमानधः स्थितैः ।
तिर्यगङ्कैर्द्वितीयाद्यैरेकगुर्वादयो मताः ॥

षष्ठप्रत्ययोऽप्यध्वपरिच्छित्तिरित्येके । सोऽत्यल्पत्वात् पुरुषेच्छाविधायित्वेनानियतत्वाच्च नोक्तः । एवं प्रत्ययसमासः समाप्तः ॥

पिङ्गलाचार्यरचिते छन्दःशास्त्रे हलायुधः ।
मृतसंजीविनीं नाम वृत्तिं निर्मितवानिमाम् ॥

इति श्रीभट्टहलायुधकृतायां छन्दोवृत्तौ मृतसंजीविनीनाम्न्यामष्टमोऽध्यायः ॥

---

यत्कलान्वयिनाङ्केनाथैकगुर्वादिबोधनम् ।
गुरुद्विगुणितोनाङ्कास्तेनाङ्केन कला मताः ॥
आद्यैकाङ्कैः कलाः सर्वा ज्ञेया अथ तदूर्ध्वगैः ।
अङ्कैरूनकलायोगि गुर्वादिज्ञानमीरितम् ॥' इति ।

१. एतत् 'एकोनेऽध्वा' (८।३३) इति सूत्रादर्शनमूलकमेवेत्युक्तमेव पुरस्तादिति ।

सञ्जीवितामपि विलोक्य हलायुधेन
छन्दश्चितिं भुजगराजकृतां क्षताङ्गीम् ।
नानानिबन्धगहनानि चिरं विगाह्य
काञ्चिद् **'विशल्यकरणी'**मयकाहृतेयम् ॥ १ ॥
मूर्तिं यथा फणिपतेरिह लक्ष्मणाख्यां
प्रागक्षतामतनुत श्वसनस्य सूनुः ।
दिव्यां **विशल्यकरणी**मुपहृत्य तद्वत्
यत्नादिमामकरवं कृतिमुज्ज्वलाङ्गीम् ॥ २ ॥
**केदारे**ऽङ्कुरिता पूर्वं सिक्ता **सागर**वारिणा ।
वर्धिता सर्वतः सेयं **विशल्यकरणी** मया ॥ ३ ॥
भट्टधूपकरा**नन्तयज्ञेश्वर**परिष्कृता ।
श्रीवेदपुरुषस्यैषा पादयोरस्तु पादुका ॥ ४ ॥

इति श्रीमद्धूपकरोपाह्व-विद्यालङ्कार-भट्टानन्तयज्ञेश्वरपरिष्कृता
विशल्यकरण्याख्या छन्दःशास्त्रटिप्पणी ।

**समाप्तश्चायं ग्रन्थः ।**